Statement about the ownership and other particulars about newspapers

# ŚODHAJYOTIḤ

UGC CARE Listed & a Peer Reviewed Research Journal
of Shree Somnath Sanskrit University

## FORM IV

(See Rule & under Section 5 of the Press and Registration of Book Act. 1867)

| | | |
|---|---|---|
| 1. | *Place of the Publication:* | Shree Somnath Sanskrit University, Veraval, Gujarat – 362266 |
| 2. | *Periodicity of its Publication :* | Annual (Yearly) |
| 3. | *Printer's Name :* | Zenith Graphic |
| | *Nationality :* | Indian |
| | *Address :* | 1st Floor, Vraj Plaza, Jain Derasar Road, Veraval, Dist. Gir Somnath, Gujarat – 362266 |
| 4. | *Publisher's Name :* | The Registrar |
| | *Nationality :* | Indian |
| | *Address :* | Shree Somnath Sanskrit University, Rajendra Bhuvan road, VERAVAL, Dist. Gir Somnath, Gujarat – 362266 |
| 5. | *Editor's Name :* | Pr.f. (Dr.) Lalitkumar Patel |
| | *Nationality :* | Indian |
| | *Address :* | Shree Somnath Sanskrit University, Rajendra Bhuvan road, VERAVAL, Dist. Gir Somnath, Gujarat – 362266 |
| 6. | *Names & Address of Individuals : who own the newspaper and partners or shareholders holding more than one percent of the total capital* | Shree Somnath Sanskrit University, Rajendra Bhuvan Road, VERAVAL, Dist. Gir Somnath, Gujarat – 362266 |

I, Dr. Dasharath Jadav, Registrar, Shree Somnath Sanskrit University, Veraval, Gujarat hereby declare that the particulars given above are true to the best of my knowledge and belief.

(Dr. Dasharath Jadav)
Signature of Publisher

# शुभाशंसनम्

यथा स्वतन्त्रतायाः अमृतकाले G-20 देशानामध्यक्षत्वं वहन्नस्माकं देशः आत्मनिर्भरतां प्रति गमनशीलः सन् राष्ट्रियशिक्षानीत्यनुगुणं शिक्षण-कला-कौशल-संशोधनादिक्रियाकलापेषु श्रेष्ठतायै सततं यतमानो वर्तते, तथैव तस्याङ्गतया विश्वविद्यालयोऽस्माकं 12B समवाप्य राष्ट्रियमूल्याङ्कनप्रत्यायनपरिषदा (NAAC) A+ श्रेण्यां प्रत्यायितः सन् राष्ट्रियशिक्षानीतिं (NEP-2020) अनुपालयन् संस्कृतज्ञान-विज्ञानपरम्परां संरक्षन् बहुविषयकतां नवाचारान् चाङ्गीकृत्य शास्त्रचर्यामवलोक्य सरलमानकसंस्कृतविधिना संस्कृतशास्त्रादीनामध्ययनाध्यापनं विधाय, सर्वत्र संस्कृतमयतां सोपानीकुर्वन् गुणवत्तायुक्तनैकसंशोधनप्रकाशनोपक्रमान् विरच्य शास्त्रगतान् अचिन्तितान् अंशान् सन्मुखीकरोति **"शोधज्योतिः"** इति शोधपत्रिकया।

प्रतिशास्त्रं तद्गताः प्रमाणगताः खण्डनमण्डनमण्डिताः सिद्धान्ताः सन्ति। तैः सिद्धान्तैः युक्ता वैज्ञानिकी प्रमाणप्रतिपादिता काचित् विशिष्टा व्यवस्थाऽपि शास्त्रेषु विलसति। तदनुसृत्य शास्त्रगत-दुरूहता तद्गतदुर्ज्ञेयता च दूरीभवेदिति धिया अनन्तरकालीनैः विद्वद्भिः आचार्यैः व्याख्या-भाष्य-टीकादिप्रणयनेन तत्तच्छास्त्राणां तद्गतान् विशिष्टान् अंशान् स्पष्टीकर्तुं नैकविधाः प्रयासाः कृताः। ते सर्वेऽपि यत्नाः प्रयासाश्च मन्ये शास्त्रमर्यादां परिपालयन्तः नूत्नं संशोधनं नवाचारं च प्रदर्शयन्तः शास्त्रालोकमुपकुर्वन्ति। शास्त्रार्थं विशदीकर्तुं संशोधनप्रवृत्तिं प्रेरयितुं प्रकाशयितुं च एतादृशाः यत्नाः विधीयन्ते श्रीसोमनाथसंस्कृतविश्वविद्यालयेन **"शोधज्योतिः"** इति शोधपत्रिकामाध्यमेन। शास्त्रेषु सन्निहितानां विविधानामंशानां गूढातिगूढरहस्यमयतत्त्वानां संस्कृत-हिन्दी-आङ्ग्लभाषामाध्यमेन अचिन्तितपूर्वं मुखं प्रदर्शयन्ति पत्रिकासन्निविष्टाः प्रतिभाविशेषं प्रतिभासयन्तः विद्वद्वरेण्यैः आचार्यैः परीक्षिताः समीक्षिताः चिताः उत्तमाः **५१** शोधलेखाः अवश्यमेव शास्त्राणां गहनाध्ययनं कर्तुम् इच्छतां संशोधकानां शोधच्छात्राणां च महते लाभाय भविष्यतीति मे प्रत्ययः। शास्त्रसमुत्पिज्ञाः अवश्यमेवऽत्रत्यान् शोधलेखान् तद्गतसंशोधनसामर्थ्यं तद्गततत्त्वं चावलोक्य सन्तुष्टिमवाप्नुयुः इति आशासे। विदुषां प्रसन्नतायै क्रियमाणेयं शोधलेखगता शास्त्रसंशोधनचर्चा संशोधनकर्तॄणां ज्ञानाभिवृद्धये कल्पते।

अस्यां खलु शोधपत्रिकायां विलसति क्वचित् वैदिकवाङ्मयगतविज्ञानविषयः, क्वचित् रामायणादीतिहासग्रन्थगततत्त्वसंशोधनम्, क्वचित् पुराणशास्त्रीयतत्त्वानि शोभन्ते, क्वचित् साहित्यशास्त्रीयाः सिद्धान्ताः मन आह्लादयन्ति, क्वचित् काव्यगता भावाभिव्यक्तिर्भावकान् प्रीणयति,

क्वचिद् आधुनिककाव्यशास्त्रगता विषयविशेषा विशेषयन्ति शोधपत्रिकामिमाम्, क्वचिद् आयुर्वेदीय-यौगिक-धर्मशास्त्रीयसिद्धान्तानां त्रिवेणी प्रवहति अस्याम्, क्वचिद् आङ्ग्लभाषयोपनिबद्धा अपि लेखाः संस्कृतमेव परिपोषयन्तीति सर्वविधवैविध्यसुमवारसमेयं शोधपत्रिका स्वकीयं ज्ञानसौरभं प्रसार्यतां सर्वासु दिक्षु इति कामये।

The 4th volume of the **UGC CARE listed** and a peer reviewed University Research Journal ***Śodhajyotiḥ*** is very significant to the development of new ideas and the promotion of research in Sanskrit language and literature in particular and humanities in general. Approximately 16 research papers in English from all over the nation have been rigorously reviewed before being accepted for this volume. According to their subject and their merit by professionals, the best research papers are included in this volume. They cover different corners of Indian Knowledge Systems like *Kuntaka: The First Adaptation Theorist, A Novel Approach to Managerial Excellence from the verses of Bhagavad Gita in the Industrial Revolution 4.0, Usefulness of Jain Dharma, The Role of Sardar Patel in the Upliftment of Women, Śatakakāvyas on Indira Gandhi - A Study, Dialogic Classroom & Text Comprehension: Towards A Pedagogy of Reading* etc. I personally thank all of the authors who contributed to this 4th volume.

महतो मोदस्य विषयो वर्तते यत् विश्वविद्यालयस्य **"शोधज्योतिः"** इतीयं शोधपत्रिका **UGC CARE संरक्षित-अनुसूच्यां समाविष्टा**, पुनश्च भगवतः श्रीसोमनाथस्यानुग्रहेण तस्याः चतुर्थोऽयं शोधलेखसङ्ग्रहात्मकः अङ्कविशेषः प्रकाशतां प्राप्नोति। शोधपत्रिकागतशोधलेखानां माध्यमेन सर्वेषां संस्कृत-संस्कृतिसंरक्षकाणां ज्ञानपिपासूनां पिपासातृप्तिर्भूयादिति भगवद्भुवनभवभयहरस्य हरस्य अनाथनाथस्य भगवतः सोमनाथस्य पादपद्मयोः प्रार्थये। इति शम्॥

भवदीयः
प्रो. (डॉ.) ललितकुमारः पटेलः)
प्र. कुलपतिः

# सम्पादकीयम्

महतः प्रमोदस्य विषयो विद्यते यत् श्रीसोमनाथसंस्कृतविश्वविद्यालयस्य **शोधज्योतिः** इति नामाख्यायाः शोधपत्रिकायाः चतुर्थोऽङ्कः प्रकाश्यमानो विद्यते। इतोऽपि महतः प्रमोदस्य विषयो विद्यते यत् शोधपत्रिकेयं पुनरीक्षिता सन्दर्भिता च पूर्वत एव आसीद् इदानीं 2022तमे वर्षे UGC CARE अनुसूच्यामपि समाविष्टा विद्यते। 2022तमे वर्षेऽस्मिन् वयं निश्चितसमयावधौ संस्कृतभाषायाम्, हिन्दीभाषायां तथा च आङ्ग्लभाषायां लिखिताः यथाविधि समीक्षानन्तरं द्विपञ्चाशत् शोधलेखाः प्रकाशनाय प्राप्तवन्तः। यथा वयं जानीमो यद् यदि वयं वर्तमानकालानुरोधेन आत्मानम् उत्कर्षं वाञ्छामः, सफलतां वाञ्छामः तर्हि समयेन सह गमनम् अत्यावश्यकं विद्यते। समयेन सह गमनम् अस्माकं धर्मोऽपि विद्यते। समयेन सह अद्यतनतासम्पादनम् अस्माभिः करणीयम्। साम्प्रतं तदेव वस्तु, तदेव विषयः स्वीक्रियते यः समसामयिको भवति, तर्कसंगतो भवति, वैज्ञानिको भवति, समयानुरोधेन उपयुक्तो भवति, सर्वजनग्राह्यो भवति, सर्वजनोपयोगी भवति। संस्कृतवाङ्मये सर्वं विद्यते। इदानीम् आवश्यकता विद्यते साम्प्रतानुसारं संस्कृतवाङ्मयस्य प्रतिपाद्य-विषयवस्तुनः व्याख्यायाः, प्रस्तुतेः, सम्यगर्थज्ञानस्य, सम्यगर्थसम्पादनस्य, संस्कृतवाङ्मयगतविषयवस्तुनः अद्यतनता-प्रस्फोटनस्य च। एतत्सर्वं मनसि निधाय श्रीसोमनाथसंस्कृतविश्वविद्यालयेनापि **शोधज्योतिः** इति नामाख्या शोधपत्रिका प्रकाश्यते। यत्र संस्कृतवाङ्मयस्य सर्वान् विषयान् संस्कृतसम्बद्धविषयान् च आधृत्य शोधलेखाः प्रकाशिताः भवन्ति। प्रत्यक्षरूपेण किञ्चिदप्रत्यक्षरूपेण वा साहित्यसम्बद्धप्रतिपाद्यविषयानाधृत्य लिखिताः सप्तदशशोधलेखाः, व्याकरणविषयसम्बद्धाः नवशोधलेखाः, दर्शनविषयसम्बद्धाः चत्वारः शोधलेखाः, पुराणविषयसम्बद्धाः पञ्चशोधलेखाः, ज्योतिषविषयसम्बद्धाः त्रयः शोधलेखाः, अन्यविषयसम्बद्धाः चतुर्दशशोधलेखाः अत्र प्रकाशिताः भविष्यन्ति। यद्यपि समीक्षिताः समेऽपि शोधलेखाः ज्ञानवर्द्धकाः महत्त्वपूर्णाश्च सन्ति तथापि केचन शोधलेखाः स्थालीपुलाकन्यायेन अत्र प्रस्तूयन्ते। यथा-आधुनिक-काव्यलक्षणविमर्शकः **आधुनिक-काव्यलक्षणविमर्शः,** टीकाधारितः समीक्षात्मकः शोधलेखः **अर्थद्योतनिकाटीकाधारेण अभिज्ञानशाकुन्तलस्य रससमीक्षा**, काव्यकारणनिरूपणात्मकः **काव्यालङ्कारकारिकायां काव्यकारणनिरूपणम्**, सामाजिकीं व्यवस्थामनुसृत्य **मध्यमव्यायोगे सामाजिकी व्यवस्था,** पत्रकाव्यमाश्रित्य **श्रीसत्यव्रतशास्त्रिणां पत्रकाव्येषु महाकाव्यानामभ्यासवैदुष्यं ध्वन्यते,** भारतीयसंस्कृतिमाश्रित्य **महाकविकालिदासकृत अभिज्ञानशाकुन्तलम् नाटक पर भारतीय संस्कृति का प्रभाव,** कुन्तकमाश्रित्य **Kuntaka: The**

First Adaptation Theorist, अभिनवगुप्तमाधारीकृत्य Linguistic peculiarities in Abhinavagupta's *Gītārthasaṅgraha,* मीमांसाविषयकः **सहृदयप्रमाणमीमांसा,** योगसम्बन्धी **भारतीय दर्शनों के अनुसार जीवन में योग का महत्त्व,** आधुनिकसञ्चारमाध्यममाश्रित्य Effectiveness of modern media solutions Package for Teaching Reading Comprehension in teaching of English language and communication skills, बालश्रममाधृत्य Child Labour in Brick Kiln Industry: A Case Study of Dhubri District of Assam, भारतीयस्त्रीमश्रित्य Role of Indian Women in Rites and Rituals: A Historical Review, श्रीमद्भगवद्गीतायाः प्रबन्धकीयाम् उत्कृष्टतामाश्रित्य A Novel Approach to Managerial Excellence from the verses of Bhagavad Gita in the Industrial Revolution 4.0, आत्मनिर्भरतापरकः **संस्कृत वाङ्मय में शैक्षिक आत्मनिर्भरता,** समाजविषयकः **पुराणैः वेदाध्ययने समाजाधिकारः,** पञ्चाङ्गविषयकः **पञ्चाङ्गस्य सैद्धान्तिकस्वरूपम्,** प्रत्याख्यानपरकभाष्यमाश्रित्य **पाणिनीयसूत्राणां प्रत्याख्यानप्रसङ्गतो भाष्यकर्त्तुरभिप्रायविमर्शः,** सूत्रमाधारीकृत्य **सर्वादीनि सर्वनामानि सूत्रस्य भाष्यदृशा विमर्शः।** अत्रनामोल्लेखपूर्वकैः शोधलेखैः सह सर्वेऽपि शोधलेखाः **"शोधज्योतिः"** इति नामाख्यायाः शोधपत्रिकायाः सर्वानि उद्देश्यानि पूर्णाणि करिष्यन्ति सहैव संस्कृतजगतः पाठकानाम्, किञ्च अन्येषां पाठकानामपि, ज्ञानपिपासूनां ज्ञानजिज्ञासूनाञ्च जनानां कृते लाभकराः उपयोगिनश्च भविष्यन्ति इति आशया सह-

**प्रबन्ध-सम्पादकः**

प्रो. (डॉ.) विनोद कुमार झा

# विषयानुक्रमणिका

वर्षम्-०४ अङ्कः-०४ शोधज्योतिः
जनवरी-दिसम्बर, २०२२ ISSN-2350-0700

# काव्यालङ्कारकारिकायां काव्यकारणनिरूपणम्

डॉ. ललितकुमार पटेल[१]

## प्रास्ताविकम्

कार्यं कदापि कारणं विना न भवति। कारणानि मिलित्वा किमपि कार्यम् उत्पादयन्ति। यथा जगति तथैव काव्येऽपि भवति। काव्यं तु केनचित् हेतुना उत्पद्यते। काव्यकारणविषये साहित्याचार्येषु अनेकानि मतानि वर्तन्ते। केषाञ्चित् मतानुसारं काव्यस्य अनेकानि कारणानि भवन्ति, केषाञ्चिच्च मतानुसारं विविधतत्त्वानि सम्मिल्य एकमेव कारणं जायते। अत्र पूर्वेषां साहित्याचार्याणां काव्यकारणविचारान् आदौ विमृशामः।

भामहाचार्यस्य मतानुसारं शास्त्राध्ययनं कर्तुं जडबुद्धिः जनः अपि शक्नोति। तत्र गुरूपदेशः एव आवश्यकः भवति किन्तु काव्यं तु कस्यचित् प्रतिभासम्पन्नस्य एव जायते।[२] अर्थात् काव्यकरणे प्रतिभायाः आवश्यकता भवति। प्रतिभावान् कविः यदि चिरस्थायीनीं कीर्तिम् इच्छति तर्हि तेन विविधानां शास्त्राणां ज्ञानं प्राप्तव्यम्। एतैः शास्त्रैः प्रतिभा उत्पद्यते तथा प्रतिभया काव्यम् उत्पद्यते इति भामहाचार्यस्य मतं वर्तते।[३]

आचार्यः वामनः काव्याङ्गानि निरूपयति। तानि काव्याङ्गानि काव्ये कारणरूपाणि सन्ति। त्रीणि काव्याङ्गानि सन्ति लोकः विद्या प्रकीर्णं चेति।[४] तत्र लोकः अर्थात् लोकस्य स्थावरजङ्गमात्मकस्य व्यवहारज्ञानम्।[५] शब्दशास्त्रम्, अभिधानकोशः, छन्दोविचितिः, कलाः, कामशास्त्रम्, दण्डनीतिश्च विद्याः

---

*[१] प्र.कुलपतिः, श्रीसोमनाथसंस्कृतविश्वविद्यालयः, वेरावलम्*

*[२] गुरूपदेशादध्येतुं शास्त्रं जडधियोऽप्यलम्। काव्यं तु जायते जातु कस्यचित्प्रतिभावतः॥ भामहकृतकाव्यालङ्कारः १/५, प्रो. डॉ. रमेश म. शुक्ल, पार्श्व पब्लिकेशन, अहमदाबाद, २००६, पृ. ३९*

*[३] अतोऽभिवाञ्छता कीर्तिं स्थेयसीमाभुवः स्थितेः। यत्नो विदितवेधेन विधेयः काव्यलक्षणः॥ शब्दश्छन्दोऽभिधानार्था इतिहासाश्रयाः कथाः। लोको युक्तिः कलाश्चेति मन्तव्या काव्यवैखरी॥ तत्रैव – १/८, ९, पृ. ४०*

*[४] लोको विद्या प्रकीर्णञ्च काव्याङ्गानि। वामनाचार्यः, काव्यालङ्कारसूत्रवृत्तिः १/३/१, डॉ. आर. पी. महेता, सरस्वती पुस्तक भण्डार, अहमदाबाद, २००७-०८, पृ. ४५*

*[५] लोकवृत्तं लोकः। तत्रैव – १/३/२, पृ. ४६*

सन्ति।[६] प्रकीर्णम् अर्थात् काव्यपरिचयः, काव्यकरणप्रवृत्तिः, काव्यकर्तुः उपदेशः, तेन उपदेशेन शब्दानाम् आवापोद्धरणे, प्रतिभानं तथा अवधानम्।[७] एतत् सर्वं मिलित्वा काव्यकरणे सहायकं भवति। वामनः काव्यकारणसन्दर्भे सूक्ष्मतया विचारं कृत्वा एतानि तत्त्वानि प्रत्यपादयत् इति प्रतीयते।

आचार्यः मम्मटः काव्यप्रकाशे काव्यस्य हेतु सन्दर्भे त्रयः मिलित्वा एकं हेतुं स्वीकरोति। शक्तिः निपुणता अभ्यासः इति त्रयः सम्मिल्य काव्ये हेतुः भवति।[८] शक्तिः अर्थात् कवित्वबीजरूपः संस्कारःविशेषः, शक्त्या विना काव्यं न जायते इति तस्य मतम्। यदि शक्तिं विना काव्यं क्रियते तत् काव्यं हास्यायतनं भवति। लोकस्य शास्त्राणां च निपुणता व्युत्पत्तिः इति उच्यते। अभ्यासः अर्थात् काव्यकरणे कृतकाव्यानाम् उपदेशेन पुनः पुनः प्रवृत्तिः। एतत्त्रयमपि सम्भूय एक एव हेतुः, हेतवः न इति मम्मटस्य मतम्।[९] यथा कुम्भकारः घटं निर्माति तत्र दण्डः चक्रं चीवरं चेति त्रयाणामपि सहभागिता भवति, न तु एकस्य एव। तथैव काव्यकरणे शक्तिः निपुणता अभ्यासश्च मिलित्वा एकः हेतुः भवति इति तात्पर्यम्।

आचार्यः हेमचन्द्रः काव्यस्य कारणं प्रतिभां मनुते। प्रतिभया एव काव्यं जायते।[१०] व्युत्पत्तिः अभ्यासश्च प्रतिभायाः संस्कारकौ स्तः। प्रधानं कारणं तु प्रतिभा एव।[११] हेमचन्द्रः प्रतिभायाः द्वौ भेदौ प्रत्यपादयत् सहजा औपाधिकी चेति। आवरणभङ्गात् स्वतः उत्पन्ना प्रतिभा सहजा कथ्यते[१२] तथा मन्त्रदेवतादिकृपया जाता प्रतिभा औपाधिकी कथ्यते।[१३] एवम् आचार्यः हेमचन्द्रः प्रतिभां मुख्यं कारणं तथा व्युत्पत्त्यभ्यासौ तस्याः संस्कारकौ मनुते।[१४]

पण्डितराजः जगन्नाथः काव्यस्य कारणत्वेन केवलां प्रतिभामेव स्वीकरोति। सा प्रतिभा अर्थात् काव्यनिर्माणेन अनुकूलानां पदार्थानाम् उपस्थितिः।[१५] काव्यं निर्मातुकामस्य काव्यानुकूलपदार्थानाम् उपस्थितिः प्रतिभा, सा हि काव्ये हेतुः इति तात्पर्यम्।

---

[६] *शब्दस्मृत्यभिधानकोशाच्छन्दोविचितिकलाकामशासत्रदण्डनीतिपूर्वा विद्याः। तत्रैव – १/३/३, पृ. ४६*

[७] *लक्ष्यज्ञत्वमभियोगी वृद्धसेवाऽवेक्षणं प्रतिभानमवधानं च प्रकीर्णम्। तत्रैव – १/३/११, पृ. ५०*

[८] *शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात्। काव्यज्ञशिक्षयाऽभ्यास इति हेतुस्तदुद्भवे॥ मम्मटः, काव्यप्रकाशः १/३, आचार्य विश्वेश्वर, ज्ञानमण्डल लिमिटेड, वाराणसी, २०१४, पृ. १६*

[९] *तत्रैव – १/३ वृत्तिः, पृ. १६, १७*

[१०] *प्रतिभाऽस्य हेतुः। हेमचन्द्रः, काव्यानुशासनम्– १/४, डॉ.रामानन्द शर्मा, चौखम्बा कृष्णदास अकादमी, वाराणसी, २०००, पृ. ०५*

[११] *इदं प्रधानं कारणम्। व्युत्पत्त्यभ्यासौ तु प्रतिभाया एव संस्कारकाविति वक्ष्यते। तत्रैव – १/४ वृत्तिः, पृ. ०५*

[१२] *सावरणक्षयोपशममात्रात्सहजा॥ तत्रैव – १/५, पृ. ०५*

[१३] *मन्त्रादेरौपाधिकी॥ तत्रैव – १/६, पृ. ०६*

[१४] *व्युत्पत्त्यभ्यासाभ्यां संस्कार्या॥ तत्रैव – १/७, पृ. ०६*

[१५] *तस्य च कारणं कविगता केवला प्रतिभा। सा च काव्यघटनानुकूलशब्दार्थोपरिस्थितिः। पण्डितराजः जगन्नाथः, रसगङ्गाधरः, प्रथमाननम्, पण्डित मदनमोहन झा, चौखम्बा विद्याभवन, वाराणसी, २०१३, पृ. २७*

एवं प्रकारेण अत्र केषाञ्चित् पूर्वाचार्याणां काव्यकारणमतानि अस्माभिः अवलोकितानि। केचन प्रतिभायाः महत्त्वं स्वीकुर्वन्ति केचन पुनः अभ्यासस्य व्युत्पत्तेश्च तत्र कारणत्वम् अङ्गीकुर्वन्ति। संक्षेपेण काव्यकारणविषये अधोलिखितानि तत्त्वानि ध्यातव्यानि –

- ⇒ काव्यार्थं प्रतिभा अतीव आवश्यकी
- ⇒ विविधानां शास्त्राणां ज्ञानं काव्याय नूनम् आवश्यकम्
- ⇒ काव्यकरणे वारं वारम् अभ्यासः आवश्यकः
- ⇒ ये काव्यं कर्तुं जानन्ति तेभ्यः उपदेशः प्राप्तव्यः

एतैः कारणैः सम्पन्नं काव्यं जगति यशःपात्रं भवति इति नास्ति संशयः। पूर्वाचार्याणां मतानि दृष्ट्वा आधुनिकानां विदुषां काव्यकारणविषये मतानि पश्यामः।

**काव्यालङ्कारकारिकानुसारं काव्यकारणम्**

आचार्य-रेवाप्रसादद्विवेदिनः मतानुसारं काव्ये प्रतिभा कारणम् अस्ति। प्रतिभा अर्थात् अर्थप्रतिभासनम्। तच्च अर्थप्रतिभासनम् उपमीयते द्विवेदिवर्येण- ''प्रज्ञाकादम्बिनीगर्भे यथा विद्युत उदयो भवति तद्वदेव अर्थप्रतिभासनं प्रज्ञागर्भस्य सोदरम्'' इति।[१६] कथनस्य तात्पर्यमस्ति यत् काव्यस्य कारणं प्रतिभा, सा प्रतिभा अर्थप्रतिभासनम्, तच्च अर्थप्रतिभासनं प्रज्ञारूपिण्याः कादम्बिन्याः गदुद्योतेन सह सञ्जातम् उत्पन्नम् अस्ति इति।

अर्थप्रतिभासनं व्याचिकीर्षुः सनातनकविराहवस्तुदर्शनम् अर्थप्रतिभासनम्। तद् वस्तुदर्शनम् अदृष्टचरं पूर्वमदृष्टम्, प्रथमवारमेव दृष्टं सत् अर्थप्रतिभासनम् उच्यते। किञ्च तद् वस्तुदर्शनम् अपूर्वकल्पितं भवेत्।[१७] अत्र वयं द्रष्टुं शक्नुमः यत् रेवाप्रसादद्विवेदिवर्यः प्रतिभानिरूपणविषये पण्डितप्रवरं जगन्नाथं नितराम् अनुसरति। पण्डितराजः जगन्नाथोऽपि काव्ये कारणं प्रतिभामेव अमन्यत।[१८] तन्मतानुसारं प्रतिभा नाम काव्यनिर्माणविधौ अनुकूलशब्दानामर्थानां च उपस्थितित्वम्।[१९] अर्थात् काव्ये प्रसङ्गानुगुणं शब्दप्रयोगः अर्थविन्यासश्च येन कविना साधु क्रियते स हि प्रतिभावान् कविः।

---

[१६] *कारणं प्रतिभा काव्ये सा चार्थप्रतिभासनम्। प्रज्ञाकादम्बिनीगर्भे विद्युदुद्योतसोदरम्॥ रेवाप्रसादः, काव्यालङ्कारकारिका – ०२, चौखम्बा सुरभारती प्रकाशनम्, वाराणसी, १९७७, पृ. ०९*

[१७] *अर्थप्रतिभासनं नाम अदृष्टपूर्वकल्पितादिवस्तु दर्शनम्। तत्रैव – ०२ वृत्तौ, पृ. ०९*

[१८] *तस्य च कारणं कविगता केवला प्रतिभा। जगन्नाथः, रसगङ्गाधरः, प्रथमाननम्, पण्डित मदनमोहन झा, चौखम्बा विद्याभवन, वाराणसी, २०१३, पृ. २७*

[१९] *सा च काव्यघटनानुकूलशब्दार्थोपस्थितिः। तत्रैव, पृ. २७*

आचार्य-रेवाप्रसाद-द्विवेदी कारिकायाः उत्तरपदं वृतौ व्याकुर्वन् आह – रसगङ्गाधरे मङ्गलाचरणे कादम्बिन्याः यद् वर्णनं जगन्नाथेन कृतं तत्र प्रतिभया जगन्नाथस्य प्रज्ञा एव दीप्यते। तस्याः प्रज्ञायाः कादम्बिन्याः विद्युन्माला या वर्तते तया सह उत्पन्नम् अर्थप्रतिभासनम् तत्त्वेन अध्यवसिता श्रीकृष्णमूर्तिः इत्यर्थोपस्थितिः एव प्रतिभा।[२०] यथा कादम्बिन्याः विद्युदुद्योतस्य च अविनाभावसम्बन्धो विद्यते तथैव प्रज्ञायाः अर्थप्रतिभासनस्य चास्ति अविनाभावसम्बन्धः।[२१]

प्रज्ञा-प्रतिभासने कादम्बिनी-विद्युदुद्योतयोः दृष्टान्ते न निरूप्य दृष्टान्तान्तरेण पुनरपि निरूपयन्नाह आचार्यः रेवाप्रसादः – यथा नारदः स्वस्य पूर्वस्मिन् जन्मनि भगवतः कृपाप्रसादमवाप्य द्वितीये जन्मनि तस्याः कृपायाः फलत्वेन भगवतो दर्शनं चकार तथैव इयं प्रतिभा जन्मान्तरसंस्कारम् अपेक्षते।[२२] एषा प्रतिभा क्वचित् योगिनामपि अभिलक्ष्यते। समाधौ वर्तमानानां योगिनां हृदये या ज्योतिष्मती प्रवृत्तिरुदेति सा प्रतिभायाः स्वसा कथ्यते।[२३] प्रतिभायाः बीजं कुत्रचित् समाधिरपि दृश्यते। उक्तं च योगसूत्रेषु भगवता पतञ्जलिना-विशोकावा ज्योतिष्मती,[२४] तत्र शब्दार्थविकल्पैः सङ्कीर्णा सविकल्पा समापत्तिः,[२५] ऋतम्भरा तत्र प्रज्ञा,[२६] प्रातिभाद् वा सर्वम्[२७] इति च। अत एव रेवाप्रसादो ब्रूते यत् शङ्कराचार्यप्रभृतयः योगिनः अपि कवयः दृश्यन्ते[२८] यतो हि प्रतिभायाः उपकारकः समाधिः भवति।

इयं प्रतिभा रेवाप्रसादमते द्विविधा – स्वयम्भूः सहेतुश्च। तत्र स्वयम्भूः प्रतिभा आदिकवेः वाल्मीकेः तथा सहेतुः प्रतिभा अन्यत्र कविगता वर्तते।[२९] प्रथमायाः प्रतिभायाः विषये पूर्वकारिकासु उक्तमेव नारदादिदृष्टान्तेन द्वितीया प्रतिभा कालिदासादिषु कविषु दृश्यते। कालिदासः स्वयं भगवतीप्रसादात् प्रसिद्धः कविर्बभूव। त्रिविक्रमभट्टश्च सरस्वत्याः प्रसादेन नलचम्प्वा रचनां व्यधात्। श्रीहर्षोऽपि चिन्तामणिमन्त्रप्रभावात् कृतनैषधकाव्यः।[३०] एवं प्रतिभा सहेतुः कस्याश्चित् देवतायाः प्रसादफलीभूता दृश्यते।

---

*[२०] कादम्बिनीसादृश्येन प्रज्ञायाः सरसत्वं पूर्णत्वं च, विद्युत् उद्योतस्य सादृश्येन च प्रतिभासनं चित्रितम्। रेवाप्रसादः, काव्यालङ्कारकारिका – ०२ वृत्तौ, चौखम्बा सुरभारती प्रकाशनम्, वाराणसी, १९७७, पृ. १०*

*[२१] अविनाभावोऽत्र विवक्षितः कादम्बिनी-विद्युदुद्योतयोः..... । तत्रैव – ०२ वृत्तौ, पृ. १०*

*[२२] नारदादि-कृपापात्र-चेतोधातौ जगत्प्रभोः। प्रथमं स्व-स्वरूपस्य दर्शनं यत् तदीदृशम्॥ तत्रैव – ०३ वृत्तौ, पृ. ११*

*[२३] समाधौ योगलग्नानां हृदये विषयान्विता। ज्योतिष्मती प्रवृत्तिर्या तत्स्वसा प्रतिभा कवेः॥ तत्रैव – ०४ वृत्तौ, पृ. १३*

*[२४] पातञ्जलयोगसूत्रम् – १/३६, प्यारेलाल प्रभुदयाल, भारतीय कला प्रकाशन, दिल्ली, २००६, पृ. १८*

*[२५] तत्रैव – १/४२, पृ. २१*

*[२६] तत्रैव – १/४८, पृ. २५*

*[२७] तत्रैव – १/३३, पृ. ८२*

*[२८] रेवाप्रसादः, काव्यालङ्कारकारिका – ०४ वृत्तिः, चौखम्बा सुरभारती प्रकाशनम्, वाराणसी, १९७७, पृ. १४*

*[२९] स्वयम्भूश्च सहेतुश्चेत्यसौ लोके द्विधा स्थिता। आदिमोऽऽदिकवौ दृष्टा द्वितीयाऽन्यत्र दृश्यते॥ तत्रैव – ०५, पृ. १५*

*[३०] तत्रैव – ०५ वृत्तिः, पृ. १५, १६*

द्वितीयायाः प्रतिभायाः अनेकानि कारणानि भवन्ति किन्तु तस्याः एकमेव कारणं भवति – सत्वोद्रेकः।[३१] कानि कारणानि भवन्ति इत्यत्राह आचार्यो रेवाप्रसादः – अद्दष्टम्, व्युत्पत्तिः, अभ्यासश्चेति त्रयः प्रकाशकारेण रसगङ्गाधरकारेण च उक्ताः। मम्मटमते तु त्रयाणामपि मिलित्वा कारणत्वम्, जगन्नाथमते तावत् सर्वेषां प्रतिभां प्रति कारणत्वम्। किन्तु रेवाप्रसादमते सर्वेषाममीषां प्रतिभां प्रति कारणत्वमेव।[३२] अद्दष्टं यदुक्तं तस्य भेदद्वयम् – जन्मान्तरीया महापुरुषप्रसादजन्या शक्तिः इति। व्युत्पत्तिरपि द्विधा – विविधग्रन्थामामधीत्या लब्धा अथ च काव्यकरणे पौनः पुन्येन प्रवृत्त्या उपलब्धा। एवं प्रतिभां प्रति एतेषां करणत्वं निश्चप्रचम्।[३३]

प्रतिभायाः कारणं तु सत्वोद्रेकः। यदुक्तं विश्वनाथेन दर्पणकृता-''रजस्तमोभ्यामस्पृष्टं मनः सत्त्वमिहोच्यते''[३४] तदेव भङ्ग्यन्तरेण ब्रूते रेवाप्रसादः – रजस्तमोभ्याम् अतीता या अवस्थितिः भवति सा प्रतिभां प्रति सत्वोद्रेकः इति नाम्नी भवति। तेनैव सत्त्वोद्रेकेण प्रतिभा वैचित्र्यं प्राप्नोति।[३५] एकस्य कवेः काव्ये यः अर्थः उपनिबध्यते तम्वार्थम् अन्यः कविः स्वकाव्ये भङ्ग्यन्तरेण उपनिबध्नाति तत्र कारणं केवलं कविगता प्रतिभा।[३६] अस्मिन्नेव सन्दर्भे ध्वनिकारेण उक्तं यत् –

**''वाचस्पतिसहस्राणां सहस्रैरपि यत्नतः।**
**निबद्धा सा क्षयं नैति प्रकृतिर्जगतामिव॥''**[३७]

एवं रेवाप्रसादानुसारं काव्ये प्रतिभा एव कारणम्। द्विविधा प्रतिभा तत्र प्रोक्ता, आद्या स्वयम्भूः आदिकवेः वाल्मीकेः अन्या सहेतुः अन्येषु कविषु इति। पण्डितवर्यस्य रेवाप्रसादस्य मतानुसारं द्विविधा प्रतिभा इत्थमत्र प्रतिपादिता।

## सन्दर्भग्रन्थाः

१. भामहकृत-काव्यालङ्कारः, प्रो. डॉ. रमेश म. शुक्ल, पार्श्व पब्लिकेशन, अहमदाबाद,२००६
२. वामनाचार्यः, काव्यालङ्कारसूत्रवृत्तिः, डॉ. आर. पी. महेता, सरस्वती पुस्तक भण्डार, अहमदाबाद, २००७-०८

---

*[३१] द्वितीया या भवन्त्यत्र करणानि बहून्यपि। कारणं तु भवत्यत्र सत्त्वोद्रेको हि केवलः॥ तत्रैव – ०६, पृ. १७*
*[३२] तत्रैव – ०६ वृत्तिः, पृ. १७*
*[३३] तत्रैव – ०६ वृत्तिः, पृ. १८*
*[३४] विश्वनाथः, साहित्यदर्पणः ३/३ वृत्तिः, डॉ. सत्यव्रतसिंह, चौखम्बा विद्याभवन, वाराणसी, २०१०, पृ. ८६*
*[३५] रजस्तमोनुवेधानां सङ्ख्यातीता तु या स्थितिः। उद्रेकोऽप्यनया सोऽप्यमतिवैचित्र्यमश्नुते॥ तत्रैव – ०७, पृ. २०*
*[३६] एकस्यापि कवेः काव्यप्रबन्धे येन दृश्यते। बन्धभेदो मधूद्याने वृक्ष-श्री-भेदसोदरः॥ तत्रैव – ०८, पृ. २०*
*[३७] आनन्दवर्धनः, ध्वन्यालोकः ०४/१०, आचार्य जगन्नाथ पाठक, चौखम्बा विद्याभवन, वाराणसी, २०११ पृ. ४९३*

३. मम्मटः, काव्यप्रकाशः, आचार्य विश्वेश्वर, ज्ञानमण्डल लिमिटेड, वाराणसी, २०१४
४. हेमचन्द्रः, काव्यानुशासनम्, डॉ. रामानन्द शर्मा, चौखम्बा कृष्णदास अकादमी, वाराणसी, २०००
५. पण्डितराजजगन्नाथः, रसगङ्गाधरः, प्रथमाननम्, पण्डित मदनमोहन झा, चौखम्बा विद्याभवन, वाराणसी, २०१३
६. रेवाप्रसादद्विवेदी, काव्यालङ्कारकारिका, चौखम्बा सुरभारती प्रकाशनम्, वाराणसी, १९७७
७. पातञ्जलयोगसूत्रम्, प्यारेलाल प्रभुदयाल, भारतीय कला प्रकाशन, दिल्ली, २००६
८. विश्वनाथः, साहित्यदर्पणः, डॉ. सत्यव्रतसिंह, चौखम्बा विद्याभवन, वाराणसी, २०१०
९. आनन्दवर्धनः, ध्वन्यालोकः, आचार्य जगन्नाथ पाठक, चौखम्बा विद्याभवन, वाराणसी, २०११

~~~~~~~~~~~
~~~~~~~~~~~

वर्षम्-०४ अङ्कः-०४ शोधज्योतिः
जनवरी-दिसम्बर, २०२२ ISSN-2350-0700

# भारतीयव्याकरणपरम्परायामयोगवाहविचारः

डॉ. कालिन्दी शुक्ल[१]

०. प्रातिशाख्यग्रन्थेषु पाणिनीयव्याकरणपरम्परायां शिक्षाग्रन्थेषु च **अयोगवाह** इति संज्ञाविशेषेण प्रयुक्तानां वा संज्ञाविशेषं विना प्रयुक्तानां **अनुस्वारजिह्वामूलीयोपध्मानीयविसर्जनीया-नुनासिक्ययमानां** या शास्त्रीयविचारणा वर्तते तस्या अध्ययनमस्मिन् शोधलेखे प्रस्तूयते।

१. पाणिनिरष्टाध्याय्यां संस्कृतभाषाया व्याकरणं सूत्रशैल्या अवर्णयन्। प्रारम्भ एव चतुर्दशसूत्रेषु वर्णसमाम्नायमुपदिशति स्म[२]। पाणिनिना[३] वर्णसमाम्नाये वैज्ञानिकक्रमेण वर्णोपदेशः कृतोऽस्ति। तद्यथा समानाक्षराणि सन्ध्यक्षराण्यन्तःस्थास्स्पर्शोष्मव्यञ्जनानि च। एकैकस्य सूत्रस्यान्तेऽनुबन्धमुपयुज्य प्रत्याहारानरचयत्। येन लाघवेन शास्त्रप्रवृत्तिर्सम्भवति[४]। एतानि सूत्राणि माहेश्वराणि सूत्राणि शिवसूत्राणि वा इति नाम्नाऽपि प्रख्यातानि वर्तन्ते[५]। संस्कृतभाषाया द्विचत्वारिंशद्वर्णा माहेश्वरसूत्रेषु पाणिनिना उपदिष्टास्सन्ति तत्र सस्वराणां दीर्घप्लुतभेदान् न उपदिशति स्म। किन्तु सोऽष्टाध्याय्यां **अणुदित्सवर्णस्य चाप्रत्ययः।** इत्यनेन सवर्णग्राहकसूत्रेणानुपदिष्टानां दीर्घप्लुतादिभेदानां ग्रहणकव्यवस्थां चकार। भाषायां सभेदस्वरेभ्यः व्यञ्जनेभ्यश्चान्ये ध्वनयोऽपि श्रवणपथमायान्ति। तद्यथा विसर्जनीयजिह्वामूलीयोपध्मानीयय-मानुस्वारनासिक्याः। पाणिनिना एते ध्वनयो वर्णसमाम्नाये नोपदिष्टाः। ग्रहणकशास्त्रेणापि एतेषां ग्रहणकव्यवस्था कृता नास्ति। यदि सूत्रस्वरूपो वर्णोपदेशः साधुत्वबोधनार्थं प्रत्याहारसिद्धया च लाघवपूर्णशास्त्रप्रवृत्तये एवास्ति तर्हि तु वर्णसमाम्नाये एतेषान्ध्वनीनामुपदेशः कार्यैव इत्यनेन गृहीतेन महाभाष्यकारो हयवरट् सूत्रभाष्ये प्रयोजनवार्तिकस्युद्भावनां करोति। तद्यथा –**इदं विचार्यते।**

---

*[१] एसोसीएट प्रोफेसर, एस.वी.आई कोलेज,अमदावाद, Email- kalindis1@gmail.com, (M) 9924518300*

*[२] अइउण्। ऋऌक्। एओङ्। ऐऔच्। हयवरट्। लण्। ञमङणनम्। झभञ्। घढधष्। जबगडदश्। खफछठथचटतव्। कपय्। शषसर्। हल्।*

*[३] Cardona 1980: 160:1.3.4 "Authorship of the śiva-sūtras,Pāṇini – A survey of Research."*

*[४] अथ किमर्थो वर्णानामुपदेशः। प्रत्याहारार्थः। प्रत्याहारो लाघवेन शास्त्रप्रवृत्यर्थः। अथ प्रत्याहाराः। (काशिकावृत्तिः। प्रथमो भागः पृ. १)*

*[५] इति माहेश्वराणि सूत्राण्यणादिसंज्ञार्थानि.....। सिद्धान्तकौमुदी*
*नृत्तावसाने नटराजराजौ ननाद ढक्कां नवपञ्चवारम्।*
*उद्दर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम्॥ (नन्दीकेश्वरकृतकाशिकायां चतुर्दशसूत्रीविवृत्ति)।*

**इमेऽयोगवाहाः न क्वचिदुपदिश्यन्ते श्रूयन्ते च तेषां कार्यार्थ उपदेशः कर्तव्यः। के पुनरयोगवाहाः। विसर्जनीयजिह्वामूलीयोपध्मानी-यानुस्वारानुनासिक्ययमाः[६]।**

१.१ एतेषां विसर्जनीयादीनान्ध्वनीनाम् **अयोगवाह** इति शब्देन व्यवहारस्य प्रयोजनमित्थं प्रतिपादयति **यदयुक्ता वहन्ति अनुपदिष्टाश्च श्रूयन्ते।** विधानस्यास्य फलितार्थैतत्यदेते ध्वनयो वर्णसमाम्नाये पठिता न सन्ति। ग्रहणकसूत्रेणापि तेषां बोधो न भवति। उभयेष्वनुपदिष्टत्वेन प्रत्याहारैरप्ययोग-वाहानाम्प्रत्यायनं न सम्भवति[७]। तथापि वाग्व्यवहारे प्रयुज्यन्ते श्रूयन्ते च[८]। योगं न वहन्तीत्ययोगवाहाः। न योगवाहा इत्ययोगवाहाः। अर्थात् येषां ध्वनीनां वर्णसमाम्नाये योगोपदेशो नास्ति किन्तु शास्त्रेषु प्रयोगो दृश्यते तेऽयोगवाहाः। उद्योते नागेशच्छायाव्याख्यायां मन्नदेवगुरुश्चास्मिन्नेवार्थेऽयोगवाहसंज्ञायारन्वर्थताम्प्रति-पादयति[९]। इत्थं महाभाष्यकारो विसर्जनीय-जिह्वामूलीयोपध्मानीयानुस्वारानुनासिक्ययमानाम्बोधनाय **अयोगवाह** इति संज्ञाया व्यवहारः केवलमष्टाध्याय्या वर्णोपदेशम्प्रत्याहाराञ्चानुलक्ष्यैवाकरोत्।

१.१.१ प्रातिशाख्येषु शिक्षाग्रन्थेषु पाणिनीयापाणिनीय व्याकरणेषु च विसर्जनीयादीनां ध्वनीनामुपदेशोऽस्ति। तत्रापि केचनाचार्याः तेषां बोधनाय **अयोगवाह** इति संज्ञां प्रयुक्तवन्तस्सन्ति[१०]। ऋक्तन्त्रे वाजसनेयिप्रातिशाख्ये च स्वरव्यञ्जनानामुपदेशानन्तरमयोगवाहानामुपदेशोऽस्ति[११]। ऋक्तन्त्रे तु व्यञ्जनानां कृते **योगवाह** इति संज्ञा प्रयुक्तास्ति[१२] प्रत्याहारसिद्धये च वर्णोपदेशो वर्तते[१३]। किन्तु ऋक्तन्त्रे

---

*[६] हयवरट्।....पूर्वोपदेशे कित्वप्रतिषेधो व्यलोपवचनं च। वार्तिकभाष्यम्। (व्याकरणमहाभाष्यम्।प्रथमो भागः) एफ कीलहोर्न (पृ. २८,२९)*

*[७] अनुपदिष्टाश्च अयुक्ताःप्रत्याहारलक्षणेन पाठाभावादसंबद्धा इत्यर्थः। उपदेशो द्विविधः पाठः ग्रहणकशास्त्रेण प्रत्यायनं च। स द्विविधोऽप्येषां नास्तीत्यर्थः। हयवरट्॥ ६॥ भाष्यप्रदीप। (व्याकरणमहाभाष्यम्।प्रथमो भागः, पृ. १२७)*

*[८] श्रूयन्ते चेति॥ प्रयोगे विसर्जनीयस्य स इत्यादिसूत्रेषु चेति भावः। भाष्यप्रदीपोद्योते छायाव्याख्या। व्याकरणमहाभाष्यम्। (प्रथमो भागः)। (पृ. १२७)*

*[९] १ अतोऽयुक्ता इत्यर्थः। एवं च अक्षरसमाम्नायेषुऽयुक्ता सन्तो वहन्ति=प्रयोगं निर्वाहयन्तीत्ययोगवाहपदव्युत्पत्तिर्दर्शिता। हयवरट्॥ ६ भाष्यप्रदीपोद्योतः। व्याकरणमहाभाष्यम्। (प्रथमो भागः)। (पृ. १२७, १२८.)*

*२ न विद्यते योगः सम्बन्धो येषां समाम्नाये तेऽयोगाः। वहन्ति ते वाहाः, अयोगाश्च ते वाहाश्चेति बोध्यः। हयवरट् सूत्रभाष्ये भाष्यप्रदीपोद्योते छाया व्याख्या। व्याकरणमहाभाष्यम्। (प्रथमो भागः)। (पृ. १२७, १२८)*

*[१०] वाजसनेयि प्रातिशाख्यमृकतन्त्रव्याकरणमहाभाष्यम्पाणिनीयशिक्षाः इत्येतेषां ग्रन्थकर्तारः।*

*[११] १ अथायोगवाहाः। अः इति विसर्जनीयः।" ×क इति जिह्वामूलीयः। ×प इत्युपध्मानीयः। हुमित्यनुनासिकः। अथ यमाः कुं इति खुं इति गुं इति घुमिति यमाः। अनन्त्यान्त्यसंयोगे मध्ये यमः पूर्वगुणः। अथानुस्वारौ अं आं त्यनुस्वारौ॥ १.२ ऋक्तन्त्रम्। (पृ.-२)*

*२ अथायोगवाहाः॥ १८॥ ×क इति जिह्वामूलीयः॥ १९॥ ×प इत्युपध्मानीयः॥ २०॥ अं इत्यनुस्वारः॥ २१॥ अः इति विसर्जनीयः॥ २२॥ हुँ इति नासिक्यः॥ २३॥ कुँ खुँ गुँ घुँ इति यमाः॥ २४॥ वाजसनेयि प्रातिशाख्यम्। (८.१ तः २४ पर्यन्तम्)।*

*[१२] २.७ तः ११ पर्यन्तम्। ऋक्तन्त्रम्। (पृ. २।*

*[१३] प्रत्याहारार्थो वर्णोऽनुबन्धो व्यञ्जनं यावतिथस्तावतां तदादीनां ततः पराणाम्॥ ऋकतन्त्रम् १.३।*

प्रत्याहारप्रयोगो न दृश्यते[१४]। ऋक्तन्त्रवाजसनेयिप्रातिशाख्ययोर्वर्णसमाम्नाययोः विसर्जनीय-जिह्वामूलीयोपध्मानीया-नुस्वारनासिक्ययमोपदिष्टाः सन्तोऽ**योगवाहः** शब्देनाख्यां प्रतिपाद्यन्ते। महाभाष्यकारेणाष्टाध्याय्या वर्णसमाम्नायम्प्रत्याहाराञ्चनुलक्ष्यैव य**दयुक्ता वहन्ति नोपदिष्टाश्च श्रूयन्ते** इत्यस्मिन्नर्थे कृता **अयोगवाह** इति संज्ञात्र प्रातिशाख्येऽचरितार्थाः। अतो विसर्जनीयादीनां संज्ञिनां स्वरूपवैशिष्ट्यस्य मीमांसयैव तदर्थे प्रयुक्तो **अयोगवाह** इति संज्ञाया अन्वर्थकत्वं परीक्षणीयम्।

**१.२** अयोगवाहसंज्ञायास्सम्यग्बोधनाय योगवाहसंज्ञा सुष्ठु ज्ञातव्यैव। कौण्डिन्नायन शिक्षाकारः संज्ञायास्स्वरूपमधिकृत्यैवायोगवाहसंज्ञायार्व्याख्यानं करोति[१५]। पतञ्जलेर्मतानुसारं **नोपदिष्टास्सन् श्रूयमाणा अयोगवाहा** इत्यनेन फलति यदु**पदिष्टाश्च श्रूयमाणा योगवाहाः**। कातन्त्रव्याकरणेऽस्मिन्नेवार्थे विसर्जनीयानुस्वारौ योगवाहौ उच्येते। यतः कातन्त्रव्याकरणेऽमूं स्वरव्यञ्जनाभ्यां सहैवोपदिष्टौ स्तः[१६]। ऋक्तन्त्रे कादयो सान्तार्योगवाहशब्देनाख्यास्सन्ति। ऋक्तन्त्रेवाजसनेयिप्रातिशाख्ये च विसर्जनीयजिह्वामूलीयोपध्मानीययमानुस्वारनासिक्योपदिष्टा सन्तो **अयोगवाहा** उच्यन्ते। इत्थमनुपदिष्टाश्च श्रूयन्ते इत्ययोगवाहोपदिष्टाश्च श्रूयन्ते इति योगवाहा इत्यवबोधो न युज्यते। अतो योगवाहपदेन बोध्यः संज्ञायाः स्वरूपं सुष्ठु ज्ञेयम्[१७]।

१.२.१ कौण्डिन्नायनशिक्षायां योगवाहपदेनाख्यातानां संज्ञीनां स्वरूपमित्थं निरूपितमस्ति। तद्यथा **व्यञ्जनेषु मध्ये यानि व्यञ्जनानिस्वपूर्ववर्तिनः स्वरस्याङ्गताङ्गच्छन्त्यपि स्वपरवर्तिनः स्वरस्यापि अङ्गानि भवितुं शक्नुवन्ति तानि व्यञ्जनानि योगवाहा इत्युच्यन्ते। योगेन स्वेन सह युक्तेन स्वरेण सह सर्वथा तत्परवशतया ततः पूर्वं पश्चाद् वा वहन्ति गच्छन्तीति योगवाहाः। योगवाहिन इत्यर्थः। योगवाहा चाऽस्मत्प्रोक्तवर्णसमाम्नायस्थाः कादयो हान्ता वर्णा बोध्याः। इत्थं कादयो हान्ता अर्थात् स्पर्शान्तस्थोष्मव्यञ्जनानि स्वरूपवैशिष्ट्येनैव योगवाहोच्यते न तूपदिष्टत्वातच्छ्रूयमाणत्वेन योगवाहाः।** एवम् रीत्या **अयोगवाह** इति संज्ञापि बोध्यमानानां संज्ञीनां स्वरूपमनुलक्ष्यैव चारितार्थ्यमवाप्नोति[१८]।

---

[१४] *यावतिथः....पराणाम् ----- we do not find anypratyāhār in Ṛktantra. ऋक्तन्त्रम्। (सूर्यकान्तकृता टिप्पणी ३.५। पृ.७)।*

[१५] *योगवाहाः तथाऽयोगवाहा इति क्रमात् द्विधा। वर्गयोः प्रविभज्यन्ते व्यञ्जनानि तु शिक्षकैः॥ कौण्डिन्नायन शिक्षा १०९॥*

[१६] *वर्णसमाम्नाये क्रमपंरिपठितयोरनुस्वारविसर्जनीययोः व्यस्तसंज्ञाविधानमे आभ्यां सह स्वरव्यञ्जनयोरभिन्नसन्निकृष्टत्वाविभावार्थम्। एवं सत्यमी इह योगवाहा एवोच्यन्ते। प्रत्याहारवादिनः पुनराहुः – अयोगवाह इति। कथं पुनरयोगवाहाः। अयुक्ता वहन्ति अनुपदिष्टाश्च श्रूयन्ते। दुर्गटीका। (कातन्त्र व्याकरणम् १.१.९)।*

[१७] *व्यञ्जनानि तु यानि स्युरपि स्वपरवर्तिनः। स्वरस्याङ्गानि तान्येव योगवाहा इति स्मृताः॥ कौण्डिन्नायन शिक्षा ११०॥*

[१८] *स्वपूर्ववर्तिनो यानि स्वरस्याङ्गानि सर्वदा। व्यञ्जनानि तु तान्येवाऽयोगवाहाः प्रकीर्तिताः॥ कौण्डिन्नायन शिक्षा १११।*

१.२.२ यानि व्यञ्जनानि सदैव स्वपूर्ववर्तिन एव स्वरस्याङ्गानि भवन्ति स्वपरवर्तिनस्स्वरस्याङ्गानि भवितुं कर्ह्यपि न शक्नुवन्ति तानि व्यञ्जनानि अयोगवाहा उच्यन्ते। किन्तु विसर्जनीयादिषु ध्वनिषु केचन ध्वनयः पूर्वस्वरस्याङ्गानि न भवन्ति[१९]। इत्थमेते ध्वनय अपि उपर्युक्तलक्षणानुसारमयोगवाहा न सन्ति एवञ्चातिव्याप्तिदोषग्रस्तमेतल्लक्षणम्। अनुस्वारविसर्जनीयौ चानुलक्ष्यैव व्याख्या प्रस्तुता कौण्डिन्नायनशिक्षाकारेण तद्यथा प्रधानतयोर्विसर्गानुस्वारयोर्वर्णसमाम्नायेष्वादितोऽकारयोगेनु पदिश्यमानत्वात्तयोः **अयोगेन वहतः स्वरूपं निर्वहतः** इति **अयोगवाह** इति व्यवहारः। इदं लक्षणं जिह्वामूलीयोपध्मानीययमनासिक्यान्विषये अचरितार्थं भवति तेनेदं लक्षणमप्यव्याप्तिदोषग्रस्तम्।

१.२.३ वाजसनेयिप्रातिशाख्ये स्वरव्यञ्जनानन्तरमयोगवाहानामुपदेशोऽस्ति। वर्णसमाम्नायस्यान्ते च अष्टम अध्याये च प्रातिशाख्यकारो वर्णगणनां प्रस्तौति। तद्यथा **एते पञ्चषष्टिवर्णा ब्रह्मराशिरात्मवाचः। (१.२५) त्रयोविंशतिरुच्यन्ते स्वराः शब्दार्थचिन्तकैः। द्विचत्वारिंशद् व्यञ्जनान्येतावान्वर्णसंग्रहः। (८.३८)** स्वरव्यञ्जनात्मक ब्रह्मराशिषु अयोगवाहाः परिगणिता न सन्ति तस्मात्ते स्वरव्यञ्जनेभ्य भिन्नाः किन्तु अकारादिभिर्ध्वनिभिश्रुतिविशेषात्मलाभं वहन्तीत्यस्मिन्नर्थे उवटो वाजसनेयि-प्रातिशाख्येऽयोगवाहशब्दस्य व्युत्पत्तिं प्रस्तौति। तद्यथा **अकारादिना वर्णसमाम्नायेन सहिता सन्तः एते आत्मलाभं प्राप्नुवन्तीत्ययोगवाहाः[२०]।**

**२** ऋग्वेदप्रातिशाख्ये वर्णोपदेशो नैवास्ति[२१]। किन्तु, विष्णुमित्रकृतायां वर्गद्वयवृत्त्यां वर्णमालाया उपदेशो वर्तते। तत्र स्वरव्यञ्जनानन्तरं **अः ᳵक ᳶप अं** इत्येतेषां ध्वनीनां लिपिसहितं किन्तु विसर्जनीयादिसंज्ञारहितञ्चोपदेशः कृतो वर्तते[२२]। अत्र यमनासिक्यावुपदिष्टौ न स्तः। तौ तु शास्त्रे यथाक्रमेण ध्वन्यागमपटल उच्चारणदोषपटले च निर्दिष्टौ स्तः। तैत्तिरीयप्रातिशाख्येऽपि अथ वर्णसमाम्नायः इति प्रथमं सूत्रम्। किन्तु तत्र भाष्यकारः तैत्तिरीयशाखायां प्रचलितध्वनीनां परिगणनं करोति।

---

[१९] *१ वासशब्दादनुस्वारः पूर्वस्याङ्गं न काठके। सर्वसम्मतशिक्षा ३८। (परिशिष्ट कौण्डिन्नायन शिक्षा। पृ. ८२५)*
*२ नासिक्या न खलु पूर्वस्य स्वरस्याङ्गानि भवन्ति॥ तैत्तिरीय प्रातिशाख्यम् २.१.८।*

[२०] *अथाऽयोगवाहाः। उवटभाष्यम्। (वाजसनेयि प्रातिशाख्यम् ८.१८)। (पृ. ३८८, ३८९ )*

[२१] *ननु कथं वर्णसमाम्नायमनुपदिश्यैव "अष्टौ समानाक्षराण्यादितः" इति। ... नैषः दोषः उपदिष्टो वर्णसमाम्नायो विद्यते। तत्र यावन्तो वर्णा अस्यां शाखायामुपयोक्ष्यन्ते तावतां संज्ञां कर्तुं तमेव वर्णसमाम्सायमुररीकृत्याह-"अष्टौ समानाक्षराण्यादितः"। .... सोऽयमाचार्यप्रवृत्या पाठक्रमोऽनुमीयमानो लौकिकवर्णसमाम्नायस्य द्विधा पाठं गमयति। अतोऽयं लौकिको वर्णसमाम्नायो गृह्यते। उवटभाष्यम्। (ऋग्वेदप्रातिशाख्यम् १.३)। (पृ. ४४,४५.)*

[२२] *विष्णुमित्रकृतवर्गद्वयवृत्तिः। ऋग्वेदप्रातिशाख्यम् (पृ. ३१,३२)*

२.१ शास्त्रान्वेषणेन ज्ञायते विभिन्नेषु ग्रन्थेष्वयोगवाहानां विषये वैमत्यमिति। पाणिनीय-व्याकरणपरम्परायां व्याकरणमहाभाष्ये विसर्जनीयजिह्वामूलीयोपध्मानीया-नुस्वारानुनासिक्ययमा वाजसनेयिप्रातिशाख्ये चानुस्वारयमविसर्जनीयजिह्वामूलीयोपध्मानीयाः। ऋक्तन्त्रे च विसर्जनीयजिह्वामूलीयोपध्मानीयनु-नासिकयमानुस्वारौ इति षड्ध्वनयोऽयोगवाहसंज्ञयाभिहिता-स्सन्ति।

तैत्तिरीयप्रातिशाख्ये विसर्जनीयजिह्वामूलीयोपध्मानीयानुस्वारनासिक्येति पञ्च। ऋग्वेद-प्रातिशाख्ये अं अः ≍क≍प इति चत्वार अयोगवाहसंज्ञारहिताभिहिता ध्वनयस्सन्ति। योगवाह इति संज्ञाया उल्लेख ऋक्तन्त्रे कातन्त्रव्याकरणे च दृश्यते। ऋक्तन्त्रे व्यञ्जनानि योगवाहपदेन समाख्या सन्ति। कातन्त्रव्याकरणे तु अनुस्वारविसर्जनीयौ योगवाहौ। वेदानां विविधासु शाखासु प्रवर्तमानानां विसर्जनीय-जिह्वामूलीयोपध्मानीययमानुस्वारनासिक्यध्वनीनां प्रयोगस्वरूपो विभिन्नोऽस्ति। सर्वासु शाखासु नासिक्यं नास्ति। तेषां संख्याविषयेऽपि वैविध्यं वर्तते। महाभाष्यस्य विभिन्नेषु सम्पादनेषु **अनुनासिक्य आनुनासिक्य नासिक्यश्च** एते त्रयः पाठान्तरा विद्यन्ते।

३. इदानीं विचार्यते ध्वनीनामभ्यासेनैव तेषां स्वरूपज्ञानं भवति।

३.१ **यमः।**

एषो यमसंज्ञको वर्णो वेदेषु प्रसिद्धः। व्याकरणग्रन्थेषु प्रातिशाख्यग्रन्थेषु शिक्षाग्रन्थेषु च यमस्य स्वरूपादिविषये विस्तृतं विवरणं कृतमाचार्यैः।

३.१.१ सिद्धान्तकौमुद्यां भट्टोजिदीक्षितो यमस्य व्याख्यां प्रस्तौति **वर्गेष्वाद्यानां चतुर्णां पञ्चमे परे मध्ये यमो नाम पूर्वसदृशो वर्णः प्रातिशाख्ये प्रसिद्धः। पलिक् क् नी। चख् ख् नतुः। अग् ग् निः। ध् ध् न्तीत्यत्र क्रमेण क-ख-ग-घेभ्यःपरे तत्सदृशा एव यमाः॥** व्याख्यानेनानेन यद् भट्टोजिदीक्षितस्य मतेन यमो आगम इति। **सदृशौ द्वौ वर्णौ** (तत्पञ्चमे परे) इत्यस्मिन्नर्थे **यम** इति संज्ञा आन्वर्थिकी। पाणिनीयशिक्षायां पञ्जिकाभाष्यकार **यच्छन्तीति यमाः। स्वयमेवोपरमेरन्।** इति प्रकारेण यमश्शब्दस्यान्वर्थक्यं प्रतिपादयति।

तैत्तिरीयप्रातिशाख्ये **नासिक्यः** इति शब्द यमस्य पर्यायरूपेण प्रयुक्तो वर्तते[२३]। **स्पर्शादनुत्तमादुत्तमपरादानुपूर्व्यान्नासिक्याः॥ (२१.१२)** नासिक्यविधायकसूत्रे पदक्रमसदनभाष्येन

[२३] *तान्यमान्येके॥ तैत्तिरीयप्रातिशाख्यम् २१.१३।*

तैत्तिरीयशाखायां यमो आगमात्मक इति[२४]। तैत्तिरीयप्रातिशाख्ये नासिक्यः पूर्वस्वरस्याङ्गं न भवति[२५]। वाजसनेयिप्रातिशाख्ये **विच्छेद** इति संज्ञा यमस्य पर्यायत्वेन प्रयुक्तास्ति। **अन्तःपदेऽपञ्चमःपञ्चमेषु विच्छेदम्। (४.१६३)** इत्यस्य सूत्रभाष्यानुसारेण **रुक्म**पदे **क** कारस्य द्विर्भावे प्राप्ते विच्छेदमापद्यते। उवटभाष्येन ज्ञायते यद्वाजसनेयिप्रातिशाख्ये **विच्छेद (यमः)** आगमात्मकोऽस्ति[२६]। ऋक्तन्त्रेऽपि सूत्रकारो यमस्य स्वरूपमित्थं निरूपयति **अनन्त्यान्त्यसंयोगे मध्ये यमे पूर्वगुणः। (१.२)** भट्टोजिदीक्षितः शब्दकौस्तुभे **पूर्वगुण इति** पदस्यार्थः **पूर्वभक्त** इति प्रतिपादयन् यममागमात्मकं मन्यते[२७]। अथर्वप्रतिशाख्येऽपि यमानामुपदेशोऽस्ति।**तमौ। यथास्थानं यमः। (३.१.३६) गमौ। यथास्थानं यमः। (३.१.३७) कनौ। यथास्थानं यमः। (३.१.३८) पनौ। यथास्थानं यमः। (३.१.३८)** श्रीसूर्यकान्तमहाभागः यमानागमत्वेन प्रतिपादयति[२८]।

पाणिनीयशिक्षाकारो वर्णसमाम्नाये त्रिषष्टिर्चतुर्षष्टिर्वा वर्णानां परिगणनां प्रस्तौति। यत्र चत्वारो यमाः परिगणिताः[२९] सन्तः शब्दकौस्तुभकारो यमस्य वर्णान्तरत्वेन प्रतिपादनं करोति[३०]।

३.१.२ ऋग्वेदप्रातिशाख्ये यमस्वरूपविषये विस्तृतं विवरणं वर्तते। तत्र **स्पर्शा यमानुनासिकाः स्वान्परेषु स्पर्शेष्वनुनासिकेषु।( ऋ.प्रा.६.२९)**इति यमविधायकं सूत्रमस्ति। सूत्रस्यास्य भाष्ये उवटो यमस्वरूपमित्थं स्पष्टीकरोति। तद्यथा **अनुनासिकाः स्पर्शाःस्वान्यमानापद्यन्ते अनुनासिकेषु स्पर्शेषु परेषु।** विधानेनानेन ऋग्वेदप्रातिशाख्ये यमो वर्णागमो नास्ति किन्तु वर्णापत्तिरस्तीति। पाणिनीयशिक्षायाः पञ्जिकाभाष्येऽपि

---

[२४] *अनुत्तमात् स्पर्शात् उत्तमपरादानुपूर्व्येण नासिक्यानागमो भवति। द्वितीयस्पर्शाद् द्वितीय नासिक्याः, तृतीयस्पर्शात्तृतीय नासिक्याः, चतुर्थस्पर्शाच्चतुर्थाः ॥ माहिषेयकृत पदक्रमसदनभाष्यम्। (तैत्तिरीयप्रातिशाख्यम् २१.१२)।*

[२५] *नासिक्याः न खलु पूर्वस्वरस्याङ्गानि भवन्ति। माहिषेयकृत पदक्रमसदन भाष्यम्। (तैत्तिरीयप्रातिशाख्यम्२१.८)। ( पृ.३१८)*

[२६] *पदमध्ये अपञ्चमः स्पर्शः पञ्चमेषु स्पर्शेषु प्रत्ययेषु विच्छेदमापद्यते। विच्छेदो यम इति अर्थान्तरम्। रुक्म इत्यत्र स्वरात् संयोगादिः (वा ४.१०१) इत्यादिना ककारस्य द्विर्भावे कृतेऽनेन सूत्रेण द्वितीयस्य ककारस्य यम इत्ययं कार्यक्रमः क्रियते। यज्ञ इत्यत्र जकारयमौ ञकारस्य संयोगः। उवटभाष्यम्। (वाजसनेयि प्रातिशाख्यम् ४.१६३)।*

[२७] *पूर्वस्य गुण इतिपूर्वभक्त इत्यर्थः एतेनागमत्वं स्फुटीकरोति। शब्दकौस्तुभः। (व्याकरणमहाभाष्यम् १.१.८)।*

[२८] *Suryakant 2008: 54:.....This treatment of yama is extremely meager. Yamas are transitional sounds, assumed to intervene between non-nasal and the following nasal as a kind of nasal counterpart of the non-nasal, and therefore called its yama are twin.(Atharva Prāiśākhya.172b).*

[२९] *.....चत्वारश्च यमाः स्मृताः ॥ पाणिनीयशिक्षा ४।*

[३०] *त्रिषष्टिश् चतुर्षष्टिर्वा वर्णाः सम्भवतो मताः। प्राकृते संस्कृते चापि स्वयं प्रोक्ता स्वयंभुवा॥ स्वराविंशतिरेकश्च स्पर्शानां पंचविशतिः। यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः। अनुस्वारो विसर्गश्च‿क‿पौ चापि पराश्रयौ। दुःस्पृष्टश्चेति विज्ञेयो लृकारः प्लुत एव चेति। अत्र हि यमानां पृथग्गणनात्स्पष्टमेववर्णान्तरत्वम्॥ शब्दकौस्तुभः। (व्याकरणमहाभाष्यम् १.१.८)। (पृ. २४७)।*

मतस्यास्य नारदौदव्रज्योर्मतेन समर्थनं निरूपितमस्ति। तद्यथा- "**यमो वर्णागम इति विधीयते। ... अन्ये तु यमं वर्णापत्तिं मन्यन्ते। तथा च शौनकः –स्पर्शा यमानुनासिकाः स्वान् परेषु स्पर्शेष्वनुनासिकेषु।** पञ्जिकाउवटभाष्ययोरभिप्रायाननुसृत्य विद्वद्वर्यः श्रीमान् वीरेन्द्रकुमारवर्मा महाभागःस्वस्य मतं प्रस्तौति यत्तैत्तिरीयप्रातिशाख्ये वाजसनेयिप्रातिशाख्ये ऋक्तन्त्रे नारदीयशिक्षायाञ्च यथा यमो आगमात्मकोऽस्ति तथैव ऋग्वेदप्रातिशाख्ये यमो आगमात्मको नास्ति किन्त्वनुनासिकस्पर्शैव नासिक्यापत्तिं लभते[३१]। यमः प्रकृतिसदृशैव भवति[३२]। यमः स्वस्य प्रकृतिरूपव्यञ्जनैरभिन्नो वर्तते अर्थात्प्रकृतिमुद्दिश्य विहितानि शास्त्रीयकार्याणि यमेऽपि विधीयन्ते इत्थं यमे अननुनासिकस्पर्शस्य कार्याणि विधीयन्ते[३३]।

ऋग्वेदप्रातिशाख्यस्य **न स्पर्शयोष्मप्रकृतेः परस्ताद्यमापत्तिं। (६.३०)** सूत्रमुद्धृत्य भट्टोजि दीक्षितः शब्दकौस्तुभे प्रतिपादयति यद्दग्वेदप्रातिशाख्येऽपि यमो वर्णान्तरमेवास्ति[३४]। किन्तु, शब्दकौस्तुभ उद्धृतं सूत्रं दोषग्रस्तमस्ति। वस्तुतस्तु **न स्पर्शयोष्मप्रकृतेः <u>प्रतीयाद्य</u>मापत्तिं। (६.३०)**इति सूत्रमस्ति शास्त्रे। तत्र तु **<u>प्रतीयात्</u>** इति पाठोऽस्ति। **<u>परस्तात्</u>** इति पाठो नास्ति। अतः शब्दकौस्तुभकारस्य मतस्य निरसनं भवति। शास्त्रेऽस्मिननुनासिकाः स्पर्शैव यमानापद्यन्ते।

३.१.३ उच्चारणस्थानम्।

प्रातिशाख्यानाञ्च शिक्षाग्रन्थानाञ्च व्याकरग्रन्थानाञ्चानुसारैः यमो नासिक्यध्वनिः वर्तते[३५]। ऋग्वेदप्रातिशाख्यानुसारं प्रकृतिरूपस्पर्शस्योच्चारणस्थानसदृशैव यमस्योच्चारणस्थानं भवति[३६]। यमो

---

*[३१] ऋग्वेदप्रातिशाख्य-एक परिशीलन। डॉ.वीरेन्द्रकुमार वर्मा। (पृ. ७५,७६)*

*[३२] यमः प्रकृत्यैव सदृक्। ऋग्वेदप्रातिशाख्यम् ६.३२।*

*[३३] अनन्यस्तु प्रकृतेः प्रत्ययार्थे वेदितव्यः। प्रत्ययार्थे किमुक्तं भवति ? यमःप्रकृत्याश्रयाणि कार्याणि लभते इत्यर्थः। तस्मात् – उपद्मातेव धमति इत्यत्र सोष्मा तु पूर्वेण सहोच्यते सकृत् (६.२) इति दकारेण सहोच्यते यमः। उवटभाष्यम्। (ऋग्वेदप्रातिशाख्यम् ६.३४)। (पृ. ४१३)।*

*[३४] अत एव प्रातिशाख्ये स्पर्शा यमानुनासिकाः स्वान्परेषु स्पर्शेष्वनुनासिकेष्वप्युपक्रम्य प्रदोधुवच्छ्नश्रुष्वित्यत्र यमं निषेध्रुमारब्धेन स्पर्शयोष्मप्रकृतेः परस्ताद्यमापत्तिमिति सूत्रे परस्ताच्छब्दःप्रयुक्तः। यमःपर्कृत्यैव सदृक् श्रुति र्वा यमेन मुख्यास्ति। समानकालेत्यादि सूत्रान्तरेष्वपि स्पष्टमेव यमस्य वर्णान्तरत्वम्॥ शब्दकौस्तुभः। (व्याकरणमहाभाष्यम् १.१.८)। (पृ. २४६)।*

*[३५] नासिक्ययमानुस्वारान्। १.४८ ऋग्वेदप्रातिशाख्यम्। नासिक्या नासिकास्थानाः। २.४९ तैत्तिरीय प्रातिशाख्यम्। नासिकामूलेन यमाः। १.८२ वाजसनेयि प्रातिशाख्यम्। नासिकायां यमानुस्वारनासिक्याः। २.२.१२ ऋक्तन्त्रम्। अनुस्वारयमानां च नासिकास्थानमुच्यते। २२ पाणिनीय शिक्षा।*

*[३६] कण्ठ्योऽकारः। (१.३८) इत्यतः आरभ्य यानि स्थानान्युक्तानि, अत्र=एषु स्थानेषु, (यमोपदेशः) यमानां स्थानोपदेशः कर्तव्यः नासिक्यास्तावत्सर्व एव यमा उक्ताः, द्वितीयं तु प्रकृत्याश्रयं यतस्थानं तदर्थमिदमुक्तम्। तच्च भवद्यथान्तरं भवति। पल्किनी (५.२.४ ऋ.सं.) इत्यत्र ककारसरूपो यमः,चख्नथुःइत्यत्र खकाररूपो यमः, जग्मतुः इत्यत्र गकारसरूपो यमः,जघ्नतुः इत्यत्र घकाररूपो यमः। उवटभाष्यम्। ( ऋग्वेदप्रातिशाख्यम् १.५०)।*

नासिक्यध्वनिर्वर्तते। केवलं ऋग्वेदप्रातिशाख्ये समानकाला मुखश्रुतिरपि वर्तते[३७]। इत्थं शास्त्रीयप्रमाणैः प्रतीयते यदृग्वेदप्रातिशाख्य अनुनासिक स्पर्शानामेव नासिक्यापत्तिर्भवति। श्रीवीरेन्द्रकुमारवर्मामहाभागः मन्यते यदृग्वेदप्रातिशाख्ये यमस्य नासिक्योच्चारणं तु पश्चाद्गामीसमीकरणया निष्पद्यते[३८]।

वाजसनेयिप्रातिशाख्येऽपि यमार्थे प्रयुक्तो **विच्छेद** इत्यन्वर्थसंज्ञयापि तस्योच्चारणस्वरूपं स्फुट्यते। कौण्डिन्नायनः शिक्षाकारः तस्योच्चारणवैशिष्ट्यपरकान्वर्थक्यमित्थं प्रतिपादयति यद् **यमानां मुखभवाश्रुतिर्न भवतीति तु तेषां शुक्लयजुर्वेदप्रातिशाख्ये विच्छेद इत्यनया अन्वर्थया संज्ञया व्यवहारादपि ज्ञायते। यमस्य मुखभवश्रुतेरभावादि हि तत्कालेन मुखभवयोः पूर्वोत्तरयोर्वर्णयोर्विच्छेद इव क्रियत इति तस्याः संज्ञाया अन्वर्थता बोध्या।** यम इति संज्ञायाम् अप्युच्चारणवैशिष्ट्यपरकं निर्वचनं प्रस्तौति **"यम्यन्ते मुखभवश्रुतिनिरोधेन निवर्त्यन्ते इति यमाः[३९]"** इत्थं यमसंज्ञाया आन्वर्थक्यं न तु **यमल** (twin) अर्थे किन्त्वन्यथा सिद्ध्यति। शास्त्रीयैः प्रमाणैः सिद्धं यद्वाजसनेयिप्रातिशाख्ये नासिक्यागम एव यमः[४०]। तैत्तिरीय प्रातिशाख्ये **नासिक्या नासिकास्थानाः (२.४९)** इति सूत्रेण यमाः शुद्धनासिकस्था एव वर्तन्ते। किन्तु **मुखनासिक्या वा (२.५०)** इत्यनेन केचन विद्वांसः मन्यन्ते यत् प्रकृतिसदृशानां यमानां उच्चारणस्थानं मुखनासिका अस्ति। (याज्ञवल्क्यशिक्षायां यमस्वरूपं **अशरीरं** इति पदेन वर्णितमस्ति। अत्र यमस्य अशरीरस्वरूपं तस्य नासिक्योच्चारणं निर्दिशति[४१]।) किन्तु, भट्टोजिदीक्षित शब्दकौस्तुभे **अशरीरं** पदमित्थं बोधयति। तद्यथा **अशरीरमिति स्वररभक्त्यादिवद्व्यञ्जकलिपिविशेषशून्यमित्यर्थः।** लक्षणवशेनैव तदीयस्थलविशेषनिश्चयसंभवात् लिपिसंप्रदायप्रवर्त्तकाचार्य्यै स्वरभक्तेरिव यमस्यापि व्यञ्जकीभूता लिपिर्न कल्पितेत्यर्थः[४२]।

इत्थं शास्त्रीयैरभिप्रायैर्फलति यत्तैत्तिरीयप्रातिशाख्ये वाजसनेयिप्रातिशाख्ये ऋक्तन्त्रे पाणिनीयव्याकरणे च यमो आगमात्मकःशुद्धनासिक्यश्च वर्तते।

---

[३७] *श्रुतिर्वायमेन मुख्यास्ति समानकाला।....वा अथवा (यमेन =) यमोच्चारणेन, समानकाला, (मुख्या=) मुखे भवा श्रुतिः अस्ति यया यमस्तद्रूपो लक्ष्यते। उवटभाष्यम्। (ऋग्वेदप्रातिशाख्यम् ६.३३)। (पृ. ४१३)।*

[३८] *ऋग्वेदप्रातिशाख्य-एक परिशीलन। डॉ.वीरेन्द्रकुमार वर्मा। (पृ. ७६,७७)*

[३९] *कौण्डिन्नायनशिक्षा। ८४ इत्यत्र उपवन्धानुबन्धः। (पृ. २३५)*

[४०] *द्रष्टव्या पादटीप -२५*

[४१] *अशरीरं यमं विद्यात्।..ततो यमस्य द्वियीयजकारप्रतिरूपकस्य प्रथमजकारसमसंख्यकत्वेन उच्चारणे नासिकयोरेवाऽन्तर्लीनत्वम्॥ इयमेवाऽशरीरिता यमस्य॥ शान्तिव्याख्या। (याज्ञवल्क्यशिक्षाया ९२)। (पृ. १५५)*

[४२] *व्याकरणमहाभाष्यम्। शब्दकौस्तुभः। (व्याकरणमहाभाष्यम् १.१.८)। (पृ. २४७)*

३.१.४ यमानां संख्याः । प्रातिशाख्येषु शिक्षाग्रन्थेषु पाणिनीयव्याकरणे च चतुर्विधार्यमाः परिगणिताः सन्ति । कुं खुं गुं घुं इति[४३] ।

१. अघोषा अल्पप्राणाः-कुं-क च ट त प

२. अधोषा महाप्राणाः –खुं-ख छ ठ थ फ

३. सघोषा अल्पप्राणाः –गुं – ग ज ड द ब

४. सघोषा महाप्राणाः –घुं -घ झ ढ ध भ

ऋग्वेदप्रातिशाख्ये यमो आगमात्मको नास्ति । ऋग्वेदस्य शैशिरीयशाखायामनुनासिक स्पर्शप्रकृतिरेव नासिक्यमापद्यते प्रकृतिनां विंशतित्वाद्दक्पाठिनां विंशतिप्रकारा यमा वर्तन्ते[४४]। वस्तुतस्तु स्वरूपदृष्ट्या चतुर्विधैव सन्ति ।

३.१.५ यमानां अङ्गत्वम् ।

पाणिनीयव्याकरणे यमस्याङ्गत्ववैषयिकं व्याख्यानं न वर्तते। वाजसनेयिप्रातिशाख्यस्य याज्ञवल्क्यशिक्षायाश्च मतयोः यमः पूर्वस्वरस्याङ्गं भवति[४५]। यत्तु तैत्तिरीय प्रातिशाख्यानुसारं नासिक्यः पूर्वस्वरस्याङ्गं न भवति। पूर्वस्याङ्गप्रतिषेधेन ज्ञायते यत्सः परस्याङ्गं भवति[४६]। परस्याङ्गत्वेन ज्ञायते यत्तैत्तिरीयशाखायां यमो व्यञ्जनरूपोऽस्ति । ऋग्वेदप्रातिशाख्ये यमो व्यञ्जनरूपोऽस्ति[४७] ।

३.५ संहितायां यमस्य बोधनाय विशेषं लिपिचिह्नं न वर्तते । केषुचिन्मुद्रणेषु यमा अर्धचन्द्राकृतियुक्तबिन्दुना वा केवलेन बिन्दुरूपाकृतिना वा निर्दिष्टास्सन्ति। आधुनिकैर्विद्वद्भिर्यमस्य निर्देशार्थमाधिकारिकलिपिचिह्ननिर्धारणं कर्तुं पार्यन्ते ।

---

[४३] *यमाश्चत्वारः प्रथमयमद्वितीययमादिभेदेन विभजनात्। अत एव कुं खुं गुं घुं इति यमचतुष्टयं नायसादावुदाहृतम्। कचटतपाः कुः.खफछठथफाःखुरित्यादि परिभाषामाश्रित्य तत्तदुत्तरस्याऽशरीरस्यापि कथञ्चित्प्रदर्शनतात्पर्यकं चेदमितिध्येयम्। शब्दकौस्तुभः। (व्याकरणमहाभाष्यम् १.१.८) । (पृ. २४७)*

[४४] *१. यम-प्रकृत्येव सदृक् इति विंशतिर्यमाबह्वृचानां भवन्ति, स्वरूपैश्चत्वार एव। उवटभाष्यम्। (ऋग्वेदप्रातिशाख्यम् १.५०)। (पृ. ७५)।*

*२. एवञ्च यस्माद्यमा नासिकास्थानाश्चत्वारः सन्तिविंशतिस्थानिनां सरूपा लक्ष्यन्ते। उवटभाष्यम्। (ऋग्वेदप्रातिशाख्यम् ६.३३)। (पृ. ४१३)*

[४५] *१ यमः पूर्वस्याङ्गं भवति। च शब्दात्पूर्ववर्णसहितः। उवटभाष्यम्। (वाजसनेयिप्रातिशाख्यम् १.१०३)। (पृ. ५५,५६) २ अपञ्चमैकपदे संयुक्तं पञ्चमाक्षरम्। उत्पद्यते यमस्तत्र सोऽङ्ग पूर्वाक्षरस्य हि॥ याज्ञवल्क्यशिक्षा ९५। (पृ. १६५)*

[४६] *१. नासिक्या न खलु पूर्वस्वरस्याङ्गानि भवन्ति। तैत्तिरीयप्रातिशाख्यम् २१.८।*

*२ ....पूर्वस्याङ्गप्रतिषेधात् परस्यैव तदङ्गमिति वेदितव्यम्। माहिषेयकृत पदक्रमसदनभाष्यम्। (तैत्तिरीय प्रातिशाख्यम् २१.७)।*

[४७] *सर्वः शेषो व्यञ्जनान्येव।...सर्वः शब्दो यमादीनां परिग्रहणार्थः। उवटभाष्यम्। (ऋग्वेदप्रातिशाख्यम् १.६)।*

यमस्यायोगवाहत्वमित्थं सिद्ध्यति यद्वर्णस्वरूपाभावादेवाक्षरसमाम्नायेऽयुक्तेत्ययोगाः मुखस्थश्रुतिविशेषात्मलाभवाहनाच्च वाहाः। अयोगाश्च ते वाहा **अयोगवाहा** इत्यन्वर्थसंज्ञा यमानां विसर्गादिवत्।

**३.२ हुँ इति नासिक्य अनुनासिक्यो वा।**

३.२.१ पतञ्जलि**र्हयवरट्। (६)** इति माहेश्वरसूत्रभाष्येऽयोगवाहेष्वनुनासिक्यमपि परिगणयति[४८]। किन्तु अयोगवाहानामट्सुशर्षुचोपदेशः कार्य इत्यस्मिन्सिद्धान्तभाष्येऽपि जिह्वामूलीयोपध्मानीय-विसर्जनीयानुस्वाराणामेव विवरणं वर्तते। महाभाष्यस्य कस्मिंश्चित्सम्पादनेषु **नासिक्य** इति पाठान्तरो मुद्रितः[४९]। भट्टोजिदीक्षितोऽपि शब्दकौस्तुभ अयोगवाहेषु विसर्जनीयजिह्वामुलीयोपध्मानीया-नुस्वारयमानेव निर्दिशति। तत्र नासिक्यस्य वा अनुनासिकस्य निर्देशोऽयोगवाहेषु नास्ति[५०]। अतो भाष्यकारो नासिक्य वा अनुनासिक्यपदेन कस्य बोधं कारयति तन्न स्पष्टीभवति। प्रातिशाख्येष्वपि नासिक्यध्वनिविषये भिन्ना अभिप्रायाः प्रवर्तन्ते। महाभाष्यस्यैकस्मिन्सम्पादने **नासिक्यपदेन हुँ ग्राह्यमि**ति निर्देशो वर्तते[५१]।

३.२.२ वाजसनेयिप्रातिशाख्ये **हुँ** नासिक्यस्यायोगवाहेषु निर्देशोऽस्ति। सूत्रकारो ज्ञापयति यन्नासिक्यध्वनिर्माध्यन्दिनशाखायां नास्ति किन्तु काण्वशाखायां कदाचिद्भवेत्[५२]। नासिक्यस्योच्चारणस्थानं नासिका तस्य च करणमोष्ठ्यसदृशमेव[५३]। ऋग्वेदप्रातिशाख्यस्य **नासिक्ययमानुस्वारान्। (१.४८)** इति सूत्रस्योवटभाष्ये नासिक्यपदस्य पूर्वेऽनेकानि पाठान्तराणि लभ्यन्ते[५४]। एवञ्च **हुँ नासिक्य**स्य वर्णमालायां वा कस्मिंश्चित्सूत्रेऽपि निर्देशो नास्ति। किन्तु, उच्चारणदोषपटले यमदोषान्वर्णयन्सूत्रकारो **ऊष्माणं वा**

---

[४८] *।..हयवरट्। ६...विसर्जनीयजिह्वानूलीयोपध्मानीयानुस्वारानुनासिक्ययमाः। व्याकरणमहाभाष्यम्। प्रथमो भागः। (एफ. कीलहोर्न)। (पृ. २८)।*

[४९] *के पुनरयोगवाहाः?। विसर्जनीयजिह्वामूलीयोपध्मानीयानुस्वारनासिक्ययमाः॥ व्याकरणनहाभाष्यम्। (सम्पादकः पं.नन्दकिशोर शास्त्री )। (पृ. १३२)।*

[५०] *हयवरट्।६...अनुपदिष्टत्वे उपदिष्टैरगृहीतत्वे च सति श्रूयमाणा इत्यर्थः। ते च विसर्जनीयजिह्वामूलीयोपध्मानीयानुस्वारयमा इति भाष्यम्। शब्दकौस्तुभः।व्याकरणनहाभाष्यम्। (सम्पादकःपं.नन्दकिशोर शास्त्री )। (पृ. १३३)।*

[५१] *नासिक्यपदेन 'हुँ' इति ऋक्शाखाप्रसिद्धं ग्राह्यम्। 'हुँ इति नासिक्यः' इति कात्यायनप्रातिशाख्यात्।हयवरट्। ६। इति माहेश्वरसूत्रे अयोगवाहनासिक्यविषये सम्पादकेन कृता टिप्पणी। व्याकरणमहाभाष्यम्। (सम्पादकःपण्डित नन्दकिशोर शास्त्री)। (पृ. १३२)*

[५२] *हुङ्कारो नासिक्यः। एते वर्णामाध्यन्दिनानां न सन्तीति भावः।...माध्यन्दिनानामिति ग्रहणात् काण्वादेर्ननिषेधः। अनन्तभट्टभाष्यम्। (वाजसनेयि प्रातिशाख्यम् ८.३९। (पृ. ३९४)*

[५३] *१.यमानुस्वारनासिक्यानां नासिके। वाजसनेयिप्रातिशाख्यम् १.७४। २.समानस्थानकरणा नासिकौष्ठ्या। वाजसनेयि प्रातिशाख्यम् १.८०*

[५४] *अत्र अनेके पाठान्तराः =(१) ँ ं इति नासिक्यः (२) ऀँइति नासिक्यः (३) ं इति नासिक्यः। (४) ङञणनम इति नासिक्यः।ऋग्वेद प्रातिशाख्यम् –एक परिशीलन। डॉ. वीरेन्द्रकुमार वर्मा।*

**घोषिणस्तत्प्रयत्नम्।** (प्रा. **१४.३५)** इत्यनेन सूत्रेण **हुँ** इति नासिक्यं दोषत्वेन निरूपयति[५५]। कारणेनानेन विद्वद्वर्यः वीरेन्द्रकुमारवर्मामहाभागो **नासिक्ययमानुस्वारान्। (१.२८)** इति सूत्रस्य **नासिक्य** इति पदं नासिकयोच्चरितध्वनिरित्यस्मिन्नर्थे प्रतिपादयति। उवटभाष्यस्यार्थं विहाय सः सूत्रमन्यथा बोधयति यद्**यमानुस्वारौ नासिक्यौ ध्वनितौ स्तः** इति[५६]। ऋक्तन्त्रे **हुँमित्यनुनासिकः। (१.२)** इति सूत्रे **अनुनासिक** इति पदं ऋक्तन्त्रकारः प्रयोजयति। श्रीसूर्यकान्त महाभागो द्वौ पाठान्तरौ उद्धरति[५७]। हुँ इति **नासिक्य ऋक्शाखायां प्रसिद्धः (पादटीप. ५०)** इति वचनेन ऋक्तन्त्रोऽभिप्रेतः स्यान्न तु ऋग्वेदप्रातिशाख्यं कदाचिदपि।

तैत्तिरीयप्रातिशाख्ये **हकारान्नणमपरान्नासिक्यम्। (२१.१४) इत्यनेन हँ** कारस्यागमो विधीयते। तद्यथा अह्न इति पदे अह्हँनाम् च अपराह्णे इति पदे अपराह्हँनाम् ब्रह्म इति पदे ब्रह्हँम् च इति प्रकारेण हँ कारस्यागमो भवति। वैदिकाभरणकार **नासिकायां भवो वर्ण नासिक्य (२१.१४)** इत्यर्थे नासिक्य इति संज्ञां द्विधा बोधयति तद्यथा नासिकयोच्चरितो वर्णविशेषो वा **हँ** इति नासिक्यार्थे प्रयुक्तःपारिभाषिक संज्ञा[५८]। तैत्तिरीयप्रातिशाख्ये **न विसर्जनीयजिह्वामूलीयोपध्मानीयानुस्वार-नासिक्यानाम्। (१.१८)** इत्यस्मिन्सूत्रे **नासिक्य**स्य निर्देशोऽस्ति। इत्थं प्रतीयते यत्तैत्तिरीयप्रातिशाख्ये **नासिक्य**पदेन यमागमश्च **हँ** नासिक्यश्च निर्दिष्टौ स्यात्।

३.२.३ महाभाष्यस्य केषुचिन्मुद्रणेषु यत्र **अनुनासिक्य** इति पाठान्तरोऽपि दृश्यते। तत्रानुनासिक्यपदेनानुनासिकध्वनिरभिप्रेतः। **अत्रानुनासिकः पूर्वस्य तु वा। (८.३.२)** इति सूत्रेण विकल्पेनानुनासिक्याधिकारः प्रवर्तते। तत्र काशिकाकारः **सँस्कर्ता** इति पदमुदाहरति। अत्र **सँ** इति वर्णे यो अनुनासिको ध्वनिः स अभिप्रेतः। अनुस्वारानुनासिक्ययोर्मध्ये भेदो वर्तते। तत्तु **अनुनासिकात्परोऽनुस्वारः। (८.३.४)** इत्यनेन सूत्रेण ज्ञायते।

---

[५५] *घोषिण ऊष्मणोरक्तपरात्परम्; (तत्प्रयत्नम्=) तेन घोषिणा तुल्यप्रयत्नम् ऊष्माणं वा आहुर्यमम्।स दोषः। तं वर्जयेद् बुधः।ब्रह्म।अह्ना। उवटभाष्यम्।(ऋग्वेदप्रातिशाख्यम् १४.३५)। (पृ. ७३२)*

[५६] *ऋग्वेदप्रातिशाख्यम् -एक परिशीलन। वीरेन्द्रकुमार वर्मा। (पृ. ३९)*

[५७] *ँ नासिक्यः A.B.D हिमित्यनुनासिकम्। C.। पाठान्तराः पादटीपे। ऋक्तन्त्रम्१.२। एवं डॉ.सूर्यकान्तमहाभागःकृता टिप्पणी १२ (पृ. १०,११)*

[५८] *नासिक्या नासिकास्थानाः। प्रथमे पादटीपे सम्पादकीयविवरणम्। तैत्तिरीय प्रातिशीख्यम् २.४९। (पृ. ६९)*

३.२.४. सर्वेष्वपि प्रातिशाख्येष्वनुनासिकस्य विधानमस्ति[५९]। ऋक्तन्त्रे च ऋग्वेदप्रातिशाख्ये च तस्य **रक्त** इति संज्ञा विहितास्ति[६०]। किन्तु नैकेषु प्रातिशाख्येष्वनुनासिक्यस्यायोगवाहत्वेन निर्देशः कृतो वर्तते। तेन कारणेन तस्य विषये प्रातिशाख्येषु कृतं विवरणं प्रस्तुतं नास्ति।

**३.३ अनुस्वारः।**

३.३.१ **अं** इत्यनुस्वारो इत्येतस्य निर्देशोऽष्टाध्याय्यां पाणिनेरितरव्याकरणेषु प्रातिशाख्येषु शिक्षाग्रन्थेषु च वर्तते। **अनुस्वार** इति शब्द **अनु** उपसर्गपूर्वकः **स्वृ** धातोर्**घञ्** प्रत्ययस्य सम्मेलनेन निष्पद्यते। **अनुस्वार** इति अन्वर्थसंज्ञा वर्तते। **अनु** पश्चात् स्वरवर्णानन्तरं स्वर्यते उच्चार्यते इत्यनुस्वारः। पाणिनीयशिक्षायां पञ्जिकाभाष्यकारोऽपि **अनुस्वार** पदस्य निर्वचनमित्थं बोधयति यत् **स्वरमनुभवतीत्यनुस्वारः**। अनुस्वारसंज्ञया एव सूच्यते यदेष स्वरानुगामी ध्वनिः। पूर्ववर्तिनस्स्वराहृते एतस्य ध्वनेश्रुति संभवो नास्ति। अनुस्वारः पराश्रितध्वतिरूच्यते[६१]। कातन्त्रव्याकरणानुसार-मनुस्वारस्य निर्वचनमित्थमस्ति। **अनु स्वर्यते संलीनं (भूत्वा) शब्द्यते इत्यनुस्वारः**[६२]।

३.३.२ **उच्चारणप्रकारः।**

अनुस्वार ऊष्मवर्णोऽस्ति। तस्य बाह्यप्रयत्नोऽघोषो भवति[६३]। एषो नासिकास्थानीयोऽस्ति[६४]।
तैत्तिरीयप्रातिशाख्येऽनुस्वार उत्तमस्पर्शानिवानुनासिकोऽस्ति[६५]। यो नासिकाविवरादुच्चार्यते एवञ्च तस्योच्चारणे हन्वोरूपसंहारो भवति[६६]।

३.३.३ **अनुस्वारस्याङ्गत्वम्।**

---

[५९] *(१) तैत्तिरीय प्रातिशाख्यम्। १५.१ एवं ३ (२) वाजसनेयि प्रातिशाख्यम्। ४.५,३.१३ इत्यनेन अनुनासिकस्याधिकारः चतुर्थाध्यायस्य नवम सूत्र प्राक पर्यन्तम्(३) ऋक्तन्त्रम्। ५.१८५एवं दृष्टव्यः note-१८५ (४) ऋग्वेदप्रातिशाख्यम्। १.६३, २.६७*

[६०] *(१) रक्तसंज्ञोऽनुनासिकः। ऋग्वेदप्रातिशाख्यम् १.३६। (२) आ रक्तः। ऋक्तन्त्रम् ३.६.११४। (पृ. २५)*

[६१] *अनुस्वारोविसर्गश्च ×क ×पौ चापि पराश्रितौ॥ पाणिनीय शिक्षा ५।*

[६२] *अं इत्यनुस्वारः। दूर्गटीका।(कातन्त्र व्याकरणम् १.१.१९)।*

[६३] *तेषामेवोष्मणाम् अनत्याःसप्त ऊष्माणः (अघोषाः=) अघोषसंज्ञा; वेदितव्याः।यथा-श ष स अः ×क ×प अं इति।....ऋग्वेदप्रातिशाख्यम् १.११.। (पृ. ५४ )*

[६४] *(१) यमानुस्वारनासिक्यानां नासिके।वा.प्राति१.७४। (२) नासिक्य यमानुस्वारान्। ऋ.प्राति १.४८।*

[६५] *१ अनुस्वारोत्तमा अनुनासिकाः। तैत्तिरीयप्रातिशाख्यम् २.३०।*

[६६] *१ नासिका विवरादनुनासिक्यः। तैत्तिरीयप्रातिशाख्यम् २.५३।*
*२ अनुस्वारे हन्वोरूपसंहारे। तैत्तिरीयप्रातिशाख्यम् २.१९।*

आचार्यैरनुस्वारस्याङ्गत्वमपि प्रातिशाख्येषूपदिष्टम्। ऋग्वेदप्रातिशाख्य तैत्तिरीयप्रातिशाख्ययो-र्मतानुसारेण चानुस्वारः पूर्वस्वरस्याङ्गं[६७] भवति। वैयाकरणा वृत्तिसु **अ**कारोच्चारणार्थाविति बोधयन्ति[६८]। अनेन ज्ञायते यद्वैयाकरणानुस्वारं पूर्वस्वरस्याङ्गं मन्यते।

### ३.३.४ **अनुस्वारः स्वरो वा व्यञ्जनो वा।**

ऋक्तन्त्रे **अंश्च आंश्च** द्वयोरनुस्वारसंज्ञा कृतास्ति। अनेन ज्ञायते यदृक्तन्त्रेऽनुस्वारस्य ह्रस्वदीर्घौ द्वौ भेदौ स्वीकृतौ स्तः। तैत्तिरीयप्रातिशाख्यानुसारमनुस्वार एकमात्रिकोऽस्ति[६९]। कृष्णयजुर्वेदस्य पारिशिक्षानुसारन्तु यजूष्यनुस्वारोऽर्ध **ग**कारयुक्तो भवति[७०]। ऋग्वेदवाजसनेयिप्रातिशाख्ययो-र्ह्रस्वपूर्वस्यानुस्वारस्य च दीर्घपूर्वस्यानुस्वारस्य च उच्चारणमात्राया सदृष्टान्तं विवरणं कृतमस्ति[७१]। शुक्लयजुर्वेदे यदा स्वरसहितमुच्चारणं भवति तदा **श ष स ह** इति चतुर्षु वर्णेषु परेषु पूर्वतनस्यानुस्वारस्योच्चारणं गूँ इति भवति। तत्रापि यदि ह्रस्वस्वरात्परेऽनुस्वारः स्यात्तदा दीर्घ गूँ उच्चार्यते। अपि च तदा दीर्घस्वरात्परेऽनुस्वारो भवेत्तदा तस्योच्चारणं ह्रस्व गुँ इति भवति। तदानीमुच्चारणे ह्रस्वदीर्घानुसारमेकमात्रिकं द्विमात्रिकं चोच्चारणं भवति। ऋग्वेदप्रातिशाख्येऽनुस्वारः स्वरो वा व्यञ्जनो वेति विषयमधिकृत्य विचारणा वर्तते। अनुस्वारः स्वरव्यञ्जनयोर्लक्षणानि धरति[७२]। तथापि अनुस्वार स्वरोऽपि नास्ति व्यञ्जनोऽपि नास्ति। भाष्यकार उवटः शास्त्रप्रमाणैर्प्रतिपादयति यच्छैशिरीयशाखायामनुस्वारः स्वरव्यञ्जनातिरिक्तो वर्णान्तरोऽस्ति[७३]।अष्टाध्याय्याः **मोऽनुस्वारः। (८.३.२३) नश्चापदान्तस्य झलि। (८.३.२४)** इतिसूत्रद्वयेन भाषायां पदस्यान्ते मध्ये वा अनुनासिकव्यञ्जनमनुस्वारे परिणमति।

---

*[६७] १ पूर्वस्यानुस्वारविसर्जनीयौ। ऋग्वेदप्रातिशाख्यम् १.२४। विसर्जनीयानुस्वारौ भजेते पूर्वमक्षरम्। ऋग्वेदप्रातिशाख्यम्१०.३४।*
*२ अनुस्वारस्वरभक्तिश्च। तैत्तिरीय प्रातिशाख्यम् २१.६।*

*[६८] १ अकारः इहोच्चारणार्थ। कातन्त्रव्याकरणवृत्ति १.१.१९। **२** अं च अश्च तौ, नुश्च विश्च तौ उच्चारणार्थ इति प्रयोजनान्तराभावात्। मुग्धबोधव्याकरणम् १.१९। (पृ. ३२)। **३ अं** इति विष्णुचक्रम्।अकार उच्चारणार्थः। हरिनामामृतव्याकरणम् १.१.१४। (पृ. १२)। ४ अं अः अनुस्वारविसर्गौ। अकारवुच्चारणार्थौ। सिद्धहेमचन्द्रशब्दानुशासनम् १.१.९। (पृ. २)*

*[६९] अनुस्वारश्च। तैत्तिरीयप्रातिशाख्यम् १.३४।*

*[७०] यजुष्यनुस्वार इहापि यत्र भवेत् तदाद्यर्धगकारयुक्तः।पारि.शिक्षा१५६। (कौण्डिन्नायनशिक्षायामनुबन्धेषु)। (पृ. ८३७)*

*[७१] १ १३.२२तः२८.ऋग्वेदप्रातिशाख्यम्। २ वाजसनेयिप्रातिशाख्यम् ४.१५०, ४.१५१। ३ याज्ञवल्क्य शिक्षा ४२,४३,४४,४५.। ४ पाणिनीयशिक्षा २३,२४.।*

*[७२] अं वर्णसमाम्नाये पठ्यते। स कांश्चित्स्वरधर्मान्गृह्णाति कांश्चिद् व्यञ्जनधर्मान् –तद्यथाह्रस्वत्वं दीर्घत्वं प्लुतत्वमितिस्वरधर्माः। तथा अर्धमात्राकालता स्वरवशेनोदात्तानुदात्तस्वरितत्वं संयोगश्चेति व्यञ्जनधर्माः। उवटभाष्यम्। (ऋग्वेदप्रातिशाख्यम् १.५)।*

*[७३] ----तस्मात्स्वरव्यञ्जनातिरिक्तमन्यद्वर्णान्तरमेतदित्येत्ख्यापनपरमेवैतत्सूत्रमिति सिद्धान्तितम्। उवटभाष्यम्। (ऋग्वेदप्रातिशाख्यम् १.५)।*

३.३.५ वोपदेवस्य मुग्धबोधव्याकरणे अनुस्वारार्थे **नु** इति लघ्वी संज्ञा प्रयुक्तास्ति[७४]। हरिनामामृतव्याकरणे **विष्णुचक्रम्** इति संज्ञा प्रयुक्तास्ति[७५]। लिप्यां बिन्दोराकृत्या तस्य निदर्शनं भवति[७६]।

३.३.६ अनुस्वारस्य स्वरूपवैषयिकैः शास्त्रीयप्रमाणैरिदं वैशिष्ट्यम्प्रतीयते यद्वेदानां विविधासु शाखासु लोके चानुस्वारस्य स्वरूपं विभिन्नतया वर्ण्यते। तद्यथा –

1 एषः पराश्रितो ध्वनिः।

2 लोके एष व्यञ्जनात्मकः तेन कारणेनार्धमात्रिकः[७७]।

3 ऋग्वेदेऽनुस्वारः स्वरव्यञ्जनातिरिक्तवर्णान्तरः च शुद्धनासिक्यध्वनिः[७८]।

4 याजुषे व्यञ्जनात्मकः गकारयुक्तानुनासिकध्वनिः।

5 पूर्वस्वरस्याङ्गमस्ति।

अकारादिभिर्युक्तः सन् श्रुतिविशेषात्मलाभवहनादनुस्वारोऽयोगवाहः कीर्त्यते।

### ३.४ विसर्जनीयः।

३.४.१ **अः** इति विसर्जनीयस्य पाणिनीयापाणिनीयव्याकरणेषु प्रातिशाख्यग्रन्थेषु शिक्षाग्रन्थेषु च निर्देशः कृतो वर्तते। **विसर्जनीय** इति पदं **वि** उपसर्गपूर्वकः **सृज्** धातो **अनीयर्** प्रत्ययस्य संयोजनेन निष्पद्यते। वायोर्विसर्जनेन जन्यत्वातद्विसर्जनीय[७९] इति निर्वचनं तस्योच्चारणस्वरूपं निर्दिशति। एतस्योच्चारणे वायुर्झटिति फुफ्फुसाद्बहिर्निःसरति। वायोर्निःसरणकाले उत्पन्नोध्वनिर्विसर्जनीयो नाम्नाख्यायते।

---

[७४] *अंअः नुवी।मुग्धबोधव्याकरणम्१.१९। (पृ. ३२)*

[७५] *अं इति विष्णुचक्रम्। हरिनामामृतव्याकरणम् १.१४। (पृ. १२)*

[७६] *(१) अकार इहोच्चारणार्थ इति बिन्दुमात्रो वर्णोऽनुस्वारसंज्ञा भवति। कातन्त्रव्याकरणवृत्तिः १.१.१९। (पृ. ३)*

*(२) बिन्दुस्वरूपो वर्णो विष्णुचक्रनामा अनुस्वारो बिन्दु लवः च। हरिनामामृतव्याकरणम्१.१४। (पृ. १२)*

[७७] *अनुस्वारो व्यञ्जनत्वात् लोके तस्यार्धमात्रकः। वेदेषु स द्विमात्रो वा मात्रिको वाऽन्यथाऽपि वा॥ कौण्डिन्नायन शिक्षा ४३।*

[७८] *ऋग्वेदप्रातिशाख्य में अनुस्वार का स्वरूप। शारदीपीठप्रदीप,वार्षिक शोध पत्रिका। २०१४-१५ (पृ. १६५-१७४)*

[७९] *वैदिकाभरण। तैत्तिरीयप्रातिशाख्यम् १.१८।*

३.४.२ विसर्जनीयस्योच्चारणं **ह** श्रुतिरहितं कार्यमिति याज्ञवल्क्यशिक्षाकारो उपदिशति[८०]। विसर्जनीयस्योच्चारणस्थानः कण्ठः[८१] वा पूर्वस्वरस्थानसदृशश्च भवति[८२]। विसर्जनीयस्य बाह्यप्रयत्ना विवारश्वासाघोषाश्च भवन्ति[८३]। आभ्यन्तरप्रयत्नश्च विवृत्तोऽस्ति[८४]।

३.४.३ विसर्जनीय कृते केषुचितद्व्याकरणेषु शिक्षाग्रन्थेषु च विसर्गो विसृष्टोऽभिनिष्टानोऽभिनिस्तानो वि विष्णुसर्गश्च इत्यादयः संज्ञाः प्रयुक्ताः[८५]। वैयाकरणा द्वे बिन्दू वा कुमारीस्तनयुगाकृतिवत्[८६] विसर्जनीयस्य लिपिचिह्नत्वेन दर्शयन्ति। लिप्यां द्वे बिन्दू वर्णात्पश्चादधोपरि वर्तेते। तेन कारणेन कुमारीस्तनयुगाकृति शब्देन लिपिचिह्नस्य निदर्शनं न युज्यते। कुमारीस्तनयुगाकृतिरिति शब्दो याज्ञवल्क्यशिक्षायां तु विसर्जनीयसहितस्य स्वरितस्य हस्तचालनाकृतिं निर्दिशति[८७]। याज्ञवल्क्यशिक्षायां तस्य वर्णः श्वेतो जातिश्च शूद्रः लिङ्गश्च पुमानित्युपदिष्टम्[८८]।

३.४.४ विसर्जनीयो द्विधा अस्ति। रिफितविसर्जनीयश्चारिफितविसर्जनीयश्च। विसर्जनीयसन्धिविषये पदान्तस्य रेफस्य सकारस्य च विसर्जनीयादेशोऽष्टाध्याय्यां पाणिनिमुनिरुपदिशति[८९]।

विसर्जनीयस्याष्टधागतयः शिक्षाकारा निरूपयन्ति। तद्यथा-(१) ओ भावः (२) विवृत्तिः (३) श (४) ष (५) स (६) जिह्वामूलीय ᳵक (७) उपध्मानीयᳵप (८) रेफः। इत्थं वक्तुं पार्यते यदष्टप्रकारका

---

[८०] *यथा बालस्य सर्पस्य निश्वासो लधुचेतसः। एवमूष्मा प्रयोक्तव्या हकारपरिवर्जिता॥ याज्ञवल्क्यशिक्षा ७४।*

[८१] *(१) कण्ठस्थानौ हकारविसर्जनीयौ। तैत्तिरीयप्रातिशाख्यम् २.४६। (२) अकुहविसर्जनीयानां कण्ठः। सिद्धान्तकौमुदी १.१.९। (३) अहविसर्जनीयाः कण्ठे। वाजसनेयिप्रातिशाख्यम् १.७१। (४) चारायणीयशिक्षा ३६।*

[८२] *पूर्वान्तसस्थानो विसर्जनीयः। तैत्तिरीयप्रातिशाख्यम्२.४८।*

[८३] *खयां यमाःखयः ᳵकᳵपौ विसर्गःशर एव च। एते श्वासानुप्रदाना अघोषाश्च विवृण्वते। वैयाकरणसिद्दान्तकौमुदी ८.२.१। एवं ऋग्वेदप्रातिशाख्यम् १.११।*

[८४] *यमानां संवृत्तं प्राहुःविवृत्तं च स्वरोष्मणाम्। चारायणीयशिक्षा १.१२।*

[८५] *(१) विसर्गसंज्ञा–अं अःअनुस्वारविसर्गौ। सिद्धहेमशब्दानुशासनम् १.१.९। विसर्ग चापि कण्ठजः। शौनकशिक्षा १४। व्यासशिक्षा ४०६। २ वि। मुग्धबोधव्याकरणम् १.१९। ३ विसृष्टः। अकुहविसृष्टाः कण्ठ्या। चारायणीयशिक्षा ३६। (कौण्न्नायनशिक्षायामनुबन्धेषु )। (पृ. ८०४) ४ विष्णुसर्गः। हरिनामामृतव्याकरणम् १.१६। (पृ. १२) ५ अभिनिष्टानो विसर्जनीयः। अभिनिस्तानो विसर्जनीयः। काशिकावृत्तिः ८.३.८६।*

[८६] *(१) मुग्धबोधव्याकरणम् १.१९ (२) कातन्त्रव्याकरणम् १.१.१६।*

[८७] *श्रृङ्गवद्बालवत्सस्य कुमारीकुचयुग्मवत् ।उभक्षेप स्वरो यत्र सविसर्ग उदाहृतः॥ याज्ञवल्क्यशिक्षा६९।( पृ.६३)*

[८८] *----विसर्जनीयःश्वेतः। (पृ. ८१) उष्माणश्च हकारश्च शूद्रा एव प्रकीर्तिता॥ २॥ (पृ. ८३) स्वराविसर्जनीयाश्च यमाः पुल्लिङ्गकाः स्मृताः॥ ६। (पृ. ८५)। वर्णप्रकरणम्। याज्ञवल्क्यशिक्षा।*

[८९] *ससजुषो रुः। ८.२.६६ खरवसानयोःविसर्जनीयः। अष्टाध्यायी ८.३.१५।*

विसर्जनीयसन्धयश्शास्त्रेषु सन्ति[१०]। प्रातिशाख्येष्वष्टातिरिक्तानां सन्धीनामपि सोदाहरणं निदर्शनं वर्तन्ते[११]। ऋग्वेदप्रातिशाख्ये रिफितविसर्जनीयसन्धीनामरिफितविसर्जनीय-सन्धीनाञ्च विवरणं वर्तन्ते। तत्रारिफितविसर्जनीयसन्धेर्नवप्रकारास्सन्ति। तद्यथा –(१) नियत (४.२४) (२) प्रश्रित (४.२५) (३) रेफ (४.२७) (४) अकाम (४.२८) (५) नियत (४.२९) (६) व्यापन्न (४.३१) (७) विक्रान्त (४.३२) (८) अन्वक्षरवक्र (४.३६) (९) उपाचरित (४.४१)

३.४.५ विसर्जनीयस्य मात्राविषये प्रातिशाख्येषु शिक्षाग्रन्थेषु वा कमपि विधानं न प्राप्यते। तैत्तिरीय प्रातिशाख्यकारः **वर्णस्य विकारलोपौ। (१.५६)** इति सूत्रे वर्णलक्षणं प्रस्तौति। विसर्जनीयस्यापि विकारलोपौ भवतः। तेन तैत्तिरीयप्रातिशाख्ये विसर्जनीयः लक्षणया व्यञ्जनरूपो वर्णो भवितुं पार्यते किन्तु **न विसर्जनीयजिह्वामूलीयोपध्मानीयानुस्वारनासिक्यानाम्। (१.१८)** इत्यनेन सूत्रेण ज्ञायते यत्तस्यावबोधो वर्णवन्नभवति। अयोगवाहसंज्ञयाऽप्याख्या नास्ति। वाजसनेयिप्रातिशाख्ये विसर्जनीयः स्वरव्यञ्जनेषु परिगणितो नास्ति[१२]। तत्र विसर्जनीयोऽयोगवाहोऽस्ति। वैयाकरणपरम्परायां केचनाचार्या विसर्जनीयस्य गणनामूष्मवर्णेषु कुर्वन्ति[१३]। यत्तु वाजसनेयितैत्तिरीयप्रातिशाख्ययोर्सिद्धान्तकौमुद्यां च केवलं **शषसहा** ऊष्माक्षरे परिगणितास्सन्ति। एषु ग्रन्थेषु विसर्जनीयस्य कृते कुत्राप्यूष्मनिति संज्ञा प्रयुक्ता नास्ति[१४]। ऋग्वेदप्रातिशाख्ये विसर्जनीयसन्धेर्निरूपणं व्यञ्जनसन्धिमध्ये वर्तते। तेन कारणेन स्वरूपेण व्यञ्जनम्प्रतीयते।

---

*[१०] पाणिनीयशिक्षा (१४)। याज्ञवल्क्यशिक्षा (५०)। शैशिरीयशिक्षा (९९)*

*(१) **ओभावः**– ऋ.प्रा.४.२४ एवं २५।ऋक्तन्त्रम् ३.६.८8। वा.प्रा. ३.४६ एवं ४.४४।*

*(२) **विवृत्तिः**– ऋ.प्रा. ४.२८। तै.प्रा. ८.१६। वा.प्रा. ३.१३।*

*(३) **श**– अष्टाध्यायी ८.३.३६।*

*(४) **ष**–अष्टाध्यायी ८.३.३९,४१,४३,४४,४५। ऋ.प्रा ४.४१। तै.प्रा.८.२३। वाजसनेयिप्रातिशाख्यम् ३.५६,५७,५८।*

*(५) **स** –अष्टाध्यायी ८.३.३४,४२,४३,४७। ऋक्तन्त्रम् ३.७.५.एवं ३.७.६। ऋ.प्रा.४.४१। वा.प्रा ३.३३।*

*(६) ≍क जिह्वामूलीय एवं **(७)** ≍प उपध्मानीय –अष्टाध्यायी ८.३.३७। ऋ.प्रा ४.३५ एवं ३६। तै.प्रा. ९.२। वा.प्रा.३.११ एवं १२। ऋक्तन्त्रम् ४.४.७ (१७७)। **(८)** रेफः- अष्टाध्यायी ८.२.६६। ऋ.प्रा ४.२७। तै.प्रा. ८.९८। वा.प्रा.३.४१।*

*[११] विसर्जनीयस्य **आ** कारः -ऋ.प्रा.४.२४। विसर्जनीयस्य **य** कारः-तै.प्रा.९.१०। ऋक्तन्त्रम् ३.६.७।*

*[१२] १. नानुस्वारयमविसर्जनीयजिह्वामूलीयोपध्मानीयाः। वाजसनेयिप्रातिशाख्यम् १.४१।२. त्रयोविशतिरुच्यन्ते स्वराः शब्दार्थचिन्तकैः। द्विचत्वारिंशद्व्यञ्जनान्येतावान्वर्णसंग्रहः। वाजसनेयिप्रातिशाख्यम् ८.३८।*

*[१३] (१) हशषसअः ≍क≍प अं। उवटभाष्यम्। ऋग्वेदप्रातिशाख्यम् १.१०। (२) ऊष्मा सस्थानम्। ऋक्तन्त्रम् ४.४.७ (१७७)। (पृष्टः52) (३) अंअः ≍क≍पशषसाःशिट्। सिद्धहेमशब्दानुशासनम् १.१.१६। (४) गतिरष्टविधोष्मणः। याज्ञवल्क्यशिक्षा५०। (५) गतिरष्टविधोष्मणः।पाणिनीयशिक्षा१४।*

*[१४] (१) परे षडूष्माणः। तैत्तिरीयप्रातिशाख्यम् १.९। (२) शषसहा उष्माणः। सिद्धान्तकौमुदी ८.२.१। (३) अथोष्माणः। ८.१६ शिति षिति सिति हिति। ८.१७ वाजसनेयिप्रातिशाख्यम्।*

किन्तु ऋग्वेदप्रातिशाख्यानुसारम्विसर्जनीयः पूर्वस्वरस्याङ्गं भवति[९५]। तेन कारणेन तस्य स्वरूपः व्यञ्जरूपोऽपि नास्ति। ऋग्वेदप्रातिशाख्ये विसर्जनीयस्यायोगवाहसंज्ञया उपदेशो नास्ति। ऋग्वेदप्रातिशाक्यवत् वैयाकरणसिद्धान्तकौमुद्यामपि विसर्जनीयसन्धेर्निरूपणं हलसन्धिमध्ये वर्तते। तेन कारणेन विसर्जनीयो व्यञ्जनरूपः प्रतीयते। किन्तु अष्टाध्याय्यां वर्णसमाम्नाये विसर्जनीयोपदिष्टो नास्ति। महाभाष्यकारः तमयोगवाह इति संज्ञया उपदिशति। सर्वेषु ग्रन्थेषु **अः विसर्जनीयः** इति सर्वसामान्यनिर्देशत्वात्कौण्डिन्नायनशिक्षाकारो विसर्जनीयस्य **अयोगवाहत्वं** इत्थं प्रतिपादयति **अयोगेन वहतः स्वरूपं निर्वहतः** इत्ययोगवाह इति व्यवहारः।

मोनीयर विलियम्समहाभागः विसर्जनीयस्य प्रधानानि लक्षणानि निरूपयति यत्तस्य विकारलोपौ भवतः। बहूधा पदस्यान्ते वाक्यस्यान्ते च श्रूयते दृश्यते च [९६]।

**३.५ जिह्वामूलीयोपध्मानीयौ।**

३.५.१ प्रातिशाख्येषु शिक्षाग्रन्थेषु पाणिनीयापाणिनीयव्याकरणेषु च जिह्वामूलीयोपध्मानीययोः स्वरूपविषये निरूपणं वर्तते। ≍क इति जिह्वामूलीयः ≍प इतिउपध्मानीयः च। जिह्वामूल शब्दात् **छ** प्रत्ययस्य संयोजनेन जिह्वामूलीयः शब्दो निष्पाद्यते[९७]। जिह्वाया मूलादुच्चरितो ध्वनिर्जिह्वामूलीयो उच्यते। भट्टोजि दीक्षितो लघुशब्देन्दुशेखर उपध्मानीय शब्दस्यान्वर्थक्यमित्थं बोधयति।- "उश् च पश् च ध्मायेते अनेन इति उपध्मा, तत्र भव इत्यर्थे छ प्रत्ययःतस्य ईयादेशे कृते, उपध्मानीयशब्दः सिद्ध्यति। उपध्मानीयस्यौष्ठत्वम्। इत्थं जिह्वामूलीय उपध्मानीयः च अन्वर्थसंज्ञौ स्तः।

३.५.२ विसर्जनीयस्य विकारो जिह्वामूलीयोपध्मानीयरूपेण परिणमति। अष्टाध्याय्यां कुप्वो≍क≍पौ च। (८.३.३७) सूत्रेण कपवर्गयोः परतो विसर्जनीयस्य यथासंख्यं (≍क≍पा ) विकल्पेन जिह्वामूलीयोपध्मानीयादेशौ भवतः। वाजसनेयिप्रातिशाख्यकारोऽपि **प्रकृत्या कखयोः पफयोश्च। (३.११)** एवञ्च **जिह्वामूलीयोपध्मानीयौ शाकटायनः। (३.१२)** इति द्वाभ्यां सूत्राभ्यां (≍क≍पयोः) जिह्वामूलीयोपध्मानीययोर्वैकल्पिकं विधानं करोति। अत्र सूत्रकारः **एतौ जिह्वामूलीयोपध्मानीयौ काण्वादिविषयौ। (३.१३)** इति सूत्रेणोपदिशति यदेतौ ध्वनी काण्वशाखायामुच्चरितौ स्तः माध्यन्दिन्यां न स्तः[९८]। तैत्तिरीयप्रातिशाख्ये भाष्यकार ऊष्माक्षरेषु जिह्वामूलीयोपध्मानीयान्परिगणयति[९९]। किन्तु विधिसूत्रे

---

[९५] *पूर्वानुस्वारविसर्जनीयो। ऋग्वेदप्रातिशाख्यम् १.२४।*

[९६] *Monier Williams Page 1001.: Vi-sarjanīya –A Sanskrit English Dictionary*

[९७] *जिह्वामूलाङ्गुलेच्छः। अष्टाध्यायी ४.३.६२।*

[९८] *≍क इति जिह्वामूलीयः।≍प इत्युपध्मानीयः। एते वर्णाः माध्यन्दिनानां न सन्तीति भावः।....माध्यन्दिनानामितिग्रहणात् काण्वादेर्नीनिषेधः। अनन्तभट्टभाष्यम्। (वाजसनेयिप्रातिशाख्यम् ८.३९)। (पृ. ३९४)*

[९९] *अन्तःस्थेभ्यः परे ये वर्णाः षट् ते ऊष्मसंज्ञा भवन्ति। यथा ≍कशषस≍प ह इति।पदक्रमसदनभाष्यम्।( तैत्तिरीयप्रातिशाख्यम् १.९)।*

जिह्वामूलीयोपध्मानीययोः कृते सस्थानमूष्म इति शब्दं प्रयुनक्ति। **अघोषस्तस्य सस्थाममूष्माणम्। (९.२)** इत्यनेन सूत्रेण सस्थानमूष्मणः प्रवृत्तिमुपदिशति। अस्मिन्शास्त्रेऽपि तयोर्वैभाषिकप्रवृत्तिमुपदिशति[१००]। तद्यथा **यः कामयेत्। >यᳵकामयेत्। (सं.२.१.२) अग्निः पशुरासीत्। >अग्निᳶपशुरासीत्। (सं.५.७.२६)** ऋग्वेदप्रातिशाख्ये सूत्रकारः **अघोषे रेफ्यरेफी चोष्माणं स्पर्शो उत्तरे तत्स्थानमनूष्म परे।** (४.३१) एवञ्च **प्रथमोत्तमवर्गीये स्पर्शे वा। (४.३३)**इति सूत्रद्वयेन विसर्जनीयस्य वैकल्पिकं परस्थानमूष्मापत्तेर्विधानं करोति[१०१]। वस्तुतस्तु विसर्जनीयस्य जिह्वामूलीयोपध्मानीयविकारावेव व्यापन्नसन्धिश्च विक्रान्तसन्धिश्च इति संज्ञाभ्यामुपदिष्टौ स्तः ऋग्वेदप्रातिशाख्ये[१०२]। ऋक्तन्त्रे च जिह्वामूलीयोपध्मानीययोरुपदेशो वर्तते। तयोरयोगवाहत्वेन निर्देशः कृतमस्ति। श्रीसूर्यकान्तमहाभागोऽत्र **ष्प** इति **ष्क** इति द्वौ पाठान्तरौ उद्धरति[१०३]। श्रीसूर्यकान्तमहाभागानुसारमेतौ जिह्वामूलीयोपध्मानीयौ विभिन्नलक्षणवन्तौ उष्मव्यञ्जनौ स्तः। यौ सहस्रवर्षेभ्यो लुप्तौ स्तः। काश्मीरीमातृकासु (शारदालिप्यां) जिह्वामूलीयोपध्मानीययोर्बोधनाय लिपिचिह्नः प्रयुक्तो दृश्यते[१०४]।

### ३.५.३ **उच्चारणप्रकारः।**

जिह्वामूलीयोपध्मानीयश्चेत्यन्वर्थसंज्ञे स्तः। संज्ञैव एतयोर्ध्वन्योरुच्चारणस्वरूपं सूचयति। भट्टोजिदीक्षितः कौमुद्यां वर्णानां स्थानप्रयत्नानि वर्णयन् जिह्वामूलीयोपध्मानीययोरुच्चारण-स्वरूपमित्थं बोधयति। ᳵकᳶप इति कपाभ्यां प्रागर्धविसर्गसदृशौ मन्यते[१०५]। प्रातिशाख्येऽपि विधिसूत्रे सस्थानमूष्म[१०६] एवं परस्थानमूष्म[१०७] इति पदेन विसर्जनीयस्योच्चारणवैशिष्ट्यमेव सूच्यते। वस्तुतस्तु ᳵक जिह्वामूलीये क कारः च ᳶप उपध्मानीये च प कारो उच्चारणार्थे स्तः[१०८]। शास्त्राध्ययनेन ह्वामूलीयोपध्मानीययोरेततद्वैशिष्ट्यं

---

*[१००] कपवर्गपरश्चाग्निवैश्यवाल्मीकयोः। तैत्तिरीयप्रातिशाख्यम् ९.४। न प्लाक्षिप्लाक्षायणयोः। तैत्तिरीयप्रातिशाख्यम् ९.६।*

*[१०१] अघोषे स्पर्शेउत्तरे रेफ्यरेफी च विसर्जनीय उष्माणमापद्यते। (तत्स्थानम् =) तस्याघोषस्य परत्रावस्थितस्य समानस्थानम्; अनूष्मपरे स्पर्शे। उवटभाष्यम्।(ऋग्वेदप्रातिशाख्यम् ४.३१)।*

*[१०२] व्यापन्न ऊष्मसन्धिः स विक्रान्तः प्राकृतोपधः। ४.३५ ऋग्वेदप्रातिशाख्यम्।*

*[१०३] पादटीप -१२ ष्क इतिA.B.D:क इति C, पादटीप –१३ ष्प इति A.B.D:प इति C ऋक्तन्त्रम्। (पृ.२)*

*[१०४] Dr. Surya Kant 3:"ᳵक इति ᳶप इति।जिह्वामूलीय(formed at the end root of the tongue) and उपध्मानीय(on breathing)the two voiceless breathings, had both separate character in the alphabets of the earlier centuries A.D. but for nearly a thousand years They are obsolete. This may be the reason why our prātiśakhya does not prescribe any rule for these.......They are however, employed in Kāśmīrīśārdāmss. (note-2-12) ऋक्तन्त्रम्।*

*[१०५] पूर्वत्रासिद्धम्। वैयाकरणसिद्धान्तकौमुदी ८.२.१।*

*[१०६] अघोषपरस्तस्य सस्थानमूष्माणम्। तैत्तिरीय प्रातिशाख्यम् ९.२।*

*[१०७] अघोषे रेफ्यरेफी चोष्माणं स्पर्श उत्तरे तत्स्थानमनूष्मपरे। ऋग्वेदप्रातिशाख्यम् ४.३१।*

*[१०८] (१) ककार उच्चारणार्थः....। १.१.१७ एवं प इहोच्चारणार्थः। कातन्त्रव्याकरणम् १.१.१८।*

---

प्रतीयते यत् ≍क ≍प इति विशिष्टध्वनी विसर्जनीयस्योच्चारणवैशिष्ट्यं सूचयतः। एतौ ध्वनी विसर्जनीयसन्धेरेव प्रकारौ वा विसर्जनीयस्य विकारौ वा कथ्येते।

३.५.४ ≍क इति जिह्वामूलीयः ≍प इति उपध्मानीयश्च एतयोर्ध्वन्योर्निदर्शनं लिप्यां वज्राकृतिगजकुम्भाकृतिना क्रियेते[१०९]। एतयोः कृते मून्यौ संज्ञा व्यवहृता मुग्धबोधव्याकरणे[११०]। जिह्वामूलीयोपध्मानीययोर्लिपिविषयेऽपि भिन्नेषु व्याकरणेषु वैविध्यं प्रवर्तते[१११]। अन्यवर्णस्य योगेनैव श्रुतिविशेषात्मलाभवहनाच्चोभे अयोगवाहौ कीर्त्येते। महाभाष्येषु परिगणिता अयोगवाहाः तस्य पूर्ववर्तिनः परवर्तिनः च शास्त्रेष्वित्थं निरूपितास्सन्ति।

**॥ सन्दर्भग्रन्थाः ॥**

अथर्वप्रातिशाख्यम्॥सूर्यकान्त शास्त्रिणा सम्पादितम्। प्रकाशकः महेरचंद लछमनदास पब्लिकेशन्स। पुनर्मुद्रित संस्करणम्। २००८॥

ऋक्तन्त्रम्॥ (सामप्रातिशाख्यम्)॥ संशोधितं सम्पादितं डॉ. सूर्यकान्त॥ महेरचंद लछमनदास॥ १९७०।

ऋक्तन्त्र-एक परिशीलन॥लेखकः डॉ. सुरेश प्रकाश पाण्डेयः। परिमल पब्लिकेशन्स। दिल्ली। प्रथम संस्करण। १९९१।

ऋग्वेदप्रातिशाख्यम्॥ उवट भाष्य संवलितम्। डॉ.वीरेन्द्रकुमार वर्मा। काशी हिन्दु विश्वविद्यालय चौखम्बा संस्कृत प्रतिष्ठानम्। पुनर्मद्रित संस्करणम्। १९९९।

ऋग्वेदप्रातिशाख्यम्॥ एक परिशीलन। डॉ. वीरेन्द्रकुमार वर्मा। सम्पादकः– डॉ. सिद्धेश्वर भट्टाचार्य। काशी हिन्दू विश्वविद्यालय शोध-प्रकाशन। १९७२।

ऋग्वेदप्रातिशाख्य में अनुस्वार का स्वरूप। डॉ. कालिन्दी पाठकः। शारदापीठप्रदीप।(वार्षिकशोधपत्रिका)। (२०१४-१५। पृष्टांकः १६५-१८४)।

कातन्त्रव्याकरणम्॥ सम्पादकः आर.एस.सैनी। भारतीय विद्या प्रकाशन (दिल्ली,वाराणसी )। १९८५।

काशिका॥(प्रथमो भागःद्वितीयो भागश्च )। व्याख्याकारः –श्री नारायणमिश्रः। काशी हिन्दू विश्वविद्यालय

---

*(२)कपावुच्चारणार्थौ....कपयोर्जिह्वामूलीयोपध्मानीययोः सूत्रे उच्चारणत्तथाभूतावेतादेशौ विधीयते इति कस्यचिद् भ्रान्तिःस्यात्तन्निराकुर्वन्नाह क-पावुच्चारणार्थाविति ताभ्यां विना तदुच्चारणशक्यत्वादिति भावः। सुपद्मव्याकरणम् १.३.५। (पृ. ३३)*

[१०९] *(१)----वज्राकृतिवर्णो जिह्वामूलीयसंज्ञा भवति। १.१.१७ गजकुम्भाकृतिवर्णो उपध्मानीयसंज्ञा भवति। कातन्त्रव्याकरणवृत्ति १.१.१८। (२)अंअः ≍क≍पशषसाःशिट्।.......अनुस्वार-विसर्गौ –वज्र-गजकुम्भाऽऽकृती च वर्णौ श-ष-साश्च शिट् स्युः।लघुवृत्तिः। (सिद्धहेमचन्द्रशब्दानुशासनम् १.१.१६)।(पृ. ३)*

[११०] *≍कपौ मून्यौ। मुग्धबोधव्याकरणम् १.२०। (पृ. ३२)*

[१११] *क + प m इति मुग्धबोधव्याकरणस्य सम्पादने एवञ्च ≍क≍प इति सिद्धहेमशब्दानुशासनस्य सम्पादने लिपिचिह्नौ प्रयुक्तौ स्तः।*

---

चौखम्बा प्रकाशन। वाराणसी। पुनर्मुद्रित संस्करणम्। २००५।

कौण्डिन्न्यायनशिक्षा॥ उपबन्धोऽनुबन्धैश्चोपपबृंहिता महाशिक्षा। प्रणेता–शिवराज आचार्य कौण्डिन्न्यायनः। चौखम्बा विद्याभवन। वाराणसी।पुनर्मुद्रित संस्करण। २००७।

तैत्तिरीयप्रातिशाख्यम्॥ माहिषेयकृत पदक्रमसदन भाष्यसंवलितं रिङ्गण हिन्दी व्याख्योपेतम्। पं.सशीलकुमार पाठकः। सम्पादक – डॉ. जमुना पाठकः। चौखम्बा संस्कृत सीरीझ। वाराणसी। प्रथमं संस्करणम्। २००७।

नारदीयशिक्षा। (राणायनीयशाखीयं सामगानम्)। आग्नेयमारभ्य महानाम्न्यन्तो भागः। सम्पादकः- डॉ. विजयकुमार शर्मा।श्री शारदापीठ विद्यासभा। द्वारका। प्रथमं संस्करणम्। २०६९ विक्रमाब्दः।

पाणिनीय शिक्षा॥ व्याख्याकारः -शिवराज आचार्य कौण्डिन्नायनः। चौखम्बा विद्याभवन। वाराणसी। प्रथमं संस्करणम्। २००७।

मुग्धवोधं व्याकरणम्॥ वोपदेव। १९११।

याज्ञवल्क्यशिक्षा॥ व्याख्याकारः डॉ. नरेश झा। चौखम्बा सुरभारती प्रकाशन। वाराणसी। २००९।

वाजसनेयिप्रातिशाख्यम्॥ सम्पादकः एवं व्याख्याकारः –डॉ. वीरेन्द्रकुमार वर्मा। काशी हिन्दू विश्वविद्यालय। वाराणसी। चौखम्बा संस्कृतप्रतिष्ठान। पुनर्मुद्रितं संस्करणम्। १९८७।

वैदिक व्याकरण। (प्रथमो भागः)। लेखकः – डॉ. रामगोपालः। नेशनल पब्लिशिंग हाउस। दिल्ली। तृतीयं संस्करणम्। २००२।

वैयाकरणसिद्धान्तकौमुदी॥ (कारकान्त प्रथमो भागः)॥ व्याख्याकारः सम्पादकश्च– व्याकरणाचार्यः श्रीबालकृष्णपञ्चोली। प्रकाशकम्। चौखम्बा संस्कृत संस्थानम्। वाराणसी। चतुर्थ संस्करणम्। २०००।

व्याकरणमहाभाष्यम्॥ एफ.कीलहोर्न एत्यनेन संशोधितम्। भाण्डारकर ओरिएन्टल रीसर्च इन्स्टीट्यूट। पूना। चतुर्थं संस्करणम्। १९८५।

व्याकरणमहाभाष्यम्॥(नवाह्निकम्)॥ श्रीमन्नागेशभट्टविरचित भाष्यप्रदीपोद्योतोद् भासितेन श्रीमदुपाध्यायकैयटप्रणीतेन भाष्यप्रदीपेन समुल्लसितम् ) सम्पादकः श्री भार्गवशास्त्रिणा टिप्पणीपाठभेदादिसंयोजनपुरःसरं संशोधितम्। चौखम्बा संस्कृत प्रतिष्ठान। दिल्ली। पुनर्मुद्रितं संस्करणम्। १९८७।

व्याकरणमहाभाष्यम्॥ भाष्यप्रदीपेन भाष्यप्रदीपोद्योतेन शब्दकौस्तुभेन च विराजितःराजलक्ष्मी टीकया

चाऽलङ्कृतः। नवाह्निकरूपःप्रथमो भागः। प्रथमम् खण्डम्। संस्कर्ता–श्री गुरुप्रसादशास्त्री।
सम्पादकः पण्डितनन्दकिशोर शास्त्री। राजस्थान संस्कृत कोलेज
ग्रन्थमालायास्त्रिंशं कुसुमम्। मुद्रकः ज्यौतिषप्रकाश। काशी। १९३८।
श्री सिद्धहेमचन्द्रशब्दानुशासनम्॥ (स्वोपज्ञ लघुवृत्ति विभूषितम् )। सम्पादकः–मुनि जम्बूविजयः।
श्री हेमचन्द्राचार्यजैन ज्ञानमन्दिरम्। पाटण (उ.गु)। १९९४।
सुपद्मव्याकरणम्॥ सम्पादकः आर.एस.सैनी। भारतीय विद्या प्रकाशनम्। दिल्ली। वाराणसी।
प्रथमं संस्करणम्। १९८९।
हरिनामामृतव्याकरणम्॥(सवृत्तिकम् )। जीवगोस्वामि प्रभुपादेन विरचितम्।
सम्पादकः त्रिदण्डिस्वामिना श्री भक्तिविलासतीर्थ गोस्वामिमहाभागः।
चैतन्य रीसर्च इन्स्टीट्यूट। १९७२।
Cardona, George, *Pāṇini: A survey of Research.*1976.
1980 First Indian Reprint, Delhi:Motilal Banarsidass.
Sir Monier Williams,*Sanskrit –English Dictionary.* First Edition Published by
1999 Oxford University Press. 1899
Reprint Motilal Banarasidass, Delhi.



वर्षम्-०४ अङ्कः-०४ शोधज्योतिः
जनवरी-दिसम्बर, २०२२ ISSN-2350-0700

## भवानीशङ्करौ वन्दे

डॉ. अमृतलालः भोगायता[1]

### " श्रीसत्यव्रतशास्त्रिणां पत्रकाव्येषु महाकाव्यानामभ्यासवैदुष्यं ध्वन्यते "

श्रीमतां सत्यव्रतशास्त्रिणां पत्रकाव्येषु प्रयुक्तमहाकविकाव्यानां पत्रकाव्यप्रयुक्त-महाकविकविकर्मविशिष्टप्रतिभाप्रयोगेण तत्तत्कवीनां स्मरणाञ्जलिव्याजेन महाकाव्यानामगाधं निर्बाधं निरन्तरमभ्याससङ्गतं चिन्तनं ध्वन्यते।

सामान्यरूपेणास्माभिरवगम्यते **"यत्कवित्वबीजं प्रतिभानम्"**[2] तच्च पूर्वजन्मनः संस्कारसंस्कृतं भवत्येव, परं तत्र महाकवीनां गद्यपद्यवैशिष्ट्याभ्याससंस्कारोऽपि नितान्तं सापेक्षः। यथा भागवतपुराणे पञ्चमस्कन्धगतभरतप्रसङ्गे मृगयोनिं प्राप्तोऽपि स भरतः पूर्वजन्मस्मृतिरक्षणं चकार तच्चान्यमृगेभ्यस्तं नितान्तं विलक्षणमदर्शयत् तथैवात्र श्रीमान् सत्यव्रतशास्त्री यद्यपि सहजसरलसरससगुणसालङ्कारकाव्यरचना-निपुणोऽपि क्वचित् क्वचित् तारापथे देवेन्दधनुरिव स्वीयपद्यरचनायां महाकाव्यकाव्यानां पदपङ्क्तिभाववर्णान् पूरयन् राराज्यते। अनेन विशिष्टप्रयोगेन तेषां महाकाव्याभ्यासचिन्तनानुरागो लक्ष्यते तेषामेनमेव विशिष्टगुणमगौणं स्वीकृत्य पत्रकाव्यग्रन्थस्य पद्यपाकपरिणतास्वादानुभूतिप्रदं किञ्चिच्चिन्तनं प्रस्तूयते॥

एभिः २४/८/१९७५ बैंकाकनगरात् कृष्णलालमहाभागान् प्रति पत्रं प्रेषितं तत्र तैः बहूनि पद्यानि प्रस्तुतानि तत्कविकर्म तेषां वैदुष्यं दर्शयति परं तत्रैकं पद्यं महाकविकालिदासस्थितां प्रच्छन्नां प्रीतिं पुरस्करोति। यथा –

सर्वत्र नो वार्तमवैत विज्ञाः भवच्छुभेच्छासु कुतोन्यथा स्यात्।
सूर्ये तपत्यावरणाय सत्यं भवेत् प्रकाशस्य कुतस्तमिस्रा॥

अत्रेदं प्रस्तुतं पद्यं रघुवंश[3] महाकाव्यान्तर्गतं रघुकौत्ससंवादं स्मारयति अत्रस्थं पद्यप्रणयनपाटवं नितान्तं प्रशंसनीयं राजते।

बैंकाकतो डॉ. कृष्णलालमहागान्प्रति २०/०३/१९८९ दिनाङ्के प्रेषिते पत्रे अधोऽङ्कितं पद्यं वर्तते।

---

[1] *प्रधानाचार्यः, ब्रह्मर्षिसंस्कृतमहाविद्यालयः – नडियाद, amrutbhogayta@gmail.com, 9428552778*

[2] *कवित्वबीजं प्रतिभानम्। काव्यालङ्कारसूत्रवृतिः १.३.१६*

[3] *सर्वत्र नो वार्त्तमवेहि राजन् नाथे कुतस्त्वय्यशुभं प्रजानाम्। सूर्येतपत्यावरणाय दृष्टेः कल्पेत लोकस्य कथं तमिस्रा॥ रघुवंशम् ५/१३*

**जराकृता इमे दोषास्तदागमनसूचकाः।**
**प्रादुर्भवन्ति कालेन न धीमांस्तत्र मुह्यति॥**

अपरञ्च तस्मै प्रेषितेऽन्यस्मिन्पत्रेऽपि पद्यमित्यवर्तते।

**चेतः प्रसादः सुतरां मत आवश्यको यतः।**
**प्रसादे सर्वदुःखानां हानिर्जीवस्य जायते॥**

पूर्वोक्तं पद्यद्वयमपि पठित्वा मान्यवराणां शास्त्रिणां श्रीमद्भगवद्गीता[४]ऽभ्यासोऽवगम्यते।

एवञ्च डॉ. कृष्णलालमहाभागान् लक्ष्यीकृत्यैव १३/०७/१९८९ प्रेषिते पत्रे

**क्षणशः कणशश्चैव विद्यामर्थं च चिन्तयेत्।**
**इत्यादेशः शास्त्रकृतां पालनीयोऽस्ति सर्वदा॥**

अत्र महोदयानां सुभाषितचिन्तनं विशेषतोऽवगम्यते, तथा च २६/०४/१९९१ दिनाङ्के बैंकाकगनराद् दिल्लीस्थदेववाणीपरिषत्सचिवान् डॉ. रमाकान्तशुक्लमहाभागान् प्रति प्रेषिते पत्रे पद्यमिदं यथा -

विलोक्य तं विस्मितमानसा सा नेतुं तमाह स्वपतिं विमुग्धा।
असम्भवं हेममृगस्य जन्मेत्यवोचदेषोऽवरजं च विद्वान्॥

अत्रापि काञ्चनमृगानुसरणं कुवर्तो भगवतो रामस्य वर्णनान्वितसुभाषितार्थं[५] स्मारं स्मारं पत्रलेखनानन्दाऽनुभूतिः[६] इति चिन्तने नातिशयोक्तिः।

अनन्तरं २०/०५/१९९१ दिनाङ्के पुरीस्थान् डॉ. सदानन्ददीक्षितमहाभागान् प्रति प्रेषिते पत्रेऽपि सुभाषितरसानुभूति ' र्व्यज्यते।

**कृषे शरीरे कस्यापि साहाय्यं नोपलभ्यते।**
**सत्यमेवोच्यते प्राज्ञैः कृशे कस्यास्ति सौहृदम्॥**

---

[४] *देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा। तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति॥ श्रीमद्भगवद्गीता २/१३ प्रसादे सर्वदुःखानां हानिरस्योपजायते। प्रसन्नचेतसो ह्याशु बुद्धि : पर्यवतिष्ठते। श्रीमद्भगवद्गीता २/६५*

[५] *असम्भवं हेममृगस्य जन्म तथापि रामो लुलुभे मृगाय। प्रायः समापन्नविपत्तिकाले धियोऽपि पुंसां मलिनीभवन्ति॥ हितोपदेशः १/२४*

[६] *वनानि दहतो वह्नेः सखा भवति मारुतः। स एव दीपनाशाय कुशे कस्यास्ति सौहृदम्॥ सुभाषितरत्नभाण्डागारम्, चौखम्बा संस्कृत प्रतिष्ठानम्, दिल्ली-पु. १५५/१२०*

१५/०६/१९९० बैकाकतो डॉ. कृष्णलालमहाभागान् प्रति प्रेषिते पत्रे प्रणीतमिदं पद्यं यथा –

**सत्सङ्गति : पुण्यवशेन सत्यं सञ्जायते दिव्यसुखप्रदात्री।**
**उपार्जितान्येव मया भवेयुः पुण्यानि सत्यं जननान्तरेषु॥**

अत्र पद्ये महोदयानां धन्यतानुभूतिभरितं हृदयं त्ववगम्यत एव परमत्र करुणरसस्य सिद्धहस्तः कविर्भवभूति [७]रपि स्मर्यते। तेषां महोदयानामेतस्यां रचानायां "यथेच्छा भोग्यं वो ...." पद्यस्य रजोभिर्मलिने दर्पणे प्रतिबिम्बमिव नात्यन्तं स्पष्टं परं किञ्चिदनुमानगम्यं प्रतिबिम्बं दृष्ट्याश्रयं कुरुते एतच्चैतेषां भवभूतिकाव्यानुभूतिं दर्शयति। उत्तररामचरितस्यानुत्तरोऽभ्यासोऽपि गम्यते।

दिल्लीत : श्रीदुर्गादत्तशास्त्रिणः प्रति १६/०६/१९९० दिनाङ्के प्रेषितं पत्रं विलोक्यते चेत् तत्रस्थमिदं पद्यं यथा –

**स्वयमेव सतां चेतः सञ्जायेत तदुन्मुखम्।**
**न हि कस्तूरिकामोदः शपथेन विभाव्यते॥**[८]

अन्यच्च -

**धन्यास्ते ऋषयो लोके शास्त्रनिर्मलबुद्धयः।**
**नास्ति येषां यशःकाये जरामरणजं भयम्॥**

पूर्वपद्यमेभिः २४/०४/१९८७ दिनाङ्के श्रीगङ्गानगरस्थान् डॉ. सत्यव्रतमहाभागान् प्रति प्रेषितं पत्रे तेषां पण्डितवर्याणां पाण्डित्यप्रशंसां कुर्वद्भिरेभिरुत्तरार्धे प्रस्थापिता पङ्क्तिः पूर्वाधं चिन्तयितुं प्रेरयति तद्यथा "जयन्ति ते.....।"[९] अत्रस्थो भावप्रभावो महोदयानां सुभाषितप्रीतिं दर्शयति।

अग्रे च मान्यानां महोदयानां महाकाव्यानां विशिष्टमध्ययनं प्रतीयते। यथा तैः २४/०८/१९७५ बैंकाकनगराद् डॉ. कृष्णलालमहाभागान् प्रति प्रेषिते पत्रे तदनुमीयते।

**दूरस्थितो मातृभुवः प्रियायाः गतो वियोगं स्वजनेन चापि।**
**नयामि कालं स्वमहं कथञ्चिद् अधीतिबोधाचरणप्रचारणैः॥**

---

[७] *यथेच्छा भोग्यं वो वनमिदमयं मे सुदिवसः सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवति। तरुच्छाया तोयं यदपि तपसां योग्यमशनं फलं वा मूलं वा तदपि न पराधीनमिह वः॥ उत्तररामचरितम् २/१*

[८] *सन्तः स्वतः प्रकाशन्ते गुणा न परतो नृणाम्। आमोदो नहि कस्तूर्याः शपथेन विभाव्यते॥ सुभाषितरत्नभाण्डागारम्, चौखम्बासंस्कृतप्रतिष्ठानम्, दिल्ली पृ.४५/२९*

[९] *जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः। नास्ति येषां यशः काये जरामरणजं भयम्॥ नीतिशतकम् श्लोक-२८ अक्षयवट प्रकाशनम्*

अत्र नैषधीयचरितमहाकाव्ये[१०] नलगुणान् वर्णयतो हर्षस्य स्मृतिः सहजं स्थानं प्राप्नोति विद्वदौषधं नैषधमपि मान्यवरैः नितान्तमास्वादितमिति प्रसङ्गोऽयं प्रमाणीकरोति। ०७/०३/१९८५ दिनाङ्के शर्मण्यदेशस्थ प्रो. श्तीतन्क्रंनमहाभागान् प्रति प्रेषिते पत्रे रचितं पद्य यथा-

**अभ्यासपात्रं समपेक्ष्यते तान् निबद्धवस्तुप्रथने गरीयः।**
**तेनाद्वितीयं भवतां यशः स्याद् यशो धनानां हि यशो गरीयः॥**

अत्रापि रघुवंशमहाकाव्यस्य[११] स्मृतिर्निरन्तरं जायते, तथा च ११/०६/१९८७ दिनाङ्के शर्मण्यदेशस्थदयूबिंगननगरात् डॉ. रामकरणशर्ममहोदयान् प्रति प्रेषिते पत्रे पद्यमिदं पूज्यपादैः रचितं यथा –

**मधुरा स्मृतयो नैका मथ्नन्ति मम मानसम्।**
**तेषां मदेकपुत्राणां मयि स्नेह : परोऽभवत्॥**

अत्र न सर्वत्र परं चन्द्रमसि लक्ष्म इव शोभमानं मदेकपुत्राणाम् इति पदं नैषधीयचरितस्य[१२] नलहंससंवादस्मृत्यास्वादं ददाति। तदनन्तरं २६/०८/१९८२ दिनाङ्के बैंकाकतो डॉ. कृष्णलालमहाभागान्प्रति लिखिते पत्रे एकं पद्यमित्थं वर्तते। यथा –

**यात्येकतोऽस्तशिखरं यदि धर्म एकस्तत्स्थानमापतति निश्चितमन्य एव।**
**धर्मद्वयस्य युगपद् व्यसनोदयाभ्यां पूर्वस्तिरस्क्रियत इत्यतिकष्टदायि॥**

इत्यत्र महाकविकालिदासकृतस्य अभिज्ञानशाकुन्तलस्य[१३] चतुर्थाङ्कगतं कण्वशिष्यकृतं प्रभातवर्णनं स्मर्यते।

एवञ्च २४/०५/१९९० दिनाङ्के बैंकाकतो डॉ. कृष्णलालमहाभागान् प्रति प्रेषिते पत्रे रचितं पद्यं यथा -

**कार्यं महत्तेन समाप्तिमेता मया कृतं ......।**
**श्रान्तोऽप्यहं तेन नवो भवेयं क्लेशः फलेनातनुते नवत्वम्॥**

---

[१०] *अधीतिबोधाचरणप्रचारणैर्दशाश्चतस्त्रः प्रणयन्नुपाधिभिः। चतुर्दशत्वं कृतवान् कुतः स्वयं न वेद्मि विद्यासु चतुर्दशस्वयम्॥ नैषधमहाकाव्ये १/४*

[११] *निश्चित्य चानन्यनिवृत्तिवाच्यं त्यागेन पत्न्याः परिमार्ष्टुमैच्छत्। अपि स्वदेहात् किमुतेन्द्रियार्थाद् यशोधनानां हि यशो गरीयः॥ रघुवंशम् सर्ग -१४/३५*

[१२] *मदेकपुत्रा जननी जरातुरा नवप्रसूतिर्वरटा तपस्विनी। गतिस्तयोरेष जनस्तमर्दयन् अहो विधे ! त्वां करुणा रुणद्धि नो॥ नैषधमहाकाव्यम् १/१३५*

[१३] *यात्येकतोऽस्तशिखरं पतिरोषधीनामाविष्कृतोऽरूणपुर : सर एकतोऽर्कः। तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां लोको नियम्यत इवात्मदशान्तरेषु॥ अभिज्ञानशाकुन्तलम् अ. ४/२*

अत्रापि महोदयैः कुमारसम्भवमहाकाव्यस्य[१४] पार्वतीभक्तिप्रसङ्गः स्मर्यते तत्र सहजं साम्यं दर्शयित्वा महाकाव्याभ्यासोऽपि दृष्टिं प्रापितः। दृष्टिं

अनन्तरं पश्यामश्चेत् अभिभाषणपद्येषु कश्चित् श्लोक इत्थं रचितः।

**इति जातः परो मोदः सन्तोषश्चातुलो मया।**
**हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकाऽपि वा।**

अत्र रघुवंशमहाकाव्यस्य[१५] प्रथमसर्गाभ्यासः स्मृतिं नन्दति।

तत्रैव पुनरेकं पद्यमित्थं वर्तते यथा –

**पुराणमित्येव न साधुसर्वं न चापि सर्वं नवमित्यवद्यम्।**
**इत्येव सञ्चिन्त्य कवेर्वचोऽहं नूलाः कृती द्रष्टुमभूवमुत्कः॥**

पूर्वपद्ये महाकविकालिदासरचितं मालविकाग्निमित्रम्[१६] स्मृत्वा तस्मै कवये स्मारणाञ्जलिरेव पद्यकाव्येन दत्त इति प्रतिभाति।

०७/०३/१९८५ दिनाङ्के शर्मण्यप्रदेस्थ प्रो. श्तीतन्क्रॅनमहोदयान् प्रति पाठिते पत्रे श्लोकोऽयं दृष्टिसृष्टिं प्राप्तः यथा –

**शक्तिञ्च नैपुण्यमयापि लोकशास्त्रादिकावेक्षणतः प्रजातम्।**
**काव्यज्ञशिक्षाभ्यसनं च विज्ञाः काव्यस्य हेतुं समुदीरयन्ति॥**

अनेन पद्येनेदं तैः दृढीभूतं वा प्रमाणं दत्त्वा प्रमाणीकृतं यत् तेषां न केवल सुभाषितेषु रसः न वा महाकाव्येष्येव प्रीतिः, न वा रूपकेष्वेव विशेषानुरागः, न वा श्रीमद्भगवद्गीताकाव्येषु धर्ममर्मवत्स्वेव ग्रन्थेषु गहना गतिः परं काव्यप्रकाशतुल्येषु[१७] कठिनेषु लाक्षणिकग्रन्थेष्वपि नवनीतपिण्डेषु लोहयष्टेरिव सहज सरलः प्रवेशः निर्व्याजः स्नेहश्च वर्तते। एतेषां सरलातिसरलं कठिनातिकठिनं काव्यरचनापाण्डित्यं विलोक्य वारं वारं श्लोकोऽयं स्मरणमार्गं रुणद्धि यथा –

**साहित्ये सुकुमारवस्तुनि दृढन्यायग्रहग्रन्थिले**
**तर्के वा मयि संविधातरि समं लीलायते भारती।**

---

*[१४] अद्य प्रभृत्यवनताङ्गि तवास्मि दासः क्रीतस्तपोभिरिति वादिनि चन्द्रमौलो। अह्नाय सा नियमजं क्लममुत्ससर्ज क्लेशः फलेन हि पुनर्नवतां विधत्ते॥ कुमारसम्भवम् ५/८६*

*[१५] तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः। हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा॥ रघुवंशम्-१/१०*

*[१६] पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम्। सन्तः परीक्ष्यान्यतरद् भजन्ते मूढः परप्रत्ययनेयबुद्धिः॥ मालविकाग्निमित्रम् अङ्क-१/२*

*[१७] शक्तिनिपुणता लोकशास्त्रकाव्याद्यवेक्षणात्। काव्यज्ञशिक्षयाऽभ्यास इति हेतुस्तदुद्भवे॥ काव्यप्रकाशः १/३*

**शय्या वाऽस्तु मृदुत्तरच्छदवती दर्भाङ्कुरैरास्तृता**
**भूमिर्वा हृदयङ्गमो यदि पतिस्तुल्यारतिर्योषिताम् ॥**[१८]

एवं काव्यपठनावसरे हर्षकविः सहर्षं स्मर्यते तर्हि क्वचिच्च जयदेवस्योक्तिः पत्रकाव्यैः चरितार्थीक्रियते। यथा-

**येषां कोमलकाव्यकौशलकलालीलावती भारती**
**तेषां कर्कशतर्कवक्रवचनोद्गारेऽपि किं हीयते।**
**यैः कान्ताकुचमण्डले कररुहाः सानन्दमारोपिताः**
**तैः किं मत्तकरीन्द्रकुम्भदलने नारोपणीया शराः ॥**[१९]

एवमत्र पत्रकाव्यमाध्यमेन पण्डितप्रवरैः श्रीसत्यव्रतशास्त्रिमहोदयैः स्वकविकर्मपरिचयोऽपि दत्तः। सामान्यतया यदा वयं पत्रलेखनं कुर्मस्तदा सामान्याः सामाजिका व्यावहारिका एव विचारा मानसमारुह्य मतिं कुण्ठितां कुर्वन्ति, कूर्म इव संकोचमायाति विचारवृन्दं परमेतेऽत्रापवादीभूताः तेषां काव्यानि पत्रेष्वपि सहजां गतिं कुर्वन्ति। तेषां पत्राणि यदा वयं पठामस्तदा महाकाव्यफलानां मिश्ररसपानमिवानुभूतिं कुर्मः। महानुभावानां चरणयोर्मयाऽप्येकं पद्यपुष्पं सप्रणामं प्रस्तूयते।

**सूत्रैः स्वजीवनपटः पदजैः पदज्ञैः संसूत्रितो निखिलकोशलकर्मपूर्णः।**
**शास्त्रं समस्तमपि चिन्तितवान् स शास्त्री वृद्धौ गुणे हि सततं विहितः प्रयत्नः ॥**

**शास्त्रार्थचिन्तनपरं कविकर्मरक्तं श्रीहर्षमाघजयदेवसमं कवीन्द्रम्।**
**सत्यव्रतं हि सततं नतमस्तकस्सन् भोगायताऽमृतकविः प्रणमत्यमन्दम् ॥**

**सन्दर्भग्रन्थाः**


| | | |
|---|---|---|
| १. काव्यालङ्कारसूत्रवृत्तिः। | २. रघुवंशमहाकाव्यम्। | ३ . श्रीमद्भगवद्गीता। |
| ४. हितोपदेशः। | ५. सुभाषितरत्नभाण्डागारः | ६. उत्तररामचरितम् |
| ७. नीतिशतकम् | ८. नैषधमहाकाव्यम्। | ९ . अभिज्ञानशाकुन्तलम् |
| १० . कुमारसम्भवम् | ११. मालविकाग्निमित्रम्। | १२. काव्यप्रकाशः। |

१३. कुवलयानन्दः।

१४. पत्रकाव्यम्, सत्यव्रतशास्त्रिप्रणीतम् प्रकाशन ईस्टने बुक लिंकर्स ५८२५, न्यू चन्द्रवल जवाहरनगर, दिल्ली ११०००७


~~~~~~~~~~~

[१८] *संस्कृतसाहित्येतिहासः पृ-१३०*

[१९] *संस्कृतसाहित्येतिहासः पृ-५६*
~~~~~~~~~~~

वर्षम्-०४ अङ्कः-०४ शोधज्योतिः
जनवरी-दिसम्बर, २०२२ ISSN-2350-0700

# सहृदयप्रमाणमीमांसा

डॉ. राघवेन्द्र शर्मा[1]

संस्कृतशास्त्रप्रणयनस्य सुदीर्घा परम्परा वर्तते। अस्यां परम्परायां शास्त्रकाराः सप्रमाणं स्वमतम् उपस्थापितवन्तः। प्रमाणेनैव तेषां मतं प्रामाणिकं सर्वजनग्राह्यं निर्दुष्टं श्लाघ्यं विवादरहितं च जायते। प्रमाणस्य आवश्यकता सर्वत्रैवानुभूयते। अतएव सर्वाणि शास्त्राणि प्रमाणं स्वीकृतवन्तः। यथा -

चार्वाकास्तावदेकं द्वितयमपि पुनर्बौद्धवैशेषिकौ द्वौ।
भासर्वज्ञश्च साङ्ख्यस्त्रितयमुदयनाद्याश्चतुष्कं वदन्ति॥
प्राहुः प्राभाकराः पञ्चकमपि च वयं तेऽपि वेदान्तविज्ञाः।
षट्कं पौराणिकास्त्वष्टकमभिदधिरे सम्भवैतिह्ययोगात्॥[2]

अनेनैव प्रमाणितं भवति यत् प्रमाणं विना शास्त्रचर्चा न विधीयते। प्रमाणस्य स्वरूपं निरूप्यते तर्कभाषाकारेण केशवमिश्रेण। प्रमाकरणं प्रमाणम्।[3] प्रमा भवति यथार्थज्ञानम् सत्यज्ञानम् वा। अमरकोशकारः प्रमाणस्य अनेकार्थान् गृह्णाति। तद्यथा-

प्रमाणमहेतुमर्यादाशास्त्रेयत्ताप्रमातृषु।[4]

सत्यज्ञानेन यथार्थानुभवेन शास्त्रीयसिद्धान्तादीनां प्रतिपादनं कृतवन्तः सर्वे शास्त्रकाराः। सत्यज्ञानान्वितं यथार्थानुभवसिद्धं तत्त्वं प्रमाणसापेक्षमेव स्वीक्रियते।

काव्यमधिकृत्य विरचितं शास्त्रं काव्यशास्त्रमुच्यते। काव्यशास्त्रे काव्यप्रयोजनहेतुलक्षणभेद-दोषगुणालङ्काररसध्वनिरीतिवक्रोक्त्यौचित्यादीनां सविस्तरं विवेचनं प्राप्यते। काव्यशास्त्रे प्रमाणस्य चर्चा स्पष्टरूपेण प्रमुखतया वा न लभ्यते। किन्त्वत्र हृदयाह्लादरूपकाव्यफलस्य सम्यगनुभूतये सहृदयहृदयानुभवमेव प्रमाणत्वेन स्वीकृतवन्तः सर्वे काव्यशास्त्रिणः। अतः सहृदयप्रमाणं मीमांसतेऽत्र।

---

[1] *साहित्यविभागाध्यक्षः, शास. दू. श्री.वै. स्नातकोत्तर संस्कृत महाविद्यालयः, रायपुर (छत्तीसगढम्), मो. 7000041650, Email : raghvendrasharma43881@gmail.com*

[2] *पारम्परिक संस्कृत यूजीसी पृ. 130*

[3] *तर्कभाषा- पृ. 13*

[4] *अमरकोशः 3/3/53 पृ. 262*

काव्यप्रकाशकारः मम्मटाचार्यः काव्यप्रयोजननिरूपणावसरे काव्यप्रयोजनत्वेन सद्यःपरनिर्वृत्तिं स्वीकरोति। इदं काव्यस्य सर्वप्रमुखप्रयोजनं वर्तते। तद्यथोक्तं तेन- सकलप्रयोजनमौलिभूतं समनन्तरमेव रसास्वादनसमुद्भूतं विगलितवेद्यान्तरमानन्दम्।[५] काव्यस्य आनन्दोऽयं ब्रह्मानन्दसहोदर इवानुभूयते। आनन्दानुभूतये सहृदय एव प्रमाणमस्ति।

संस्कृतसाहित्यसर्जनं सर्वप्रथमं सहृदयेनैव जायते। प्राचेतसः वाल्मीकिः सहृदय आसीत्। क्रौञ्चद्वन्द्ववियोगं दृष्ट्वा तस्य सहृदयस्य अन्तःकरणं व्यथितं जायते। तदैव शोकाकुलहृदयात् श्लोकरूपसाहित्यस्य मूलं प्रस्फुटितमभवत्। तद्यथा-

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम्॥[६]

तदनन्तरमेव आदिकाव्यस्य रामायणस्योत्पत्तिः जायते। आदिकाव्यस्याविर्भावे सहृदयस्य वाल्मीकेः हृदयं एवं कारणं वर्तते। सहृदयस्य हृदयानुभूतिरेव प्रमाणत्वेन स्वीक्रियतेऽत्र।

सहृदयः सद्हृदययुक्तः करुणाशीलः कृपालुः निष्कपटी विद्वान् गुणग्राही गुणप्रशंसकः रसिकः विवेकशीलश्च भवति।[७] अर्वाचीनः काव्यशास्त्री आचार्यः राधावल्लभत्रिपाठी अस्य प्रमातेति अर्थं स्वीकरोति।[८] सनातनकविः साहित्यमर्मज्ञ आचार्यो रेवाप्रसादद्विवेदी सामाजिकत्वेन स्वीकरोति सहृदयम्। तद्यथा-

न स्यात् प्रयोजनं स्याद् वा कवेः सामाजिकस्य तु।
मातृस्तन्यं यथा काव्यं हन्त सवार्थसाधनम्॥[९]

आचार्य भरतमुनिः सहृदयं सुमनसः प्रेक्षकत्वेन उल्लिखति नाट्यशास्त्रे। तद्यथा- नानाभावाभिनयव्यञ्जितान् वागङ्गसत्त्वोपेतान् स्थायिभावानास्वादयन्ति सुमनसः प्रेक्षकाः।[१०]

**सहृदयस्य अन्तःकरणप्रमाणम्-** सहृदयस्य अन्तःकरणं यावदधिकं सहृदयं निर्मलं रसिकं च भवति तावदधिकं आनन्दानुभूतिर्जायते। आनन्दवर्धनानुसारेण शृङ्गारे विप्रलम्भे करुणे च मनः क्रमशः अधिकम् आर्द्रं भवति। तद्रूपमेव माधुर्यं प्रकर्षं प्राप्नोति। तद्यथा –

---

[५] *काव्यप्रकाश 1/2 वृत्ति, पृ.08*
[६] *रामायणम् 1/2/15*
[७] *संस्कृत हिन्दी कोश पृ. 1092*
[८] *अभिनवकाव्यालकारसूत्रम् 1/2/5-6*
[९] *काव्यालंकारकारिका 17, पृ. 15*
[१०] *नाट्यशास्त्रम् 6/32 वृत्ति, पृ. 93*

श्रृङ्गारे विप्रलम्भाख्ये करुणे च प्रकर्षवत्।
माधुर्यमार्द्रतां याति यतस्तत्राधिकं मनः॥
सहृदयहृदयावर्जनातिशयनिमितत्त्वादिति।[११]

माधुर्यगुणनिरूपणप्रसङ्गे मम्मटाचार्येणापि उच्यते यन्माधुर्यम् आह्लादकत्वं द्रुतिकारणं भवति। चित्तस्य द्रुतिकारणं आह्लादकत्वं श्रृङ्गारे करुणे विप्रलम्भे शान्ते च उत्तरोत्तरातिशायि भवति। तद्यथा –

आह्लादकत्वं माधुर्यं श्रृङ्गारे द्रुतिकारणम्॥
करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम्।[१२]

ओजोगुणे सहृदयचित्तस्य दीप्तिः भवति। चित्तस्य विस्ताररूपदीप्तिरेव वीररसे ओजोगुणं जनयति। वीरात् बीभत्से ततो रौद्रे च उत्तरोत्तरातिशायिनी जायते द्युतिरियम्। तद्यथा –

दीप्यात्मविस्तृतेर्हेतुरोजो वीररसस्थितिः॥
चित्तस्य विस्ताररूपदीप्तत्वजनकमोजः।
बीभत्सरौद्ररसयोस्तस्याधिक्यं क्रमेण च।[१३]

अनेन सिद्ध्यति माधुर्यादिगुणाभिव्यञ्जनायां सहृदयहृदयमेव प्रमाणम्।

**रसाभिव्यक्तौ प्रमाणम्-** आचार्यमम्मटानुसारेण गुणा रसस्याङ्गिनो धर्मा उत्कर्षहेतवोऽचलस्थितयो भवन्ति। तद्यथोक्तं तेन –

ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः।
उत्कर्षहेतवस्तेस्युरचलस्थितयो गुणाः॥[१४]

भरतमुनिः नाट्यशास्त्रे रसनिरूपणावसरे कथयति यद्भावाभिनयसम्बद्धान् स्थायिभावान् सहृदया हृदयेनास्वादयन्ति। तद्यथा –

भावाभिनयसम्बद्धान्स्थायिभावांस्तथा बुधाः।
आस्वादयन्ति मनसा तस्मान्नाट्यरसाः स्मृताः॥[१५]

---

[११] *ध्वन्यालोकः 2/8 कारिका वृत्तिश्च, पृ. 97*
[१२] *काव्यप्रकाशः 8 / 90-91, पृ. 417*
[१३] *काव्यप्रकाशः 8/ 92-93, कारिका वृत्तिश्च, पृ. 418*
[१४] *काव्यप्रकाश 81 87, पृ. 406*
[१५] *नाट्यशास्त्रम् 6 / 34, पृ. 93*

रसाभिव्यञ्जनायां विभावानुभावव्यभिचारिभिः सम्पुष्टः सहृदयहृदयगतः स्थायिभावः रसदशां प्राप्नोति। साधारणीकरणप्रक्रियायामपि सहृदयस्य अन्तःकरणस्य साधारणीकरणं सर्वप्रथमं भवति तदनन्तरमेव सहृदयस्यान्तःकरणे रसानुभूतिर्जायते। अनेनैव सिध्यति यद्रसानुभूतौ सहृदयस्यान्तःकरणम् एव प्रमाणम्। नाट्यशास्त्रस्य टीकाकारोऽभिनवगुप्तो रसस्याधिकारी विमलप्रतिभासम्पन्नः सहृदय इति मन्यते अभिनवभारत्याम्। तद्यथोक्तं तेन – अधिकारी चात्र विमलप्रतिभानशालिहृदयः।[१६]

साहित्यदर्पणकार आचार्यविश्वनाथस्तु करुणादिरसेषु अपि परमसुखानुभूतिं वर्णयन् सहृदयानुभवं प्रमाणत्वेन स्वीकरोति। तद्यथा-

करुणादावपि रसे जायते यत्परं सुखम्।
सचेतसामनुभवः प्रमाणं तत्र केवलम्॥[१७]

अनेन रसानुभूतौ सहृदयप्रमाणं सिध्यति।

**ध्वनिव्यञ्जनायां सहृदयप्रमाणम्-** ध्वन्यालोककार आनन्दवर्धनो ध्वन्यालोकस्यारम्भे एव प्रतिज्ञां करोति यत् 'सहृदयमनःप्रीतये तत् (ध्वनेः) स्वरूपम्'[१८] अनेनैव प्रामाणितं भवति यद् ध्वनेराविर्भावः केवलं सहृदयेभ्य एव विधीयते। अग्रे चासौ कथयति यः अर्थः सहृदयश्लाघ्यः काव्यात्मेति व्यवस्थितः वर्तते सः ध्वनिरूपः। तद्यथा-

योऽर्थः सहृदयश्लाघ्यः काव्यात्मेति व्यवस्थितः।[१९]

अपि च काव्यं सहृदयहृदयाह्लादकारित्वं स्वीकरोत्यसौ। अर्थात् सहृदयहृदयाह्लादकारकमेव काव्यं भवति। तद्यथा- लक्ष्ये तु परीक्ष्यमाणे सहृदयहृदयाह्लादकारि काव्यत्वम्।[२०] तन्मतानुसारेण काव्यस्यात्मा ध्वनिः सहृदयसंवेद्य एव भवति। तद्यथा- .... सहृदयहृदयसंवेद्यमनाख्येयमेव ध्वनेरात्मानम् ....।[२१] अनेनैव सिध्यति ध्वनिरयं सहृदयहृदयप्रमाणापेक्षी भवति।

**वक्रोक्तौ सहृदयप्रमाणम्-** वक्रोक्तिकारः कुन्तकः काव्यप्रयोजननिरूपणावसरे काव्यबन्धं सहृदयानां हृदयाह्लादकारकं मन्यते। यस्माद् आन्दन्दानुभूतिर्न जायते सहृदयान् तत् काव्यपदं नाधिरोहति। तद्यथा –

---

[१६] *अभिनवभारती 6/31 वृत्ति, पृ. 470*
[१७] *साहित्यदर्पणम् 3/4, पृ.52*
[१८] *ध्वन्यालोकः 1/1, पृ. 02*
[१९] *ध्वन्यालोकः 1/2, पृ. 11*
[२०] *ध्वन्यालोकः 1 / 13, वृत्ति, पृ. 38*
[२१] *ध्वन्यालोकः 1 / 19, वृत्ति, पृ. 68*

काव्यबन्धोऽभिजातानां हृदयाह्लादकारकः ।[२२]

अपि च काव्यगतवक्रतापि सहृदयाह्लादकारिणी भवति। तद्यथोक्तं तेन-

शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।
बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि ॥[२३]

अर्थं निरूपयन् कुन्तकाचार्यः कथयति यत् अर्थोऽपि सहृदयाह्लादकारी स्वस्पन्दसुन्दरश्च भवेत्। तद्यथा -

अर्थः सहृदयाह्लादकारिस्वरूपसुन्दरः ॥[२४]

अनेनैव सिध्यति यद् वक्रोतितत्त्वं सहृदयहृद्याह्लादकारकं भवति। तस्य प्रतीतिः सहृदयप्रमाणेनैव सम्भवति।

**अन्यप्रमुखाचार्यमते सहृदयप्रमाणम्-** अन्येऽपि नैके आचार्याः स्वकीयरचनासु सहृदयप्रमाणं स्वीकृतवन्तः तेषु प्रमुखाः सन्त्येते-

**राजशेखरः-** काव्यमीमांसाकारः आचार्यः राजशेखरः काव्यपाकविवेचनप्रसङ्गे सहृदयजनानामनुभवं एवं प्रमाणत्वेन स्वीकरोति। तद्यथा- पाकोऽभिधाविषयस्तत्सहृदयप्रशिद्धसिद्ध एव ।[२५] तेनाभिधीयते काव्यपाकनिर्णयः सहृदयहृदयानुभवसापेक्षो भवति।

**जयदेवः-** चन्द्रालोककारो जयदेवश्चन्द्रालोकस्यारम्भे कथयति यच्चिन्मयचित्स्वरूपसहृदयाः रसानां वृद्धिं कुर्वन्तु | तद्यथा – हं हो चिन्मयचित्तचन्द्रमणयः संवर्धयध्वं रसान् ।[२६] रसं निरूपयता तेनोच्यते यत् सहृदयाः अजडात्मानो भवन्ति। तेषां हृदयेषु गलद्वेयान्तरोद्भेदम् आह्लादं विकासयन् रसो भवति। तद्यथा –

गलद्वेयान्तरोद्भेदं हृदयेष्वजडात्मनाम्।
मिलन्मलयजालेप इवाह्लादं विकासयन् ॥[२७]

जयदेवेन रसनिरूपावसरे सहृदयस्य हृदयाह्लादः प्रमाणरूपे स्वीक्रियते।

---

[२२] *वक्रोक्तिजीवितम् 1 / 3, पृ. 07*
[२३] *वक्रोक्तिजीवितम् 1 / 7, पृ 15*
[२४] *वक्रोक्तिजीवितम् 1 / 9, पृ 35*
[२५] *काव्यमीमांसा अध्याय 5, पृ. 44*
[२६] *चन्द्रालोकः 1/2, पृ. 3*
[२७] *चन्द्रालोकः 6/2, पृ. 201*

**पण्डितराजजगन्नाथः-** आचार्यः पण्डितराजजगन्नाथः काव्यस्वरूपनिरूपणे रमणीयपदं स्वीकरोति। तस्य विवृतौ तेनोच्यते यद् रमणीयता लोकोत्तराह्लादजनकज्ञानगोचरता भवति। लोकोत्तरत्वे च हृदयानां अनुभवमेव प्रमाणम्। तद्यथा- रमणीयता च लोकोत्तराह्लादजनकज्ञानगोचरता। ........लोकोत्तरत्वं चाह्लादगतश्चमत्कारत्वापरपर्यायोऽनुभव-साक्षिको जातिविशेषः।[२८]

अनेनैव सिध्यति यत् प्रायः सर्वैराचार्यैः काव्यानन्दाय सहृदयहृदयमेव प्रमाणत्वेनाङ्गीकृतम्।

**अर्वाचीनकाव्यशास्त्रिणां मते सहृदयप्रमाणम्-** अभिराजयशोभूषणकार आचार्योऽभिराज-राजेन्द्रमिश्रः कथयति यत् काव्यस्यानन्दोऽमृतं तिरस्करोति यस्य कृते सहृदयानाम् अनुभव एव प्रमाणम्। तद्यथोक्तं तेन- अमृतमप्यतिशेते काव्यमिति सहृदयानामनुभवः।[२९]

प्रमाणेन प्रमाणितः पदार्थः प्रमेयमुच्यते। प्रमाता च भवति प्रमेयरूपपदार्थस्य अधिकारी। काव्यफलस्याधिकारी भवति प्रमाता। अभिनवकाव्यालङ्कारसूत्रकारः आचार्यराधावल्लभत्रिपाठी अपि सहृदयप्रमाणं स्वीकरोति। तन्मते प्रमाता भवति कविः सहृदयश्च। अतएवोच्यते तेन- प्रमाता च कविः सहृदयः। काव्यस्य श्रवणेन पाठेन नाट्यस्य विलोकनेन अन्यासां च कलानां प्रत्यक्षेण प्रमातुः सहृदयस्य चैतन्यमानन्त्यमुपयाति। अयमानन्त्यानुभव एव मुक्तिः।[३०]

काव्यालङ्कारकारिकाकारः सनातनकविरूपे प्रतिष्ठित आचार्यो रेवाप्रसादद्विवेदी काव्यस्य फलं रसं स्वीकरोति। रसस्य च स्थितिं सामाजिकचिति मन्यते। तद्यथोक्तं तेन-

रसस्तेषां फलं तच्च सामाजिकचितिस्थितम्।[३१]

अनेनैव सिद्धं भवति यदर्वाचीनाः आचार्याः सहृदयप्रमाणं स्वीकृतवन्तः।

**सहृदयभेदः** -यायावरीयो राजशेखरः काव्यमीमांसायां सहृदयं भावकं कथयति। तस्य भावयित्रीं प्रतिभां विवेचयति। तन्मतेन सहृदयस्य उपकुर्वाणा भावयित्री भवति। सा कवेः श्रममभिप्रायं च भावयति। तद्यथा-

भावकस्योपकुर्वाणा भावयित्री। सा हि कवेः श्रममभिप्रायं च भावयति। तया खलु फलितः कवेर्व्यापारतरुः।[३२] तदनन्तरमसौ सहृदस्य चतुर्भेदान् स्वीकरोति अरोचिकिनः, सतृणाभ्यवहारिणः, मत्सरिणः, तत्त्वाभिनिवेशिनः च। तत्रारोचकी सहृदयो द्विधा भवति नैसर्गिकस्वाभाविकभेदाभ्याम्। नैसर्गिकारोचिकिसहृदयाय कथमपि न रोचते कविता। स्वाभाविकारोचिकिसहृदयाय विशिष्टज्ञानजन्यैव

---

[२८] *रसगङ्गाधरः 1/1 वृत्तिः, पृ. 11*

[२९] *अभिराजयशोभूषणम् पृ. 14*

[३०] *अभिनवकाव्यालङ्कारसूत्रम् 1/2/6, पृ. 15-16*

[३१] *काव्यालङ्कारकारिका 23, पृ. 24*

[३२] *काव्यमीमांसा अध्यायः 4, पृ. 29*

कविता रोचते। मत्सरिणस्तु प्रतिभातमपि न प्रतिभातम्, परगुणेषु वाचं यमत्वात्। तत्त्वाभिनिवेशिसहृदयः तत्त्वमेव पश्यति। एतादृशो भावकः सहस्रेष्वेकादिको जायते। एवं प्रकारेण राजशेखरः भावकस्य प्रतिभानिरूपणे तद्भेदानपि विवेचयति।

**प्रत्यक्षादिप्रमाणवैफल्यम्-** काव्यशास्त्रे काव्यस्य फलम् आनन्द उच्यते। सर्वैः काव्यप्रस्थानैः काव्यानन्दग्रहणे सहृदयानां हृदयानुभूतिरेव स्वीकृता। तत्र प्रत्यक्षादिप्रमाणेन काव्यानन्दानुभूतिर्न जायते। आनन्दानुभूत्यर्थं सर्वाणि प्रत्यक्षादिप्रमाणान्यसिद्धानि भवन्ति।

**प्रत्यक्षप्रमाणासिद्धम्-** काव्यशास्त्रपरम्परायां काव्यात्मत्वेन अलङ्काररसध्वनिवक्रोक्त्यादि-तत्त्वानां ग्रहणं भवति। तत्त्वान्येतानि इन्द्रियार्था न भवन्ति। यतो हि इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षं भवति।[३३] इन्द्रियरससन्निकर्षो वा इन्द्रियध्वनिसन्निकर्षो वा इन्द्रियवक्रोक्तिसन्निकर्षो वा इन्द्रियालङ्कारसन्निकर्षो वा न भवितुमर्हति। तत्र काव्यप्रकाशकारः मम्माटाचार्यः कथयति यद्रसः स्वप्नेऽपि वाच्यो न भवेत्।[३४] यदि रसध्वनिवाच्यो भवति तर्हि स्वशब्दवाच्यता रसदोष आयाति। वस्तुध्वनेरलङ्कारध्वनेश्च बोधः व्यञ्जनया भवति अभिधया न भवति। अभिधावस्थायां हृदयाह्लादः न जायते। प्रतीयमानमन्यदेव वस्तु भवति तत् तु महाकवीनां वाणीषु विद्यमानं भवति।[३५] अलङ्कारश्च सौन्दर्यरूपो भवति।[३६] रसध्वन्यलङ्कारादीनां सौन्दर्यबोधः हृदयाह्लादविषयो वर्तते न तु इन्द्रीयविषयः।अत एवात्र प्रत्यक्षप्रमाणमसिद्धं प्रतीयते।

**अनुमानप्रमाणसिद्धम्-** अनुमितिकरणम् अनुमानम्। परामर्शजन्यज्ञानम् अनुमितिः जायते।[३७] इत्यनेन अनुमानलक्षणेन काव्यानन्दं व्यक्तिविवेककारः महिमभट्टः स्वीकरोति। असौ ध्वनिविरोधी आचार्योऽस्ति। सः ध्वनिं प्रतिपदं खण्डितवान्। तद्यथा-

वाच्यस्तदनुमितो वा यत्रार्थोऽर्थान्तरं प्रकाशयति।
सम्बन्धतः कुतश्चित् सा काव्यानुमितिरित्युक्ता॥[३८]

आचार्याभिनवगुप्तमतेन रसस्यानुमितिर्न भवति अभिव्यक्तिः भवति। तत्र तेन खण्डितेयमनुमितिः। अथ च काव्यप्रकाशकारेण आचार्यमम्मटेन अनुमितिः खण्डिता। यतो हि व्यञ्जनावृत्तिः अनुमितिद्वारा बोध्या न भवति। अतः अनुमानप्रमाणमसिद्धम्। यतो हि पर्वतोऽयं वह्निमान्। धूमवत्वात्। इत्यादिषु स्थलेषु हृदयाह्लादो न जायते।

---

*[३३] तर्कसंग्रहः पृ. 38*

*[३४] रसादिलक्षणस्त्वर्थः स्वप्नेऽपि न वाच्यः। काव्यप्रकाश 5/69 वृत्ति, पृ.238*

*[३५] ध्वन्यालोकः 1/4, पृ. 13*

*[३६] सौन्दर्यमलङ्कारः। काव्यालङ्कारसूत्रवृतिः 1/1/2, पृ.07*

*[३७] तर्कसंग्रहः पृ. 45*

*[३८] व्यक्तिविवेकः 1/25 4.84*

**उपमानप्रमाणासिद्धम्-** उपमितिकरणमुपमानम्। संज्ञासंज्ञिसम्बन्धत्वज्ञानमुपमितिः। तत्करणं सादृश्यज्ञानम्।[३९] सादृश्यज्ञानस्थले केवलम् उपमा भवति न तु अलङ्कारः। आचार्यपण्डितराजजगन्नाथेन उक्तं यद् यत्र सादृश्यज्ञाने चमत्कारो न जायते तत्र उपमालङ्कारो न भवति। तद्यथा- सादृश्यं सुन्दरं वाक्यर्थोपरस्कारमुपमालङ्कृतिः।[४०] यत्र सादृश्यं सुन्दरं जायते तत्रैवोपमालङ्कारो भवति। अथ च यत्र सादृश्यमेव न भवति तत्र तु इदमुपमानप्रमाणमसिद्धम्।

**शब्दप्रमाणासिद्धम्-** आप्तवाक्यं शब्दः। आप्तस्तु यथार्थवक्ता।[४१] शब्दप्रमाणे आप्तवाक्ये रसादीनाम् अभावात् आनन्दानुभूतिः न जायते। यतो हि आप्तवाक्यं नीरसम् अलङ्काररहितं सौन्दर्यरहितं च भवति। तेन आनन्दानुभूतौ बाधा आयाति। सः शब्दप्रधानो भवति। शब्दप्रधानकाव्यविषये मम्मटेनोच्यते यत् प्रभुसम्मितशब्दप्रधानवेदादिशास्त्रेभ्यः .......... शब्दार्थयोः गुणभावेन रसाङ्गभूतव्यापारप्रवणतया विलक्षणं यत्काव्यं लोकोत्तरवर्णनानिपुणक-विकर्मतत्कान्तेव सरसतापादनेनाभिमुखीकृत्य रामादिवद्वर्तितव्यं न रावणादिवदित्युपदेशं च यथायोगं कवेः सहृदयस्य च करोतीति सर्वथा तत्र यतनीयम्।[४२] अनेन सिध्यति यत् वेदादयः शब्दप्रधानो भवति, काव्यगतशब्दः रमणीयताधारितो भवति। तदगतरमणीयताबोधः सहृदयान्तःकरणेनैव सम्भवति न तु शब्दप्रमाणेन। काव्यस्थले प्रमाणमिदमसिद्धम्।

इत्यनेन विवेचनेन प्रमाणितं भवति काव्यगतसौन्दर्यानुभूत्यर्थं प्रत्यक्षादिप्रमाणान्यसिद्धानि जायन्ते। अतः निष्कर्षत्वेन प्रमाणितं भवति यत् सहृदयप्रमाणम् एवं काव्याय उपयुक्तम्।

**सन्दर्भग्रन्थसूचिः-**

1. शर्मा जानकीनाथ, सं. 2071, रामायणम्, 45तमं पुनर्मुद्रणसंस्करणम्, गीताप्रेस, गोरखपुरम्.
2. रायः, गङ्गासागरः, 2010, काव्यमीमांसा, चौखम्बाविद्याभवनम्, वाराणसी.
3. शास्त्री श्रीनिवासः, 2001, काव्यप्रकाशः, नवीनसंस्करणम्, साहित्यभण्डारः, मेरठम्.
4. सिद्धान्तशिरोमणिः, विश्वेश्वरः, 2006, तर्कभाषा, पुनर्मुद्रितसंस्करणम्, चौखम्बाविद्याभवनम्, वाराणसी.
5. झा मदनमोहनः, 2008 रसगङ्गाधरः प्रथमाननम्, पुनर्मुद्रितसंस्करणम्, चौखम्बासुरभारतीप्रकाशनम्, वाराणसी.
6. झा मदनमोहनः, 2006, रसगङ्गाधरः (द्वितीयाननस्योत्प्रेक्षानिरूपणान्तभागः), पुनर्मुद्रितसंस्करणम्, चौखम्बासुरभारतीप्रकाशनम्, वाराणसी.
7. शास्त्री शालिग्राम, 2000 साहित्यदर्पणः, पुनर्मुद्रणसंस्करणम्, मोतीलालबनारसीदासः, वाराणसी.
8. त्रिपाठी श्रीकृष्णमणिः, 2008, चन्द्रालोकः, चौखम्बासुरभारतीप्रकाशनम्, वाराणसी.

---

[३९] *तर्कसंग्रहः पृ.70*

[४०] *रसगंगाधरः द्वितीयाननम् पृ. 211*

[४१] *तर्कसङ्ग्रहः पृ.72*

[४२] *काव्यप्रकाश 1/2 वृत्ति, पृ.08*

--------------------------------------------------------------------------------
9. शर्मा 'रेग्मी' शेषराजः 1996, तर्कसंग्रहः तृतीयसंस्करणम्, चौखम्बासुरभारतीप्रकाशनम्, वाराणसी.
10. त्रिपाठी ब्रह्मानन्दः, 1996, व्यक्तिविवेक, तृतीयसंस्करणम्, चौखम्बासुरभारतीप्रकाशनम्, वाराणसी.
11. सिद्धान्तशिरोमणिः विश्वेश्वरः, 1998, ध्वन्यालोकः, पुनर्मुद्रितसंशोधितसंस्करणम्, ज्ञाममण्डललिमिटेडः, वाराणसी.
12. आप्टे वामनशिवरामः, 2001 संस्कृतहिन्दीकोशः, पुनर्मुद्रणसंस्करणम्, मोतीलालबनारसीदासः, वाराणसी.
13. साहित्यभूषणः, पण्डितकेदारनाथः, 2002, नाट्यशास्त्रम्, राष्ट्रिय संस्कृत संस्थान, नई दिल्ली.
14. पाण्डेयः परमेश्वरदीनः, 2005, वक्रोक्तिजीवितम्, चौखम्बासुरभारतीप्रकाशनम्, वाराणसी.
15. नगेन्द्र, 1960, हिन्दी अभिनवभारती, प्रथमसंस्करणम्, हिन्दीविभागः, दिल्लीविश्वविद्यालयः, दिल्ली.
16. मिश्रः अभिराजराजेन्द्रः, 2006 अभिराजयशोभूषणम्, प्रथमसंस्करणम्, वैजयन्तप्रकाशनम्, इलाहबाद.
17. त्रिपाठी राधावल्लभः, 2005, अभिनवकाव्यालङ्कारसूत्रम्, प्रथमसंस्करणम्, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी.
18. द्विवेदी रेवाप्रसादः 2014 काव्यालङ्कारकारिका, तृतीयसंस्करणम्, कालिदाससंस्थानम् वाराणसी
19. दास सोमनाथः, 2005, पारम्परिकसंस्कृतम् यूजीसी, शारिप्रकाशनम्, पुरी.
20. शर्मा केदारनाथः, 1979, काव्यालङ्कारसूत्रवृत्तिः, द्वितीयसंस्करणम्, चौखम्बामरभारतीप्रकाशनम्, वाराणसी
21. अभिमन्युः श्रीमन्नानालालः, 2008, अमरकोशः, पनर्मुद्रितसंस्करणम्, चौखम्बाविद्याभवनम्, वाराणसी.

~~~~~~~~~~~
~~~~~~~~~~~

वर्षम्-०४ अङ्कः-०४ शोधज्योतिः
जनवरी-दिसम्बर, २०२२ ISSN-2350-0700

# पुराणानामध्ययने सर्वेषां समानाधिकारः

डॉ. पङ्कजकुमारः रावलः[१]

**प्रस्तावना**

संशोधनस्य विषयोऽयं वर्तते यत् पुराणानामध्ययने सर्वेषां समानाधिकारः इत्यत्र किं नाम पुराणमिति जिज्ञासायां सत्यां निगद्यते यत् पुरति अग्रे गच्छतीति पुरा इति तुदादिगणपठितात् पुर अग्रगमने इति धातोःऔणादिके का प्रत्यये कृते पुराशब्दो निष्पद्यते, योऽव्ययो मन्यते। पुरातनः, प्रतनम्, पुरातनम्, चिरन्तनमित्यस्य समानार्थकाः शब्दाः विद्यन्ते[२] कोशग्रन्थानुगुणं सः शब्दः त्रिषु अर्थेषु प्रयुक्तो भवति तद्यथा- अतीतसमये, प्रबन्धे, सङ्कटे चेति। अपरः यथा – पुरा भवः पुराणमिति विग्रहे पुरा अव्ययात् सायं चिरं प्राह्णेप्रगेऽव्ययेभ्यष्टयुट्युलौ तुट्[३] अनेन सूत्रेण ट्यु प्रत्ययो भूत्वा व्याकरणप्रक्रियायां सत्यामयं शब्दः सिद्धो भवति। अपरा व्युत्पत्तिः यथा पुरा पुरतनम् अनीति जीवयति बोधयति इति पुराणं ग्रन्थविशेषः पुरा पूर्वकात् आदादिकात् अण् प्राणने इति धातोरचि णत्वे च कृते शब्दोऽयं निष्पद्यते।

इति तु व्याकरणशास्त्रानुसारं व्युत्पत्तिः जाता। किन्तु व्यासविरचितेषु पुराणेषु अपि पुराणशब्दस्यार्थः व्युत्पत्तिश्च अवलोक्यते। यथा- वायु-पुराणे, ब्रह्माण्ड-पुराणे, मत्स्य-पुराणे, महाभारते चेति। तद्विहाय सायणाचार्येण, यास्काचार्येण, पाणिनिमुनिना, मधुसूदन-सरस्वतिना, राजशेखरेण चापि व्युत्पत्तिः अर्थश्च प्रोक्तः। यथा- पद्मपुराणे- पुरा अर्थेषु आनयति इति पुराणमिति। वायुपुराणे यथा- पुरा परम्परां वक्ति पुराणं तेन वै स्मृतम्। मत्स्ये यथा- पुरातनस्य कल्पस्य पुराणानि विदुर्बुधाः। महाभारते यथा – पुराणमाख्यानं पुराणमिति। अर्थात् प्रचीनम् आख्यानम् एव पुराणम्। महर्षिणा यास्काचार्येण स्वकीये निरुक्तग्रन्थे पुराणशब्दस्य निवर्चनं कुर्वता निगदितमस्ति यत् पुराणं कस्मात् ? तस्योत्तरे भणति यथा – पुरा नवं भवति इति पुराणम्।[४] कथनस्याशयोऽयं विद्यते यत् पुराणं कस्मादुच्यते ? अतोऽत्र यत् कदापि पूर्वं नवं स्यात्। निरुक्ते यास्काचार्यस्यैवं प्रकारेण निर्वचनेन पुराणे नवीनतायाः भावो न विद्यते किन्तु पुराणशब्दस्यार्थः प्राचीन एव अस्ति। मधुसूदनसरस्वतिना निगदितम् – विश्वसृष्टेरितिहासः पुराणम् अर्थात् सम्पूर्णस्य विश्वस्य

---

[१] पुराणविभागः(सहायकाचार्यः), श्रीसोमनाथसंस्कृतविश्वविद्यालय-सञ्चालित कोलेज, वेरावलम्, Email-pankaj.yatkrupa@yahoo.com, Mo.9879329898

[२] अमरकोशः ३/१/७७

[३] पा. सू. ४/३/२२

[४] निरुक्तम् – ३/९/३४

इतिहासः यत्र वर्णितः तत् पुराणम् ।अनेन प्रकारेण विविधग्रन्थानां माध्यमेन पुराणशब्दस्य व्युत्पत्तिलभ्यार्थः प्रतिपादितोऽस्ति। पौराणिकाः रसिकाः भावुकाः भवन्ति। अतः श्रीमद्भागवते उक्त यत्

**निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम्।**
**पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः।**[५]
**वेदाः श्रीकृष्णवाक्यानि ब्रह्मसूत्राणि चैव हि।**
**समाधिभाषा व्यासस्य प्रमाणं तच्चतुष्टयम्॥**[६]
**तुलसीकाननं यत्र यत्र पद्मवनानि च।**
**पुराणपठनं यत्र तत्र सन्निहितो हरिः।**[७]

यथा निर्दिर्ष्टचतुर्भिः धर्मशास्त्रीया चर्चा पुष्टा एवं प्रमाणिता भवति। तद्वत् विविधैः मन्त्रानुगुणसम्भावितश्लोकैः विषयोऽयं सुस्पष्टो जायते। यथा तुलसीकाननेन, पद्मवनेन च भगवतः समुपस्थितिः प्रतीयते इति यथा प्रकृतौ विद्यमानेषु सर्वेषु पदार्थेषु पञ्चमहाभूतेषु च सर्वेषां समानाधिकारो वर्तते तद्वत् पुराणाध्ययने श्रवणे, पठने च समेषां समानाधिकारोऽस्तीति व्यासवचनानामध्ययनेन स्वतः प्रतीयते। महर्षिणा वाल्मीकिना महर्षिणा बादरायेण च निजग्रन्थेषु न क्वापि न कोऽपि अवरोधः दर्शितः श्रावितः उट्टङ्कितो वा विद्यते। भगवता वेदव्यासेन स्वनामधन्येन जगति सर्वेऽपि जीवाः जना लक्षिताः। तेषां समेषां जीवनशैलीं विलाक्य आवश्यकतानुगुणं देशकालौ सङ्कीर्त्य तत्तद् विषयाः गुम्फिताः उपस्थापिताश्च यत्र सर्वेऽपि समाजिकाः मह्यं विषयोऽस्ति मह्यं विषयोऽस्तीति समुद्घोषयन्ति। सर्वेषां जनानां पुराणादरोऽयं दृष्टवैव प्रतीयते यत् सर्वेऽपि पुराणपिपठिषवः सन्ति। मनुना स्वस्मृतौ यत् **धृतिः क्षमा दमो स्तेयः शौचमिन्द्रियनिग्रहः। धीर्विद्या सत्यमक्रोधः दशकं धर्मलक्षणम्॥**[८] इमानि धर्मस्य लक्षणानि प्रतिपादितानि तत्र एकं एकं लक्षणमादाय भगवता वेदव्यासेन पुराणोपपुराणेषु नैकाः कथाः नैके प्रसङ्गाश्च सच्चरितमाध्यमेन उपनिबद्धाः सन्ति। अनेनाधारेणैव **व्यासोच्छिष्टं जगत् सर्वमिति** वचनं प्रसिद्धमस्ति। प्रमेयस्य सिद्धिः प्रमाणैर्भवति। प्रमाणशून्यः विचारवादः सिद्धान्त अप्रामाणिकः भ्रान्तः विनेश्वरो हेयश्च प्रतीयते कथ्यते च। यथा रूपज्ञानाय चक्षुषः आवश्यकता गन्धाय घ्राणम्, शब्दाय श्रोत्रम्,रसाय रसना, स्पर्शाय त्वक्, सुख-दुःखाभ्यां मनः एतानि तत्तज्ज्ञातुमावश्यकं तद्वदनुमेयप्रकृत्याः परमाण्वादीनां ज्ञानाय हेत्वाभासे अनाधृतस्य व्यभिचारादिदोषशून्य व्यापितज्ञानस्य अथवा व्याप्य हेतौ आधृतमनुमानमपेक्षितं वर्तते। तथैव ब्रह्मधर्मादि- अतीन्द्रियम् अनुमेयपदार्थज्ञानं प्राप्तुं स्वतन्त्रं शब्दप्रमाणमपेक्षितं विद्यते। यथा

---

५ *भा.पु. १/१/३*

६ *तत्त्वार्थदीपनिबन्धः अ १/३*

७ *मा.पु. अ-१/७*

८ *मनु.स्मृति. अ २/१०*

संसारे पित्रोः ज्ञानाय सम्बोधनाय पुत्राय माता-पिता-आदि-शब्दज्ञानमावाश्यकं विद्यते। न्यायालयेष्वपि साक्षिणां शब्दप्रमाणाधारेण निर्णया भवन्ति। एतेभ्यः सर्वेभ्यः प्रमाणेभ्यो **निःश्रेयसाय लोकस्य धन्यं स्वस्त्यनं महत्तदिदं ग्राहयामास सुतमात्मवतां वरम्। सर्ववेदेतिहासानां सारं सारं समुद्धृतमिति॥**[९] वैदिकशब्दप्रमाणं विलक्षणं एव प्रतीयते वर्तते च। कारणं लोके न क्वापि शब्दाः स्वतन्त्रप्रमाणेन ख्याताः सन्ति। ते प्रत्यक्षानुमानप्रमाणाधृतेन विलसन्ति। दोषशून्यं प्रत्यक्षादिप्रमाणधृतसमाहितनिर्दोषाप्तवक्तुः शब्दप्रामाण्यमेव तत्र भवति। किन्तु अपौरुषेयमन्त्रब्राह्मणरूपः वेदस्तु सदा प्रमाणरूप एव वर्तते। शब्दस्य प्रामाण्यं सर्वत्र मान्यं तस्याप्रामाण्यमेव वक्तुः भ्रमप्रमादादिदोषेष्वाश्रितं भवति। अनया चर्चया वेदाः अनादिभूताः नित्याश्च सन्ति। तदस्ति कथनार्कभूतं तत्त्वं सत्त्वं च। मनुः व्यासः जैमिनिप्रभृतिभिः ऋषिभिः तथा स्वयं वेदो नारायणः साक्षादर्थद्विदनारायणेनापि वेदवाणी नित्यास्ति इति कथितं वर्तते। **वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे।**[१०] **।अत एव स नित्यत्वम्।**[११] **वाचा विरूप नित्यया।**[१२] **औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः।**[१३] वाक्यापदीयानुसारेण प्रत्येकं ज्ञानेन सह सूक्ष्मरूपेण शब्दस्याश्रयो भवति। यः कोऽपि विचारको यस्यां कस्यामपि भाषायां विचारं कर्तुं शक्नोति तत्र शब्दाः स्युरेव। **न सोऽस्ति प्रत्ययो लोको यः शब्दानुगमादृते।**[१४] जानाति इच्छति करोति च। अनेनाधारेण क्रमेण वा ज्ञानेन इच्छा, इच्छया कर्म भवति। यथा **ज्ञानजन्या भवेदिच्छा इच्छाजन्या भवेत् कृतिः।** अतः सृष्टिनिर्माणावसरे सर्वज्ञेश्वरायापि ज्ञानं (विचारः) तत इच्छा ततश्च कर्मावलम्बनं कृतं स्यात्। तदर्थमेव प्रोच्यते स तु सङ्कल्पशक्त्या सङ्कल्पमात्रेण सर्वं कर्तुं समर्थः किन्तु तस्मिन् सङ्कल्पे ततश्च करणे ताः तिस्रः शब्दशक्तयः स च त्रिविधो क्रमः क्रियायागतः। जानातीच्छति करोतीति च।

**वेदानामुपादेयता-**

यस्य निःश्वसितं वेदाः तस्य परमात्मनः निःश्वासभूताः वेदाः सन्ति। येषामाविर्भावस्तपसा अविच्छिन्नज्ञानधारया स्वतो ते प्रस्फूटिताः जाताः सन्ति। तेनैव वेदज्ञानेन मानवः धर्माधर्मम्, आवास-निवासम्, कर्तव्याकर्तव्यम्, आचारविचारम्, न्यायान्यायम्, सत्यमसत्यम्, ज्ञानमज्ञानम्, पुण्यमपुण्यम्, कर्माकर्म ज्ञातुं समर्थः शक्तश्च भवति। संस्कृतेः निर्णयं कर्तुमपि तेनैव ज्ञानेन अनुभवेन च प्रवृत्तो भवति। प्रत्यक्षानुमानात्मकं ज्ञानं प्रमाणैः अगम्यमज्ञातं तत्तत्त्वं ज्ञातुं ज्ञापयितुं च वेदानामावश्यकता- **प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते। एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता॥** इति साबरभाष्ये

---

[९] *भा.पु १-३-४१- ४२*

[१०] *मनु.स्मृ-१-२१*

[११] *ब्र.सू.१-३-२९*

[१२] *ऋक् ८-७५-६*

[१३] *जै.सू.१-५*

[१४] *वाक्यपदीयम्१-१२३*

निगदितमस्ति। स्वर्गकामो यजेत, कलञ्ज न भक्षयेत्। इत्यादिवेदवाक्यैः प्रतिपादिविहितप्रवर्तनं निषिद्धनिवर्तनं तर्केण निराकर्तुं न शक्यते। सन्ध्योपासनादीनि कर्माणि धर्मजनकानि तथा सुरापानादीनि कर्माणि निषिद्धकर्माणि अधर्मोत्पादकानि कर्माणि एतेषां सिद्धिः वेदवाक्यातिरिक्ता न भवति। प्रत्यक्षप्रमाणेन च तदवगन्तुं न शक्यते। वेदेषु विश्वासोऽस्ति यस्य वेदस्य प्रामाणिकतां यः स्वीकरकोति सोऽस्ति आस्तिकः। वेदान् वेदस्य प्रमाणानि च यः न स्वीकरोति सोऽस्ति नास्तिकः। नास्तिको वेदनिन्दकः एतदपि प्रसिद्धमिति अमरकोशे। वेदस्य स्वाध्यायः ये आस्तिकाः सन्ति तैः वेदस्य स्वाध्यायकर्म स्वीकृतम्। शतपथब्राह्मणे लिखितम् यत्–

**यावन्तं ह वै इमां पृथिवीं वित्तेन पूर्णां ददल्लोकं जयति त्रिभिस्तावन्तं जयति**
**भूयांसश्च अक्षय्यञ्च य एवं विद्वानहरहः स्वाध्यायमधीते तस्मात् स्वाध्यायोऽध्येतव्यः।**
**स्वाध्यायान्मा प्रमदः स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्।**
**वेदशास्त्रार्थतत्त्वज्ञो यत्र तत्राश्रमे वसन्। इहैव लोके तिष्ठन् स ब्रह्मभूयाय कल्पते॥**[१५]
**ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च।**
**मातापितरौ चास्य स्वर्गे लोके महीयते।**[१६]
**योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्।**
**स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥**[१७]

**अधिकारः**

**स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा।**
**कर्मश्रेयसि मूढानां श्रेय एवं भवेदिह॥**[१८]

सर्वेषां धार्मिकग्रन्थानामध्ययने सर्वोषामधिकारः वेदान् विहाय। द्विजेतरः वेदाध्ययनेनाधिकारं धारयति। तस्य मुख्यं कारणं वेदशास्त्रस्याज्ञा एव। विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि। वेदकोषस्य कोशाध्यक्षो द्विज एव। द्वितीयं च तत् -उपनीयः गुरुः शिष्यं वेदमध्यापयेद् विधिम्। गुरुः शिष्यस्योपनयनसंस्कारं कृत्वा वेदारम्भसंस्कारं च आचरय्य वेदं पाठयितुं क्षमो भवति।

---

[१५] *मनु.१२/१०२*

[१६] *महाभाष्यम् १-१-१*

[१७] *मनु.२ -१६८*

[१८] *भा.पु.१-४-२५*

**अष्टवर्षं ब्राह्मणमुपनयेत् गर्भाष्टमे वा।**
**एकादशवर्षं राजन्यं द्वादश वर्षं वैश्यम्॥**[१९]

येषामुपनयनसंस्कारः न सञ्जातः तेषां तत एव वेदप्रवेशे निषेधः स्वतः स्पष्टो भवति। शास्त्रेषु विश्वासः येषां नास्ति। तादृशेषु ईश्वरः दयापात्रो भूत्वा कथयति।

**न देवा दण्डमादाय रक्षन्ति पशुपालवत्।**
**यं तु रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम्॥**[२०]

**वैदिकधर्मः संस्कृतिश्च–**

वैदिककाले अधिकांशः सर्वेषां समयः स्वाध्याये अध्ययनाध्यापने च व्यतीतः अभवत्।

**काव्यशास्त्रविनोदेन कालो गच्छति धीमताम्।**
**व्यसनेन च मूर्खाणां निद्रया कलहेन वा॥**[२१]

तस्य प्रसिद्धं श्लोकोक्तं दृष्टान्तं वर्तते। कः कीदृशः तस्य परिचयः स कथं समयह्यापनं करोति तेन स्पष्टं सिद्धं च भवति। केचन पुरा गृहास्थाश्रमेऽपि ऋक् यजुरादि सूक्तैः भगवदुपासनं अकुर्वन्। यदानीं कर्मकाण्डाश्रयेण स्वयमुत्पन्ननिवारभक्षणेन जीवनं अयापयन्। बालोऽपि अश्वमेध, वाजपेय, राजसूयादियज्ञानामुपक्रमं कण्ठस्थीकृत्य अवदत्। यज्ञप्रक्रिया कण्ठस्थासीत्तदानीम्। नद्युपवनेषु उषित्वा स्वच्छतापूर्वकं प्रकृतिप्रणयेन पुरःसरं स्वाध्यायकर्म अकुर्वन्। विपत्तीनामुपशमनाय तदानीं देव्युपासना अभवत्। अनेन तत्काले सत्त्वगुणवृद्धिः अजायत।

**वेदाध्ययनेन अपि पुराणाध्ययने सर्वेषां समानाधिकारः।**

**वेदोपनिषदां साराज्जाता भागवती कथा।**[२२] वेदेषु मन्त्राध्ययने मन्त्रोच्चारे सर्वषामधिकारो नास्ति। किन्तु वदोपनिषदां कथानकं प्रतिपाद्यविषयं ज्ञातुं पठितुं सर्वषामधिकारो वर्तते पुराणाध्ययने। वेदेषु ये सिद्धान्ताः प्रतिपादिताः उपनिषत्सु ऋक्ष्सु याः कथाः निबद्धाः तासाञ्च विस्तारः पवित्रैः चरित्रैः पुराणोपपुराणेषु कृतः विद्यते। मातृदेवो भव तदर्थं तच्चस्पष्टीकर्तुं मदालसाचरित्रं पुराणे प्रसिद्धम्। सत्यकामजाबालस्य कथा वेदोपनिषदत्सु मन्त्ररूपेण वर्तते। तर्हि पुराणेषु सैव कथा श्लोकैः निबद्धा वर्तते। पितृदेवो भव तत् स्पष्टीकर्तुं मर्यादापुरुषोत्तमः रामः दशरथस्य वचनपालनाय वनं निर्गच्छति। आचार्यदेवो भव एतदर्थं पुराणेषु नैकाः कथाः नैके प्रसङ्गाः सन्ति। अतिथिदेवो भव तदर्थं भागवते कथितं

---

*[१९] पारस्करगृह्यसूत्रम् २-२-१/३*

*[२०] महा. भीष्म. प. ४८/४२*

*[२१] हितो. ३२.*

*[२२] प. पु. भा. मा. २/६७*

**गृहेषु येष्वतिथयो नार्चिताः सलिलैरपि।**
**यदि निर्यान्ति ते नूनं फेरुराजगृहोपमाः॥**[२३]

ईशोपनिषदि यः प्रमथः मन्त्रः ख्यातिं गतः सोऽपि भागवते प्राप्यते यथा –

**आत्मावास्यमिदं विश्वं यत्किञ्चिज्जगत्यां जगत्।**
**तेन त्यक्तेन भुञ्जिथाः मा गृधः कस्यस्विद्धनम्॥**[२४]

सत्यं वद एतद् वेदवचनं सिद्धं कर्तुं पुराणे भागवते सत्यावादी राजाहरिश्चन्द्रस्य कथानकं नवमे स्कन्धे आगच्छति। धर्मं चर एतदर्थं रामायण महाभारत- गीता- पुराणादीनि शास्त्राणि सन्ति। वेदोपनिषत्सु द्वासुपर्णा सयुजा सखायः एतत् प्रतिपादयितुं श्रीमद्भागवतमहापुराणे चतुर्थस्कन्धे पुरुञ्जनपञ्चाध्यायी विद्यते यत्र पुरञ्जनः अज्ञातः तेनैव स्वरूपेण विराजते। **अजामेकां लोहितशुक्लकृष्णां मन्त्रोऽयम् उपनिषत्सु तु वर्तते एव किन्तु वायुपुराणेऽपि अयं श्लोको वर्तते।**[२५] हिरण्मयेन पात्रेण इत्यस्यापि उदाहरणं पृथुचरित्रे भागवतमहापुराणे वर्तते। यजुर्वेदे पुरुषसूक्तं सर्वेषां कृते बुद्धिगम्यं नास्ति, तेषां चाधिकारे नागच्छति अपि तु भागवतमहापुराणे विराट्पुरुषवर्णनं द्वितीयस्कन्धे तेनैव भावेन प्रतिपादितं विद्यते। तत्र सर्वेषामधिकारः वर्तते। यदा वेदेषु स्त्रीणां वैश्यानां शूद्राणां सर्वेषां समानाधिकारः वैदिकं ज्ञानं प्राप्तुं नास्ति। किन्तु गीतायां भगवताप्रोक्तम्-

**चातुर्वण्यं मया सृष्टं गुणकर्मविभागशः।**
**तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम्॥**[२६]

अनेन श्लोकेन गुणकर्माधारेण वर्णाश्रमविभाजनं बह्वीनां समस्यानां समाधानं कृतं विद्यते। वेदाध्ययनं भवतु वा शास्त्राध्ययनं भवतु मनुष्यस्य चान्तिमं लक्ष्यं तु परमागतिरेवास्ति तदर्थं गीतायां भगवता प्रोक्तं **स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्॥**[२७] यो भगवद्भक्तो भवति तस्य विनाशो न भवति। वेदे वा पुराणे यस्य संशयः स विनश्यति यथा भगवता कथितं संशयात्मा विनश्यति। किन्तु स संशयः गुरोरग्रे शास्त्राणां पुरस्ताद् प्रस्थाप्यते चेत् निःसंशयो भूत्वा अन्ते स तरिष्यति। रामायणं – महाभारतपुराणोपपुराणानि धर्मशास्त्राणि वेदानां भाष्यभूतानि सन्ति। मन्त्राणां सिद्धान्तानां फलश्रुतिरूपाणि शास्त्राणि सन्ति। शुक्लयजुर्वदस्य कर्मकाण्डे प्रसिद्धः एकः मन्त्रः वर्तते।

---

[२३] *भा.पु.८-१६- ७*
[२४] *भा.पु- ८-१-१०*
[२५] *वायु.पु.१-१०-२३*
[२६] *गीता-४-१३*
[२७] *गीता-९-३२*

**चत्वारिश्रृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्तहस्तासो अस्य।**
**त्रिद्धा बद्धो वृषभो रोरवीति महो देवो मृर्त्याँ आविवेश॥**[२८]

तस्येव ज्ञानाय भागवते अष्टमे स्कन्धे षोडशेऽध्याये यथा-

**नमो द्विशीर्ष्णे त्रिपदे चतुः श्रृङाय तन्तवे।**
**सप्तहस्ताय यज्ञाय त्रयीविद्यात्मने नमः॥**[२९]

यदा कश्यपऋषिः अदित्यै पयोव्रतोपदेशं विधिं च कथयति तत्रावसरे नारायणस्मरणे आगच्छति। यथा ऋक्-यजु-साम-अथर्वाख्येन चत्वारः वेदाः सन्ति। तथैव वेदाः, ब्राह्मणानि, आरण्यकानि, उपनिषदश्च चत्वारो भागाः। तद्वदेव तज्ज्ञातुं वेदान् ज्ञातुं वेदानां चतुर्भागाञ्च ज्ञातुं रामायणम्, महाभारतम्, पुराणोपपुराणानि, धर्मशास्त्राणि च एतानि चत्वारि अङ्गानि सन्ति।

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति॥[३०]

**संशोधनपत्रस्य के के लाभाः**

- अनेन शोधपत्रेण वेदान् शास्त्राणि च प्रति श्रद्धावृद्धिर्भविष्यति।
- देशकालधर्मस्य ज्ञानं भविष्यति।
- सर्वे अपि अधिकारपूर्वकं शास्त्रेषु प्रवेशमेष्यन्ति।
- शास्त्राध्ययनेन मानवत्त्वं चिरं स्थास्यति।
- सनातनधर्मस्य बोधो भविष्यति।
- वेदानां जटिलं ज्ञानं पुराणैः शास्त्रैश्च सारल्येन ज्ञास्यति।
- शास्त्राणां समाजे प्रतिष्ठां वर्धयिष्यते।
- वेदाध्ययनस्याधिकारः शास्त्रैः सर्वेषां भवति।

---

[२८] *ऋग्.४.५८.३*

[२९] *भा.पु. ८-१६-३१*

[३०] *महा.आदि.१/१/२६७*

## सन्दर्भग्रन्थसूचिः


| क्रमः | ग्रन्थनाम | सम्पादकः | प्रकाशनस्थान् | प्रकाशनवर्षम् |
|---|---|---|---|---|
| १ | मनुस्मृतिः | श्री. पं. गोपालशास्त्री नेने | चौखम्भा संस्कृत संस्थान | २००८ |
| २ | ब्रह्मसूत्रम् | पं. रामकृष्ण त्रिपाठी | चौखम्भा संस्कृत सिरीज वाराणसी | २००७ |
| ३ | ऋग्वेदः | स्वामी गङ्गेश्वरानन्दजी | स्वामी गङ्गेश्वरानन्दजी आश्रम अहमदाबाद | २००४ |
| ४ | जैमिनिधर्मसूत्रम् | बदरीनाथ शुक्ल | मातीलाल बनारसी दास | २०१७ |
| ५ | वाक्यपदीयम् | भर्तृहरिः | चौखम्भा संस्कृत सिरीज वाराणसी | २००६ |
| ६ | अमरकोशः | पं. केशव मिश्र शुक्ल | चौखम्भा विद्या प्रतिष्ठान वाराणसी | २००८ |
| ७ | शतपथब्राह्मणम् | Maitreyee dash pande | New bharatiya book corporation delhi | २००८ |
| ८ | महाभाष्यम् | चारूदेव शास्त्री | मोतीलाल बनारसी दास | २०१२ |
| ९ | पारस्करगृह्यसूत्रम् | डॉ. वेदपाल | सत्यार्थ प्रकाशन न्यास हरियाणा | २००८ |
| १० | पद्मपुराणम् | द्वारकादास भट्ट जयेश रावल | गीताप्रेस गारखपुरम् | २००३ |
| ११ | तैत्तरियोपनिषद् | आ. केशवलाल वी. शास्त्री | चौखम्भा संस्कृत प्रतिष्ठान | २०१५ |
| १२ | ईशावास्योपनिषद् | आ. केशवलाल वी. शास्त्री | चौखम्भा संस्कृत प्रतिष्ठान | २०१५ |
| १३ | भागवतपुराणम् | द्वारकादास भट्ट जयेश रावल | गीताप्रेस गारखपुरम् | २००३ |
| १४ | वायुपुराणम् | शिवजीत सिंह | चौखम्भान विद्याभवन वाराणसी | २०२० |
| १५ | श्रीमद्भगवद्गीता | - | गीताप्रेस गोरखपुर | २०१३ |
| १६ | महाभारतम् | पं. रामनारायदत्त शास्त्री | गीताप्रेस गोरखपुर | २००९ |


~~~~~~~~~~
~~~~~~~~~~

वर्षम्-०४ अङ्कः-०४ शोधज्योतिः
जनवरी-दिसम्बर, २०२२ ISSN-2350-0700

# मृच्छकटिके विवाहविचारः

डॉ. डायालालः एम्. मोकरिया[१]

अस्माकं पूर्वजाः अनुभवैः तपसा च मानवजीवनं सुव्यवस्थितं कृतवन्तः। ऋषिमुनयः मानवजीवनं ब्रह्मचर्याश्रमः, गृहस्थाश्रमः, वानप्रस्थाश्रमः एवं संन्यासाश्रमः-इति चतुर्षु आश्रमेषु विभक्तं कृत्वा मार्गदर्शनं कृतवन्तः। एतेषु चतुर्षु आश्रमेष्वपि गृहस्थाश्रमः श्रेष्ठः कथितः वर्तते।1[२] बालकोऽभ्यासं कृत्वा स्वरीत्यनुसारं व्यवसायनिपुणः भवति। सः विवाहं कृत्वा गृहस्थाश्रमं प्रविशति। गृहस्थजीवनस्य प्रारम्भः विवाहेन भवति।[३] गृहस्थाश्रमे पतिपत्न्योः समन्वयोऽपेक्षितः भवति। जीवने सहजीवनसङ्गी आवश्यकोऽस्ति। विवाहः जीवनस्यानेकप्रयोजनानि सफलीकरोति। संस्कृतसाहित्ये विवाहस्य महत्त्वस्य वर्णनमस्ति। धार्मिकविधिविधानाय प्रायः दम्पत्योः आवश्यकता भवति। प्रजातन्तुं माव्यवच्छेत्सीः...।[४] इत्युक्त्यनुसारमस्माकं ऋषिमुनिभिः संततिवर्धनाय यद्यपि मार्गदर्शनं कृतमस्ति तस्मिन् विवाहस्य विशेषं महत्त्वमस्ति। मत्स्यपुराणेऽपि गृहस्थाश्रमस्य एतत् प्रयोजनमुक्तमस्ति॥[५] महाभारतेऽपि सर्वेष्वाश्रमेषु गृहस्थाश्रमः श्रेष्ठः कथितोऽस्ति।[६] विवाहस्य पवित्रसम्बन्धं स्थाप्य गृहस्थः जनः सम्यक् वंशवृद्धिं कर्तुं शक्नोति।

षोडशसंस्कारेषु विवाहोऽपि एकः महत्त्वपूर्णः संस्कारो वर्तते। वेदेष्वपि विवाहस्य सम्यक् वर्णनमस्ति।[७] मनुस्मृत्यां तु विवाहस्याष्टप्रकाराणामपि वर्णनमस्ति।[८] तत्र भारतीयसमाजे प्रचलितानां विवाहानां निर्देशः वर्तते।

---

[१] *आसि.प्रोफेसर, अनुस्नातकभवनम्, श्रीसोमनाथसंस्कृतयुनिवर्सिटी, वेरावलम्, दूरभाषक्रमाङ्कः - 9825512756, ई-मेइल- dmmokariya@gmail.com*

[२] *सानन्दं सदनं सुताश्च सुधियः कान्ता न दुर्भाषिणी सन्मित्रं सुधनं स्वयोषिति रतिश्चाज्ञापराः सेवकाः। आतिथ्यं शिवपूजनं प्रतिदिनं मिष्टान्नपानं गृहे साधोः सङ्गमुपासते हि सततं धन्यो गृहस्थाश्रमः॥ सुभाषितरत्नभाण्डागारः, 2.3 पृ. 213*

[३] *कर्म स्मार्तं विवाहाग्नौ कुर्वीतप्रत्यहं गृही। दायकालाहृते वापि श्रौतं वैतानिकाग्निषु॥ याज्ञवल्यस्मृतिः,1/97*

[४] *तैत्तिरीयोपनिषद्, 11.1*

[५] *मनुजास्तत्र जायन्ते यतो न गृहधर्मिणः। क्रमेणाऽऽश्रमसंप्राप्तिर्ब्रह्मचारिव्रतादनु। तस्य कर्तुर्नियोगेन संसारो येन वर्धितः। संसारस्य कुतो वृद्धिः सर्वे स्युर्यदतिग्रहाः॥ मत्स्यपुराणम्, 154.152*

[६] *आश्रमास्तुलया सर्वान् धृतानाहुर्मनीषिणः। एकतश्च त्रयो राजन्! गृहस्थाश्रम एकतः॥ महाभारतम्, शान्तिपर्व, 12.12*

[७] *गृह्णामिते सौभगत्वाय हस्तम्...। अथर्ववेदः, 14.1.50*

[८] *ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः। गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः॥ मनुस्मृतिः, 3.21*

संस्कृतसाहित्येऽपि विवाहानां वर्णनमस्ति। महर्षिवाल्मीकिः, महामुनिः व्यासः, महाकविः कालिदासः, नाट्यकारः भासः एवं भवभूतिः, शूद्रकः-इत्यादयः कवयोऽपि स्वग्रन्थेषु विवाहस्य निर्देशं कुर्वन्ति। एतेषां कवीनां काव्येषु मुख्यप्रतिपाद्यः विषयः काव्यरसः भवति। तेषां विषयवस्तु काव्यरसपोषकं भवति तदपि तस्मिन् समकालीनस्थितिः स्वाभाविकरीत्या दृष्यमाना भवति। महाकविः शूद्रकोऽपि तत्कालीनसमाजस्य काव्यमाध्यमेन वर्णनं करोति। मृच्छकटिकस्य समाजनिरूपणे विवाहविचारोऽपि प्रस्तुतः वर्तते।

विवाहः एकः महत्त्वपूर्णः कौटुम्बिकः उत्सवः वर्तते। परिवारजनाः अस्मिन्नुत्सवे आनन्दं नयन्ति। परिवारजनैः सह सम्बन्धिनः, ज्ञातिजनाः, बान्धवाः, स्वजनाः सर्वे आनन्दोत्सवे संलग्नाः भवन्ति। तस्मिन् सर्वेषां ग्रामजनानामपि सहयोगः भवति। विविधव्यवसायकाराणामपि आवश्यकता भवति। यथा पुरोहितः विधिविधानाय, सुवर्णकारः आभूषणाय, कुम्भकारः पात्राय, कलाकारः मनोरञ्जनाय आवश्यकाः भवन्ति। शूद्रकस्य मृच्छकटिकेऽपि विवाहोत्सवस्य केचन सन्दर्भाः प्राप्यन्ते। पटहादीनां वादनेन विवाहोत्सवे उत्साहस्य वृद्धिर्भवति। मृच्छकटिके विवाहोत्सवस्य पटहध्वनेः उल्लेखोऽस्ति।[९] अस्मिन् रूपके चारुदत्तः वधस्थानस्य पटहस्य विवाहपटहेन सह तुलनां करोति। अनेन सन्दर्भेण वरमालायाः अप्युल्लेखोऽस्ति।[१०] विवाहकाले वरकन्या परस्परं वरमालामारोपयति। वरमालामारोप्य कन्या वरस्य चयनं करोति। अस्मिन् प्रकरणे कन्या वराय मालामारोपयतीति स्पष्टरूपेण निरूपितमस्ति। वरमालायाः उपमां दत्वा कविना तस्मिन् कालस्य व्यवस्थायाः सङ्केतः कृतोऽस्ति।

विवाहेऽग्नेरपि विशेषं महत्त्वमस्ति। अग्नेः साक्षिणा विवाहसम्बन्धः भवेत्, सा परम्परा प्राचीनकालादागच्छति। अग्निसदृशः एव विवाहसम्बन्धोऽपि पवित्रः भवेत्, तादृशो भावः तस्मिन् वर्तते। कविः मृच्छकटिकेऽपि विवाहस्याग्नेः उल्लेखं करोति।[११] पतिपत्न्योः सम्बन्धः पवित्रः गणयन्नासीत्।

मृच्छकटिके विवाहेतरसम्बन्धस्याप्युल्लेखोऽस्ति। चारुदत्तः वसन्तसेनायां स्निह्यति। अनन्तरं तां प्राप्नोति। शकारः वसन्तसेनां प्राप्तुं प्रयत्नं करोति। शर्विलकमदनिकयोः अपि प्रणयप्रसङ्गः निरूपितोऽस्ति। कुलिनः अपि विवाहेतरसम्बन्धं कुर्वन्तः आसन्।[१२] युवकाः एवं धनिकाः वेश्यालयं प्रति गच्छन्तः आसन्।[१३] शर्विलकमदनिकयोः संवादप्रसङ्गे स्त्रीस्वभावस्य वर्णनमस्ति।[१४] अत्रापि विवाहोपरान्तस्य सम्बन्धस्य सङ्केतः

---

९ *...जाता विवाहपटहध्वनिभिः समानाः ॥ मृच्छकटिकम्,10.44*

१० *रक्तं तदेव वरवस्त्रमियं च माला कान्तागमेन हि वरस्य यथा विभाति। मृच्छकटिकम्, 10.44*

११ *एककार्यनियोगेऽपि नानयोस्तुल्यशीलता। विवाहे च चितायां च यथा हुतभुजोर्द्वयोः ॥ मृच्छकटिकम्, 6.16*

१२ *त्वत्स्नेहबद्धहृदयो हि करोम्यकार्यं सद्वृत्तपूर्वपुरुषेऽपि कुले प्रसूतः। रक्षामि मन्मथविपन्नगुणोऽपि मानं मित्रं च मां व्यपदिशस्यपरं च यासि॥ मृच्छकटिकम्, 4.9*

१३ *इह सर्वस्वफलिनः कुलपुत्रमहाद्रुमाः। निष्फलत्वममलं यान्ति वेश्याविहगर्भक्षिताः॥ अयं च सुरतज्वालः कामाग्निः प्रणयेन्धनः। नराणां यत्र हुयन्ते यौवनानि धनानि च॥ मृच्छकटिकम्, 4.10,11*

१४ *अन्यं मनुष्यं हृदयेन कृत्वा अन्यं ततो दृष्टिभिराह्वयन्ति। अन्यत्र मुञ्चन्ति मदप्रसेकमन्यं शरीरेण च कामयन्ते॥ मृच्छकटिकम्, 4.16*

वर्तते। मदनिका गणिकायाः वसन्तसेनायाः दासी अस्ति। शर्विलकः तां प्रति कथयति यत् स्त्रीषु रागः न कर्तव्यः। स्त्रियोऽनुरक्तं पुरुषं परिभवन्ति।[१५] अत्र सन्दर्भं पश्यामः चेत् ज्ञायते यदत्र कृता स्त्रीनिन्दा गणिकानामथवा गणिकानां दासीनां सन्दर्भेऽस्ति। अत्रापि विवाहेतरसम्बन्धं प्रत्यपि सङ्केतोऽस्ति।

गणिकाः अपि विवाहं कृत्वा सम्माननीयं पदं प्राप्तवत्यः आसन्। गणिकया सह विवाहोऽपि स्वीकार्यः आसीत्। अस्मिन् रूपके गणिका वसन्तसेना चारुदत्तेन सह सम्बन्धं स्थाप्य कुलवधूः अपि भवति। तथैव गणिकायाः दासी मदनिकापि शर्विलकं प्राप्नोति। डॉ.रमाकान्तः तिवारी लिखति यत् "मदनिका स्नेहमयी सहेली है और वह अपने प्रणय की निष्ठा के कारण ही 'वधू' बन गई है।"[१६] मदनिका अपीच्छितं पतिं प्राप्नोति।

पतिपत्न्योः सम्बन्धोऽविच्छिन्नः आसीत्। तस्मिन् कालेऽपि सतिप्रथा अथवा तत्सदृशो कोऽपि व्यवहारः आसीत्। चारुदत्तपत्नी धूता चारुदत्तस्य वधदण्डस्य सङ्केतं प्राप्य अग्निप्रवेशं कर्तुमिच्छति। पत्युरनिष्टं श्रोतुं नेच्छति।[१७] सा पुत्रं रोहसेनमपि स्वमनोभावं कथयति।[१८] तत्र पतिं प्रति पत्न्याः स्नेहस्य निर्देशोऽस्ति।

शूद्रकस्य समयेऽपि प्रेमविवाहस्य प्रचलनमासीत्। प्रणयिजनाः परस्परं मिलन्ति। परस्परमनुरक्ताः भवन्ति। अनन्तरं तेषां प्रेमविवाहे परिणमते। चारुदत्तः गणिकां वसन्तसेनां प्रेम करोति। शर्विलकः मदनिकां प्रेम करोति। अनन्तरम् एतेषां प्रेमविवाहे परिणमते। प्रेम कुरुतः प्रेमीजनान् जनाः विभक्तान् कुर्वन्तः नासन्। वसन्तसेना शर्विलकमदनिके प्रेमालापं कर्तुं पश्यति, तदा सा वदति यत् कस्यापि प्रीतौ विक्षेपः न भवेत्।[१९] धूता चारुदत्तस्य पत्नी अस्ति। सा अपि जानाति यत् चारुदत्तः वसन्तसेनायै प्रेम करोति। सा तस्य पत्निः अस्ति तदपि तयोः प्रेम्णि विक्षेपं न करोति। सा तु आपत्तिग्रस्तायाः वसन्तसेनायाः कुशलतामिच्छति।[२०] अस्मिन् रूपके प्रणयिपात्राणां प्रेम प्रोत्साहनेन पुष्टः भवति। प्रेमविवाहायापि प्रोत्साहनं दत्तमस्ति। विवाहस्याष्टप्रकारेषु अयं गान्धर्वविवाहोऽस्ति। मनुस्मृत्यनुसारं वरकन्ययोः इच्छया अन्योन्यसंयोगः कामेन भवति, सः कामसम्भवः मैथुन्यः गान्धर्वविवाहोऽस्ति।[२१] गान्धर्वविवाहोऽनुरागात्मकः सुखभोगात्मकोऽस्ति।[२२] अस्मिन् विवाहे प्रणयिपात्रयोः रागात्मकः प्रेम भवति।

---

[१५] *स्त्रीषु न रागः कार्यो रक्तं पुरुषं स्त्रियः परिभवन्ति। रक्तैव हि रन्तव्या विरक्तभावा तु दातव्या॥ मृच्छकटिकम्, 4.13*

[१६] *महाकवि शूद्रक, पृ. 338*

[१७] *न पुनरार्यपुत्रस्यामङ्गलाकर्णनम्। मृच्छकटिकम्, 10, पृ. 442*

[१८] *जात त्वमेव पर्यवस्थापयात्मानमस्माकं तिलोदकदानाय। अतिक्रान्ते किं मनोरथैः। ...न खल्वार्यपुत्रस्त्वां पर्यवस्थापयिष्यति। मृच्छकटिकम्-10, पृ.442*

[१९] *मा कस्यापि प्रीतिच्छेदो भवतु। मृच्छकटिकम्, 4, पृ. 220*

[२०] *दिष्टया कुशलिनी भगिनी। मृच्छकटिकम्, 10, पृ. 444*

[२१] *इच्छयाऽन्योन्यसंयोगः कन्यायाश्च वरस्य च। गान्धर्वः स तु विज्ञेयो मैथुन्यः कामसम्भवः॥ मनुस्मृतिः, 3.32*

[२२] *सुखत्वादबहुक्लेशादपि चावरणादिह। अनुरागात्मकत्वाच्च गान्धर्वः प्रवरो मतः॥ कामसूत्रम्, 3.5.30*

शूद्रकस्य काले निम्नस्तरस्यापि विवाहाः प्रचलिताः आसन्। मृच्छकटिके तस्यापि सङ्केतः प्राप्यते। मृच्छकटिकस्य पञ्चमेऽङ्के वर्षतोः वर्णनमस्ति। तस्मिन् कविः चन्द्रिकायाः तुलनां दुर्बलपतियुक्तनार्या सह करोति।[२३] शूद्रकस्य काले पत्न्याः अपहरणस्य दुर्व्यवहारोऽप्यासीत्। अत्र राक्षसविवाहस्य सङ्केतः वर्तते।

मृच्छकटिके समाजस्य वास्तविकतायाः वर्णनं वर्तते। तत्कालीनसामाजिकस्थितेः यथातथं वर्णनमस्ति। अस्मिन् प्रकरणे जनसामान्यस्य व्यवहारस्य स्पष्टरूपेण वर्णनमस्ति। कालिदासभवभूतिसदृशाः केचन कवयः प्रायः राजवैभवं दृष्टिपथं कृत्वा सामाजिकचित्रं प्रस्तुतं कुर्वन्ति। किन्तु अत्र कविः सामान्यजनानां जीवनमपि वर्णयति। अस्मिन् नाट्ये कविः तत्कालीनविवाहः एवं प्रेमसम्बन्धं यथातथं वर्णयति। अत्र कविः मानवजीवनस्य महत्त्वपूर्णस्य विवाहसंस्कारस्य अनेकसङ्केतान् दत्त्वा मानवजीवनं प्रदर्शितं करोति। विवाहस्य प्रसिद्धाष्टप्रकाराणां योग्यतायोग्यतासन्दर्भे डॉ. राजदेवः दूबे कथयति यत् “आठ प्रकार के विवाहों में चार प्रकार के विवाह प्रशस्त है तथा शेष चार अप्रशस्त है।”[२४] ब्राह्मदैवार्षप्रजापत्यविवाहाः प्राचीनकालादद्यावधिः स्वीकार्याः सन्ति। राक्षसपैशाचासुरविवाहाः प्रसंशनीयाः न सन्ति। आधुनिकयुगेऽपि इमे विवाहाः अपि भवन्ति किन्तु लोकलज्जया निर्बलतावशात् वा प्रकाशिताः न भवन्ति। गान्धर्वविवाहस्यापि प्रचलनमासीत्। अधुनिकयुगेऽप्ययं विवाहः प्रचलितोऽस्ति, किन्तु प्रसंशनीयः नास्ति। इत्थं, मृच्छकटिके पतिपत्न्योः सम्बन्धसूचकः विवाहसंस्कारः सम्यक्तया वास्तिकतया निरूपितोऽस्ति।

### सन्दर्भग्रन्थाः

1. अथर्ववेदः, सं.पं.श्रीपाद दामोदर सातवलेकर, स्वाध्याय मंडल, पारडी, गुजरात, षष्ठसंस्करण, 1997
2. कामसूत्रम्,सं.रामचन्द्र वर्मा, मनोज पब्लिकेशन्स, दिल्ली, 2006
3. तैत्तिरीयोपनिषद्, गीताप्रेस गोरखपुर, संवत, 2068
4. भारतीय संस्कृति के विविध आयाम, सं.डॉ.राजदेव दूबे, कला प्रकाशन, बी.एच.यु., वाराणसी, 2010
5. मत्स्यपुराणम्-पूर्वभागः, सं. रामप्रताप त्रिपाठी, हिंदी साहित्य संमेलन, प्रयाग, 1981
6. मनुस्मृतिः, सं.डॉ. राकेश शास्त्री, विद्यानीधि प्रकाशन, दिल्ली, 2005
7. महाकवि शूद्रक, सं. डॉ. रमाकान्त तिवारी, चौखम्बा विद्याभवन, वाराणसी,1968
8. महाभारतम्, सं. दिनकर जोशी, प्रवीण पुस्तक भंडार, राजकोट, २००९
9. मृच्छकटिकम्, सं.डॉ.शांति कुमार पंड्या, पार्श्व प्रकाशन, अहमदाबाद, 2001
10. याज्ञवल्यस्मृतिः, सं.डॉ.उमेशचन्द्र पाण्डेय, चौखभ्भा संस्कृत संस्थान, वाराणसी, विक्रमसंवत, २०७०
11. सुभाषितरत्नभाण्डागारः, सस्तु साहित्य मुद्रणालय, मुंबई, 1975

~~~~~~~~~~~

*[२३] ...ज्योत्सना दुर्बलभर्तृकेव वनिता प्रोत्सार्य मेघैर्हृता॥ मृच्छकटिकम्, 5.20*

*[२४] भारतीय संस्कृति के विविध आयाम, डॉ. राजदेव दूबे, पृ, 57*
~~~~~~~~~~~

वर्षम्-०४ अङ्कः-०४ शोधज्योतिः
जनवरी-दिसम्बर, २०२२ ISSN-2350-0700

# ज्योतिषशास्त्रे कालगणनाविचारः

डॉ. रमेशचन्द्रबाबूलालशुक्लः[१]

ज्योतिषां सूर्यादिग्रहाणां बोधकं शास्त्रं ज्योतिषशास्त्रं कथ्यते। सूर्यादिग्रहा एवं कालस्य बोधः यः कारयति तत शास्त्रं ज्योतिषशास्त्रं कथ्यते।[१] ज्योतिषशास्त्रं मुख्यतः चक्षुरूपेण वेदाङ्गे स्थितं वर्तते। अस्य ज्योतिषशास्त्रस्य तथैवावश्यकता वर्तते, यथा शरीरे नेत्रयोः। ज्योतिषशास्त्रस्य त्रयः स्कन्धाः सन्ति। यथा-

सिद्धान्तसंहिताहोरारूपस्कन्धत्रयात्मकम्।
वेदस्य निर्मलं चक्षुर्ज्योतिषाशास्त्रमनुत्तमम्॥[२]

प्रमाणेनानेन ज्योतिषशास्त्रस्य त्रयः स्कन्धाः (१)सिद्धान्त (२)संहिता (३)होरा रूपेण च सन्ति। अस्य षडङ्गेषु शिक्षाकल्पव्याकरणनिरुक्तछन्दज्योतिषम् एतेषु ज्योतिषशास्त्रस्य नेत्ररूपेण स्थानं विद्यते। प्रमाणं यथा-

शब्दशास्त्रं मुखं ज्योतिषं चक्षुषी
श्रोत्रमुक्तं निरुक्तञ्च कल्पः करौ।
या तु शिक्षास्य वेदस्य सा नासिका
पादपद्मद्वयं छन्दःआद्यैर्बुधैः॥[३]

एवं ज्योतिषशास्त्रस्य नेत्ररूपेण वेदाङ्गे स्थानं विद्यते। अत्र सूर्यसिद्धान्तीयकालमधिकृत्य तद्विषेयिणी चर्चा प्रस्तूयते। स कालो द्विधा, एकः लोकसंहारकारकोऽन्यश्च कलनात्मकः (गणनात्मकः) इति। तदुक्तं सूर्यसिद्धान्ते-

लोकानामन्तकृत्कालः कालोऽन्यः कलनात्मकः।
स द्विधा स्थूलसूक्ष्मत्वान्मूर्तश्चामूर्त उच्यते[४]॥

लोकानां प्राणिनामन्तकृन्नाशकर्ता एकः कालो यमराजानुयायी प्रसिद्धः। कालदण्डाद्यमो दण्डमिति मार्कण्डेयपुराणान्तर्गतदुर्गासप्तशतिकावचनात्। अन्यः कलनात्मको गणनात्मकः कालो ज्योतिषसिद्धान्ते प्रसिद्धः। स च स्थूलसूक्ष्मत्वात् मूर्तोऽमूर्तश्चोच्यते। स्थूलः कालो मूर्तः, सूक्ष्माश्चाऽमूर्तः। इति क्रमेण कथ्यते।

स्थूलसूक्ष्मकालमानपरिचयः-

---

*[१] असिस्टेण्ट प्रोफेसरज्योतिषशास्त्रविभागः, श्रीसोमनाथसंस्कृतयुनिवर्सिटी, सञ्चालितसंस्कृतकोलेज, वेरावलम्, गिरसोमनाथः, गुजरातप्रदेशः भारतम्-३६२२६५, मो. ८८४९५५६१०८/९९१३७०१९०१, E.mail.-rcbshukla@gmail.com*

प्राणादि: कथितो मूर्तस्त्रुट्याद्योऽमूर्तसंज्ञक:।
षड्भि: प्राणैर्विनाडीस्यात् तत्षष्ट्या नाडिका स्मृता[५]॥

स्वस्थपुरुषस्य श्वासोच्छ्वासान्तर्वर्तीकाल: प्राण:। स च दशगुरुवर्णोच्चारणकालेन समो भवति। (गुर्वक्षरै: रवेन्दुमितैरसुरितिभास्करोक्ते:) स आदिर्यस्यासौ प्राणादि:, (असु-पल-दण्डादिकोवक्ष्यमाण:) प्राणानन्तरायमाण: काल: मूर्त: व्यवहारार्ह: स्थूलत्वात् कथित:। सूक्ष्मत्वादमूर्त: स च यन्त्रादिना गणयितुं शक्यते इति भाव: "सूच्याभिन्ने पद्मपत्रे त्रुट्यारित्यभिधीयते" इति नारदोक्ते: योक्ष्णोर्निमेषस्य खरामभाग: स तत्परस्तच्छतभागउक्ता त्रुटिरितिभास्करोक्तेश्च स: कालोऽतिसूक्ष्मात्वान्नैव यन्त्रादिनोपलक्ष्यतेऽतोऽमूर्तत्वं तस्य युक्तमिति। अथ व्यवहारोपयोगित्वात् कालपरिभाषा कथ्यते, षडभि: प्राणैरित्यादि। षड्भिरसुरभिरैका विनाडी विघटिका भवति। तासां विघटिकानां षष्ट्या एका नाडिका घटिका स्मृता गणकैरिति। अङ्गुष्ठमूलगता कफ, वात, पित्त, द्योतिका नाडी यावता कालेनैकरूपां गतिं वहति सकालो नाडीसंज्ञक:। एवं घटिकायन्त्रेण य: काल: उत्पद्यते स घटी संज्ञो दण्दयन्त्रेणोत्पन्नश्च दण्डाख्य:। एवं यन्त्रभेदेन नामभेदौ वस्तुतस्ते शब्दैकपर्याया एव 'उपसर्गेण' धात्वर्थो बलादन्यत्र नीयते। इत्यादिनात्र वि उपसर्गेण तत् षष्टिभागात्मक: कालो विघटिका भवतीति सर्वं ज्योतिर्विदामतिरोहितमेव।

सौरमते तु लङ्कायामर्धरात्रिकाले रविवासरे कालप्रवृत्तिरिति। यत: इष्टदिने अहर्गणानयनमेवमार्हा-
अत ऊर्ध्वममीयुक्ता गतकालाब्दसङ्ख्यया .............. लब्धोनरात्रिरहितालङ्कायामार्धरात्रिक:[६]॥

अनेन लङ्कायामर्धरात्रिकाले रविवासरे सृष्टिरव्यक्ता तत एव कालगणनासंयाता। अस्माकं ज्योतिषशास्त्रे मतद्वयं प्रचलितं ब्राह्मं, सौरञ्च, ब्राह्मपक्षे विधिदिनादौ-सृष्टि: तत: कालगणना, सौरपक्षे तु विधिदिनाद्यनन्तरं सृष्ट्यादि: तत: कालगणना। मतद्वयमप्यार्षमेव केचनाचार्यै: सौरमतानुसारं ग्रहगणितादिकं कुर्वन्ति, केचन च ब्राह्ममतानुसारेण। उभयो: पक्षयो: गणनात्मककालविषये एकैव परिभाषा। अयं हि सृष्ट्यादित: सृष्ट्यन्तं यावत् गणनात्मक: काल: महाकालस्य खण्डात्मक इति। अस्य गणनात्मकस्य कालस्य मानानि नवविधानि कल्पितानि सन्ति। यथोक्तं सूर्यसिद्धान्ते-

ब्राह्मं दिव्यं तथा पित्र्यं, प्राजापत्यं गुरोस्तथा।
सौरं च सावनं चान्द्रमार्क्षं मानानि वै नव [७]॥

एषु चतुर्भिसौरचान्द्रार्क्षसावनै: जगति व्यवहार: प्रचलतीति। यथोक्तं तत्रैव।

चतुर्भिर्व्यवहारोत्र सौरचन्द्रार्क्षसावनै:।
बार्हस्पत्येन षष्ट्यब्दं ज्ञेयं नान्यैस्तु नित्यश: [८]॥

एक: कल्प: ब्राह्मदिनं भवति उक्तञ्च सूर्यसिद्धान्ते-

इत्थं युगसहस्त्रेण भूतसंहारकारक:।
कल्पो ब्राह्ममह: प्रोक्तं शर्वरी तस्य तावती [१]॥

अस्य वासना रविवर्षाणां लक्षचतुष्टयेन द्वात्रिंशत्सहस्त्राधिकेन चतुर्गुणेन कृतं नाम प्रथमो युगचरण: १७२८०००। त्रिगुणेन त्रेतासंज्ञौ द्वितीयो युगचरण: १२९६०००। द्विगुणेन द्वापराख्यस्तृतीया: ८६४०००। एकगुणेन कलिश्चतुर्थ: ४३२०००। स्वसन्ध्यांशः तदंशकैर्निजार्कभागसंमितैर्युवाश्च। युगचरणप्रमाणस्य यौ द्वादशांशस्तत्प्रमाणा: एव तस्य चरणस्य सन्ध्या चरणादौ भवति। तावांश्च सन्ध्यांश: स चरणस्यान्ते। एवं स्वसन्ध्यासन्ध्यांशै: एते युगचरणा: कथिता:। कृतादौ सन्ध्यावर्षाणि १४४०००। कृतान्ते, सन्ध्यांश: १४४००० त्रेतादौ सन्ध्यांश: १०८००० त्रेतान्ते सन्ध्यांश: १०८०००। द्वापरादौ सन्ध्या ७२०००। द्वापरान्ते सन्ध्यांश: ६२०००। कल्यादौ सन्ध्या ३६०००। कल्यान्ते सन्ध्यांश: ३६०००। तद्युतौ युगमिति। तेषां चतुर्णां चरणप्रमाणानां युतौ युगप्रमाणम्। तच्च रदाब्धयोऽयुतास्ताः ४३२०००। मनु:क्षमानगैर्युगैरिति तैर्युगैरैक्यसप्तत्यामितिरेकोमनु: तैर्मनुभिर्युगेन्द्रभिश्चतु- र्दशभिर्दिनं सरोजजन्मनो निशा च तत्प्रमाणिका। ब्राह्मणो, दिनतुल्या, रात्रिश्च भवति। ब्राह्मादिने चतुर्दशमनव: एकसप्ततिर्यावच्चतुर्दशभिर्गुण्यते। तावत् षडूनं सहस्त्रं भवति। स्मृति पुराणादौ। रवेरेकभगणभोगकाल:, एकं सौरवर्षम्। तदेव दिव्यदिनम्। ३६० दिनं= १वर्षम् = १दिव्यदिनम्। ३६०दिव्यदिनम्= १ दिव्यवर्षमानम्। अनेन प्रमाणेन, १२००० वर्षं= चतुर्युगम्।

१२००० x ३६० = ४३२०००० सौरवर्षाणि। चतुर्युगानां पृथक्-पृथक् नामानि एवं सन्ध्यावर्षाणि सन्ति।

यथा- कृतयुगे धर्मपादा: = ४

त्रेतायुगे = ३

द्वापरौ धर्मपादा: = २

कलौ धर्मपादा: = १

एतेषां योग: = १०। ततो अनुपातेन-

महायुग x ४ = कृतयुगमानम्।

१० म०यु० x ३ = त्रेतामानम्।

१० म०यु० x २ = द्वापरमानम्।

१० म०यु० x १ = कलिर्मानम्।

१० कृतयुगादीनां षष्ठांश: स्वक: सन्धय:। सन्धिसन्ध्यांशसहितं चतुर्युगमानमत्र बोध्यम्।

७१ महायुगमानम् = १ मनु:।

एकस्मिन् कल्पे = १४ मनव:।

७१ x १४ = ९९४ म०यु० = १ कल्पः।
कृतवर्षप्रमाणं मनुसन्धिः भवति। अत एव सन्धयः मनूनां पञ्चदश (१५) भवन्ति।
१ मनुसन्धिः = कृतयुगम्, अस्यै महायुगात्मकं मानं साध्यते-
म०यु० x ४ = कृतम् = १ मनुसन्धिः।
१० म०यु० x ४ x १५ = १५ मनुः सन्धिमानम् = ६ म०यु०।
१० ९९४ म०यु०+६ म०यु० = १००० म०यु० = १ कल्पः = एकं ब्राह्मदिनम् अतो युगसहस्रेण ब्राह्मणो दिनमुच्यते इति समुपपन्नम्। एतत्समैव रात्रिमानं च भवति। एवं कल्पद्वयं ब्राह्मणस्य अहोरात्रम्। अनेन अहोरात्रप्रमाणेन वर्षशतं परमायुः ब्राह्मणः उक्तञ्च सूर्यसिद्धान्ते-

परमायुः शतं तस्य तयाहोरात्रसङ्ख्यया।
आयुषोऽर्धमितं तस्य शेषकल्पोऽयमादिमः[१०] ॥

अर्थात् ब्राह्मणः आयुषोऽर्धगतं अवशिष्टस्य यमादिमः कल्पः। सौरमते सृष्ट्यादितः कृतयुगान्ते गताः सौराब्दाः = १९५३७२००००। उक्तञ्च सूर्यसिद्धान्ते-

सूर्याब्दसङ्ख्यया ज्ञेयाः कृतस्यान्ते गता अमी।
खचतुष्क-यमाद्यग्नि-शररन्ध्रे-निशाकराः[११] ॥

गतानां षण्मनूनां कालं तत्सन्धिभिः सह कल्पादिसन्धिनासार्धं तथा वैवस्वतमनोर्यातं गतं युगानां त्रिघनं सप्तविंशतिसंख्याकमिदं कृतयुगमानं च सर्वं सम्पीड्येकीकृत्य ततो दिव्यसंख्यया पूर्वोक्तं सृष्टकालं सजातीयं कृत्वा प्रोह्य हित्वा कृतयुगस्यान्ते सूर्याब्दसङ्ख्यया खचतुष्कयमाद्य्यग्निशररन्ध्रनिशाकरा च अमी अब्दा गता ज्ञेयाः। यथामानेन-

६ मनुः = ७१ म०यु० x ६ = ४२६ x ४३२०००० = १८४०३२००००
७ सन्धयः = ७ x १७२८००० = १२०९६०००
२७ म०यु० = २७ x ४३२०००० = ११६६४००००
कृतयुगमानम् = १७२८०००
योगः = १९७०७८४००००
सृष्टिकालः = ४७४०० x ३६० =-१७०६४०००
कृतयुगान्ते सौराब्दाः गताः = १९५३७२००००
इतः परं त्रेतादीनां व्यतीतानि मानानि संयोज्य वर्तमाने गताः सौराब्दाः सिद्ध्यन्त्येव।
यथा- = १९५३७२००००
त्रेतायाः मानम् = + १२९६०००

द्वापरस्य मानम् = + ८६४०००
कलियुगे (सं. २०५८ बैक्रमसम्बत्सरे) गताब्दाः = + ५१०२
इष्ट संवत्सरे सौराब्दाः गताः = १९५५८८५१०२
एकार्बुद, पञ्चनवतिकोटयः अष्टपञ्चाशतलक्ष◌ाणि, पञ्चाशीतिसहस्राणि, द्वयाधिकं शतैकमिति।

दिब्यमानम्-दिब्यं दिनं मानमेकं वर्षमितं भवति। ३६० सौरदिनं = १ सौरवर्षः = १ दिव्यदिनम् = ३६० दिव्यदिनम् = १ दिव्यवर्षम् एवमेव सर्वं ज्ञेयम्। एतत्तु देवानां कृते भवति। यदुक्तं सूर्यसिद्धान्ते भूगोलाध्याये-

सुरासुराणामन्योन्यमहोरात्रं विपर्ययात्।
यत्प्रोक्तं तद्भवेद्दिव्यं भानोर्भगणपूरणात् [१२]॥

अत्र देवानामसुराणाञ्चाहोरात्रं तुल्यमेव किन्तु विशेषोऽत्रायं देवानां यद्दिनं तदसुराणां रजनी या च देवानां रजनी तदसुराणां दिनं भवति। एवं दिनरात्रिविपर्ययात् देवानामसुराणाञ्चाहोरात्रयोरुत्पत्तिर्तुल्यो जायते। अत्र विचार्यते शास्त्रानुसारेण देवानां स्थितिः मेरौ तदधः नाडी वृत्ताद्दक्षिणभागे दैत्यानां स्थितिः कुमेरौविति अनयोः स्थानयोः षड्भान्तरे (१८०°) दूरी भवति। अनयोर्मध्ये निरक्षप्रदेशः। उभयोरपि नाडीवृत्तमेव गर्भक्षितिजम्। नाडीवृत्तादुत्तरदिशिमेषादिषण्णामहोरात्रवृत्तानां देवभागे स्थित्या तेषु गच्छन्तं सूर्यषण्मासपर्यन्तं देवा अवलोकयन्ति। गर्भक्षितिजाख्य नाडी वृत्तादुपरिरवेः स्थित्वात्। अतो देवभागे षण्मासपर्यन्तं रवेः दर्शनात् दिनं पुनश्च तुल्यानि षड्राशीनां नाडीवृत्ताद्दक्षिणतः अधः स्थित्वात्तेषु गच्छन्तं सूर्यः नावलोकयन्ति देवाः। गर्भक्षितिजवृत्तरूपनाडी-वृत्तादधः स्थित्वाद् रवेः एकः सौरमासः। एवं नाडी वृत्ताद्दक्षिणस्यां दिशिदक्षिणध्रुवाऽधः स्थितानां दैत्यानां कृते विपरीतभावः स्यात्। ते तुलादिषड्ड राशिषु स्थितं सूर्यमवलोकयन्ति। यतः सूर्यदर्शनात् तेषां दिनं तथा च मेषादिषड्ड राशिषु गच्छन्तं सूर्यं तेषां गर्भक्षितिजरूपनाडीवृत्तादधः स्थित्वात् ते रविं नावलोकयन्ति। अतः रव्यदर्शनात् तेषां कृते रजनी। अत एव देवानां दिनं दैत्यानां रजनी तथा च देवानां रजनी दैत्यानां दिनमिति सुस्पष्टमेवोपपद्यते। एवं देवासुरयोः अहोरात्रप्रमाणमेकमेव रवेः भगणभोगकालः मितम् एतेन दिव्यदिनं जातम्। ३६० दिव्यदिनानि = १ दिव्यवर्षम्।

ब्रह्ममतानुयायिना भाष्करेणापि सिद्धान्तसिरोमणौ-
रवेश्चक्र भोगोऽर्कवर्षं प्रदिष्टं द्युरात्रञ्च देवासुराणां तथैव। इत्युक्तम् दिव्यदिनकलनम् एवमेव जायते।

पैत्र्यमानम्- पैत्र्यं मासेन भवति (अर्थात पितृदिनं एकचान्द्रमासतुल्यं भवति) मयासुरकृतप्रश्नस्योत्तरे तथा भगवान् सूर्य: पितर:, शशिगा:, पक्षम्। वर्षात् पितृणां कृते पञ्चदशतिथ्यात्मकं दिनं पञ्चदशतिथ्यात्मिका च रजनी भवति। द्वयोर्मेलनेन एक, चान्द्रमासमितं अहोरात्रं भवति।

त्रिंशता तिथिभिर्मासश्चान्द्र: पित्र्यमह: स्मृतम्।
निशा च मासपक्षान्तौ तयोर्मध्ये विभागत: [१३]॥

प्राजापत्यमानम्- सूर्यसिद्धान्तोक्ते: मनो: कालमेव प्राजापत्यसंज्ञया बोध्यते न तत्र दिननिशोर्भेद:। उक्तश्च सूर्यसिद्धान्ते-

मन्वन्तरव्यवस्था च प्राजापत्यमुदाहृतम्।
न तत्र द्युनिशोर्भेदो ब्राह्मं कल्प: प्रकीर्तितम् [१४]॥

बार्हस्पत्यमानम्- वैशाखादिद्वादशमासेषु कृष्णे पक्षे पञ्चदशे तिथौ (अमायामित्यर्थ:) कृत्तिकादिनक्षत्राणां संयोगवशात्, कार्तिकादीनिगुरो: वर्षाणि भवन्ति। यथा पूर्णान्तेषु कृत्तिकादिनक्षत्रसंयोगात् कार्तिकादयो द्वादशमासा: कार्तकास्तयैव वैशाखादिदर्शान्तेषु कृत्तिकादिसंयोगाद् गुरो: कार्तिकादीनि वर्षाणि ज्ञेयानि। अत्रापि पूर्ववत् नक्षत्रद्वयसम्बन्धो बोध्य:। यथा-बैशाखदर्शान्ते कृत्तिका-रोहणी संयोगाद् गुरुवर्षं कार्तिकम्। ज्येष्ठदर्शान्ते मृगार्द्रासंयोगान् मार्गमेवमग्रेऽपि। अस्मादेव हेतो: संहितासु मेषादिराशिसम्बन्धिनो वत्सर: आश्विनादिनाम्ना व्यवहृता आचार्यैरिति। तेनैव प्रकारेण, गुरोरस्तोदयात् गुरुवर्षाणि भवन्ति। अर्थात् गुरोरुदयदिनेऽस्तदिने वा पञ्चाङ्गे चन्द्राधिष्ठितं यन्नक्षत्रं तद्वशादपि पूर्ववद् वर्षसंज्ञा ज्ञेया:। यथा कृत्तिकारोहिण्योर्गुरोरुदयोऽस्तो वा भवेत्तदा कार्तिकं नाम वर्षम्। मृगार्द्रयोर्मार्गशीर्षनामवर्षमेवमग्रेऽपि। परञ्चाधुना गुरोरुदयनक्षत्रादेव केचिद्वर्षगणनां कुर्वन्ति। तत्राप्याधुनिका: सङ्कल्पादिसकलकार्ये 'द्वादशघ्ना गुरोर्याता:' इत्यादिमध्यमाधिकारोक्तगुरुवर्षाण्येवङ्गीकुर्वन्तीति विदुषां व्यक्तमेवेत्यलम्।

वैशाखादिषु कृष्णे च योग: पञ्चदशे तिथौ।
कार्तिकादीनि वर्षाणि गुरोरस्तोदयात्तथा॥

वाराह:स्वसंहितायाम्-

नक्षत्रेण सहोदयमुपगच्छन्ति तेन देवपतिमन्त्री।
तत्संज्ञं वक्तव्यं वर्षं मासक्रमेणैव॥

वर्षाणि कार्तिकादीन्याग्नेयाद्भद्वयानुयोगीनि।
क्रमशस्त्रिभं तु पञ्चममुपान्त्यमन्त्यं च यद्वर्षम् [१५]॥ इति॥

सौरकालमानम्-रविभगणभोगकाल: एकसौरवर्षम्। अर्थात् रवौ द्वादशराशिभोगकाल: एकं सौरवर्षम्। तत: एकराशिभोगकाल: एक: सौरमास: एवं रवेरेकरंशभोगकाल:= एकसौरदिनम्। ३६० सौरदिनादि= १ सौरवर्षम्।

रवे: एकराशिसंक्रमणकालात्! अपरसंक्रमणकालं यावत् एक: सौरमास: त्रिंशद्भिरंशै: एकराशि- सद्भावात् त्रिंशद्भिश्च दिनै: एकमासत्वात्- रवेरेकांशभोगकाल: दिनमिति सयुक्तिकम्।

सावनकालमानम्-एकसूर्योदयात् द्वितीयसूर्योदयपर्यन्तमेकं सावनदिनं भवति। तदेववासर (वार) संज्ञया लोके प्रचलति स्म। एवं कस्यापि ग्रहस्य उदयद्वयान्तरं सावनदिनम्। लोके सूर्यसावनदिनस्यैव व्यवहारो भवति। अनेनैवोक्तमानेन, सावनानि=कल्पे, युगेऽहर्गणे च सावनदिनानि (मध्यमाधिकारोक्तानि) स्यु:। तै: सावनदिनै:, यज्ञकालविधि: यज्ञकालस्य व्यवहारकार्य:। सूतकादिपरिच्छेद: सूतकानि जननमरणाद्यशौचानि, आदिशब्दात् चिकित्सितचान्द्रायणव्रतादि, तेषां परिच्छेदो निर्णय:। तथा दिनमासाब्दपा: दिवस- पतिर्मासपतिर्वर्षपतिश्च सावनमानेनैवग्राह्या:। अपि च मध्यमा ग्रहभुक्ति: ग्रहाणां दैनन्दिनमध्यमागति:, सावनेनैव मानेन ग्राह्या। अत्र 'तु' शब्दात् स्पष्टगतेर्निरास:। तथा सावनमानेन मध्यमग्रहभुक्तेर्गणनया सावनमपि मध्यमेव। यत: स्पष्टगते: प्रतिदिनं वैलक्षण्यान्तया कल्पे युगेऽहर्गणे च सावनानि पाठानर्हाणि, अनुपयुक्तानि च भवन्तीति विद्वांसो जानत्येवातोऽत्र सावनानि मध्यमानि निरुक्तानि। अत्र सावनदिनमाने मध्यमसावनदिनमानम् तथा च यदि स्पष्टार्कस्य गतिर्गृह्यते तदा स्पष्टसावनदिनं जायते। एकस्मिन् सौराब्दे सूर्यसिद्धान्तोक्तसावनदिनमानम् = ३६५।१५।३१।३० दिनाद्यमस्ति। एकस्मिन् सौराब्दे सूक्ष्मवेधसिद्धसावनदिनाद्यम् = ३६५।१५।२२.९ अर्थात् सार्धाष्टिपलासन्नाधिकं सूर्यसिद्धान्तोक्तकं वर्तते [१६]।

चान्द्रकालमानमाह- अमान्ते रविणा सहयोगं कृत्वा तस्माद् पृथक् सञ्चरित: सन्, अहरह:, प्रतिदिनं स्वाधिगत्या यावन्मितं पूर्वदिशं, याति तावन्मितं चान्द्रमानं ज्ञेयम्। प्रतिदिनं रविचन्द्रयोर्गत्यन्तरांशमितं चान्द्रमानमिति। तत्प्रमाणमाह-अंशैरिति। द्वादशभिरंशैस्तु तिथिर्ज्ञेया। रविचन्द्रयोर्गत्यन्तरांशभिरेकैका तिथिर्भवति। तदेवैकैकं चान्द्रदिनं भवतीत्यर्थ:। अमान्ताद् द्वितीयामान्तावधी रवीन्द्वोरन्तरांशा भगणांश- ३६०° समा:। तावत् तिथयस्त्रिंशत्। अत: प्रतितिथिमर्केन्द्वन्तरांशा: ३६० x १ = १२° अंशोपपन्नम् एक- तिथेर्मानमिति। ३०

उक्तञ्च ग्रन्थे-

अर्काद्विनिस्सृत: प्राचीं यद्यात्यहरह: शशी।
तच्चान्द्रमानमंशैस्तु ज्ञेया द्वादशभिस्तिथि:[१७]॥

एवं कल्पेऽपि चान्द्रमासा: पठिता: प्राक्तनाचार्यै: स्वस्वसिद्धान्ते। एवं सिद्धेषु चान्द्रसौरसावनमानेषु परस्परं कश्चन सम्बन्धो विद्यते स सम्बन्ध: एवं रूपेणास्ति। सौरचान्द्रमासानामन्तरमधिमासा:। सौरचान्द्रमासान्तरमधिशेषदिनानि च भवन्ति। यस्मिन् वर्षे एकश्चान्द्रमास: अधिमास: जात: तत: तृतीये

वर्षे पुनरपि अधिमासः स्यात्। युक्त्याधिमासः द्वात्रिंशत् (३२) मासः षोडश-(१६) दिनानन्तरं पुनर्भवति एतावद्भिर्दिनैः पुनः अधिमासः जायते।

नक्षत्रकालमानम्- नित्यप्रवहवायुना भचक्रस्यैकभ्रमणं यद्भवति तदेव नाक्षत्रं दिनमुच्यते। किमपि नक्षत्रमुदयानन्तरं प्रवहगत्या पुनर्यावता कालेनोदेति तावान् कालो हि नाक्षत्रं दिनं भवतीत्यर्थः, अथ मासाः दर्शान्तद्वयान्तः पतिनो द्वादशचान्द्रमासास्तु, पर्वान्ताः पूर्णिमान्तास्तेषु यस्य यस्य नक्षत्रस्य योगो भवति तस्मात्, नक्षत्रनाम्ना, तत्तन्नक्षत्रसंज्ञयाऽवगन्तव्याः। यथा-अश्विनीसंयुक्ता पूर्णमासी अश्विनी, मासोऽप्याश्विनः कृत्तिका संयुक्ता पूर्णमासी कार्तिकी, मासोऽपि कार्तिकः। एवं मृगशीर्षेण मार्गशीर्षः। पुष्येण पौषः। मघया माघः। फाल्गुन्या फाल्गुनः। चित्रया चैत्रः। विशाखया वैशाखः। ज्येष्ठया ज्येष्ठः। आषाढेणाषाढः। श्रवणेन श्रावणः। भाद्रपदेन भाद्रपदो मासः। एवं द्वादशमासाः भवन्ति। ननु पर्वान्तेषु तत्तन्नक्षत्राणां संयोगाभावे कथं तन्मासानां सार्थकता स्यादित्याह। कार्त्तिक्यादिषु मासानां पूर्णिमासु नक्षत्रयोगे कृत्तिकादिद्वयं द्वयं नक्षत्रं स्मृतम्। तत्रापि कार्तिकादिगणनयाऽन्त्यो मास आश्विनः, उपान्त्यौ भाद्रपदः, तौ, पञ्चमः फाल्गुनो मास एतन्मासत्रयं त्रिधा नक्षत्रत्रयेण स्मृतम्। यथा कृत्तिका रोहिणीभ्यां पर्वान्तस्य संयोगे १. कार्तिकः। मृगशीर्षाऽऽर्दाभ्यां २. मार्गशीर्षः। पुनर्वसु-पुष्याभ्यां ३. पौषः। आश्लेषामघाभ्यां ४. माघः पूर्वाफाल्गुन्युत्तरफाल्गुनी हस्तैस्त्रिभिर्नक्षत्रैः 'पञ्चमः' ५. फाल्गुनः। चित्रास्वातीभ्यां ६. चैत्रः। विशाखाऽनुराधाभ्यां ७. वैशाखः। ज्येष्ठमूलाभ्यां ८. ज्येष्ठः। पूर्वोत्तराषाढाभ्यां ९. आषाढः। श्रवणधनिष्ठाभ्यां १०. श्रावणः। शतभिषपूर्वभाद्रोत्तरभाद्रैस्त्रिभिरूपान्त्यः ११. भाद्रः। रेवत्यश्विनीभरणी-भिस्त्रिभिरन्त्यः १२. आश्विनीमासः। एवं द्वादशमासानां सिद्धिर्निरुक्ताः। परञ्चैतानि नक्षत्राणि निरयणानि ज्ञेयानि। यतः क्रान्तिवृत्ते तारकायोगवशेन नक्षत्राणामाकृतयो निरयणमेषादितः एव दृश्यन्तेऽतः सायननक्षत्र-वशान्मासंसंज्ञाकल्पनेननक्षत्राणामाकृतिष्वनर्थापत्तिः सम्भाव्यते। तेनाथर्वबेदेऽपिनिरयण नक्षत्रवशादेव मासानां संज्ञा उल्लिखिता। अतः निरयणमानेनैव व्यवहारः समुचितं इत्येव प्राचीनान् वैदिकानां सम्मतिरितिस्फुटम्।

ग्रन्थोक्तपद्यम्-

भचक्रभ्रमणं नित्यं नाक्षत्रं दिनमुच्यते।
नक्षत्रनाम्ना मासास्तु ज्ञेयाः पर्वान्तयोगतः॥
कार्तिक्यादिषु संयोगे कृत्तिकादिद्वयं द्वयम्।
अन्त्यौपान्तयौ पञ्चमश्च त्रिधा मासत्रयं स्मृतम् [१८]॥

ब्रह्मादिनवविधिमानानां स्वरूपपरिचयस्तथा तत्सम्बन्धादधिमासक्षयमासस्वरूपलक्षणं नक्षत्र-साहचर्यात् चैत्रादि मासानां नामानि चेति सर्वं मयात्रोपस्थापितम्। नवविधमानेषु चतुर्णामेवमानानां

सौरचान्द्रसावनार्क्षाणां व्यवहारो लोके जायतेति। तथा च सूर्यसिद्धान्तानुसारेण भारतीयकाल: पाश्चात्यकालविवेचनपूर्वकं पठितभगणादिकालमानसारिण्यांऽपि प्रस्तूयते।

अथ प्रसङ्गात् स्थूल- (व्यावहारिक) कालस्य पाश्चात्यद्देशीयकालेन सहसाम्यं निर्दिष्यते तत्सारिण्यां दर्शयामि-

| सूर्यसिद्धान्तीयकाल: (भारतीय काल:) | पाश्चात्यकाल: |
|---|---|
| १प्राण: (असु:)=१०दीर्घोच्चारणकाल:=१०विपलानि, | = ४ सेकेण्ड |
| १पलम् (विघटी)=६प्राणा:=६०विपलानि, | = २४=२/५ मिनिट। |
| ∴ २१/२ पल | = १ मिनिट। |
| १ विपल= १दीर्घोच्चारणकाल: = प्राण: - | = २/५ सेकेण्ड:। |
| १ नाडी (घटी) = ६० पलानि= १ दण्ड, | = २४ मिनिट। |
| १ नाक्षत्राहोरात्रम् = ६० नाड्य: = ६० दण्डा:, | = २४ घण्टा। |
| ∴ २१/२ नाड्य:= ५/२ दण्डा:, | = १ घण्टा। |
| १ मास:= ३० अहोरात्राणि, | = १ मन्थ:। |
| १ वर्षम्= १२ मासा:, | = १ एयर। |
| १ त्रुटि:= सूच्या पद्मपत्रभेदनकाल: | = १/३२४००००सेकेण्ड:। |
| १ रेणु:= ६० त्रुटय:, | = १/५०००४ सेकेण्ड:। |
| १ लव:= ६० रेणव:, | = १/९०० सेकेण्ड:। |
| १ लिक्षकम्= ६० लवा:, | = १/१५ सेकेण्ड:। |
| १ प्राण:=६० लिक्षकाणि = १०दीर्घोच्चारणकाल:, | = ४ सेकेण्ड:। |

स्थूलसूक्ष्मभेदेन कालस्य द्वौ भेदौ स्त: तथा च सूक्ष्माख्ये काले भेदेऽपि मूर्ताऽमूर्तरूपेण विभाग: वर्तते तत् सारिण्यामपि दर्शितम्।

उक्तञ्च ग्रन्थेऽपि-

प्राणादि: कथितोमूर्तस्त्रुट्याद्योऽमूर्तसंज्ञक:।
षड्भि: प्राणैर्विनाडी स्यात् तत्षष्ट्या नाडिका स्मृता॥

नाडीषष्ट्या तु नाक्षत्रमहोरात्रं प्रकीर्त्तितम्।
तत्त्रिंशता भवेन्मास: सावनोऽर्कोदयैस्तथा[१९]॥

योऽक्ष्णोर्निमेषस्य खरामभागः स तत्परस्तच्छतभाग उक्ता।
त्रुटिर्निमेषैधृतिभिश्च काष्ठा तत्त्रिंशता सभ्दगणैः कलोक्ता।
त्रिंशत्कलाऽर्क्षी घटिका क्षणः स्यान्नाडीद्वयं तै खगुणैर्दिनं च।
गुर्वक्षरैः खेन्दुमितैरसुस्तैः खड्भिः पलं तैर्घटिका खषड्भिः।
स्याद्वा घटीषष्टिरहः खरामैर्मासो दिनैस्तैर्द्विकुभिश्च वर्षम्।
क्षेत्रे समाद्येन समा विभागाः स्युश्चक्रराश्यंशकलाविलिप्ताः [२०] ॥

कृपागुरुग्रहान् देवान्
भक्त्या श्रीब्रह्मदैवतान्
प्रबन्धं रचितं दिव्यं
ज्योतिष्शास्त्रमनूत्तमाम् ॥[२१]

**सन्दर्भाः**


१. भारतीयज्योतिषम्-पृष्ठ-०१, नेमिचन्द्रशास्त्री, भारतीय ज्ञानपीठ १८, इ.ए. लोदी रोड, नयी दिल्ली, २०१५ई०
२. मुहूर्तचिन्तामणिः-अ.१, श्लो०-६ (पीयूषधाराटीका), रामदैवज्ञः, चौखम्बा सुरभारती प्रकाशन के.३७/११७ गोपालमन्दिर लेन पो.बा.नं.११२९ वाराणसी, २०२०ई.
३. शि.सि.ग्र.ग.का.मानाध्यायः श्लो०-१०, श्रीभाष्कराचार्यः, सम्पूर्णानन्द संस्कृत युनिवर्सिटी, वाराणसी, १९९८ई०
४. सू.सि.म.धि. श्लो०सं०-१०, श्रीकपिलेश्वरशास्त्री (टीकाकारः), चौखम्भा संस्कृत संस्थान, वाराणसी उ०प्र० भारतम्, १९९५ई०
५. सू.सि.म.धि. श्लो०सं०-११, श्रीकपिलेश्वरशास्त्री चौखम्भा संस्कृत संस्थान, वाराणसी उ०प्र० भारतम्, १९९५ई०
६. सू.सि.म.धि. श्लो०सं०-४८ तः ५१, श्रीकपिलेश्वरशास्त्री चौखम्भा संस्कृत संस्थान, वाराणसी उ०प्र० भारतम्, १९९५ई०
७. सू.सि.मानाध्यायः श्लो०-१, श्रीकपिलेश्वरशास्त्री चौखम्भा संस्कृत संस्थान, वाराणसी उ०प्र० भारतम्, १९९५ई०
८. सू.सि.मानाध्यायः श्लो०-२, श्रीकपिलेश्वरशास्त्री चौखम्भा संस्कृत संस्थान, वाराणसी उ०प्र० भारतम्, १९९५ई०
९. सू.सि.म.धि. श्लो०सं०-२०, श्रीकपिलेश्वरशास्त्री चौखम्भा संस्कृत संस्थान, वाराणसी उ०प्र० भारतम्, १९९५ई०

१०. सू.सि.म.धि. श्लो०सं०-२१, श्रीकपिलेश्वरशास्त्री चौखम्भा संस्कृत संस्थान, वाराणसी उ०प्र० भारतम्, १९९५ई०
११. सू.सि.म.धि. श्लो०सं०-४७, श्रीकपिलेश्वरशास्त्री चौखम्भा संस्कृत संस्थान, वाराणसी उ०प्र० भारतम्, १९९५ई०
१२. सू.सि.मानाध्याय: श्लो०-२०, श्रीकपिलेश्वरशास्त्री चौखम्भा संस्कृत संस्थान, वाराणसी उ०प्र० भारतम्, १९९५ई०
१३. सू.सि.म.धि. श्लो०सं०-१४, श्रीकपिलेश्वरशास्त्री चौखम्भा संस्कृत संस्थान, वाराणसी उ०प्र० भारतम्, १९९५ई०
१४. सू.सि.मानाध्याय: श्लो०-२१, श्रीकपिलेश्वरशास्त्री चौखम्भा संस्कृत संस्थान, वाराणसी उ०प्र० भारतम्, १९९५ई०
१५. सू.सि.मानाध्याय: श्लो०-१७, श्रीकपिलेश्वरशास्त्री चौखम्भा संस्कृत संस्थान, वाराणसी उ०प्र० भारतम्, १९९५ई०
१६. सू.सि.मानाध्याय: श्लो०-१८-१९, श्रीकपिलेश्वरशास्त्री चौखम्भा संस्कृत संस्थान, वाराणसी उ०प्र० भारतम्, १९९५ई०
१७. सू.सि.मानाध्याय: श्लो०-१२, श्रीकपिलेश्वरशास्त्री चौखम्भा संस्कृत संस्थान, वाराणसी उ०प्र० भारतम्, १९९५ई०
१८. सू.सि.मानाध्याय: श्लो०-१५-१६, श्रीकपिलेश्वरशास्त्री चौखम्भा संस्कृत संस्थान, वाराणसी उ०प्र० भारतम्, १९९५ई०
१९. सू.सि.म.धि. श्लो०सं०-११-१२, श्रीकपिलेश्वरशास्त्री चौखम्भा संस्कृत संस्थान, वाराणसी उ०प्र० भारतम्, १९९५ई०
२०. सू.सि.म.धि. श्लो०सं०-१६-१७-१८, श्रीकपिलेश्वरशास्त्री, चौखम्भा संस्कृत संस्थान, वाराणसी उ०प्र० भारतम्, १९९५ई०
२१. श्लोक: (स्वरचितम्), डॉ.रमेशचन्द्रशुक्ल:, २०२२ई०

~~~~~~~~~~~
~~~~~~~~~~~

वर्षम्-०४ अङ्कः-०४ शोधज्योतिः
जनवरी-दिसम्बर, २०२२ ISSN-2350-0700

# मृच्छकटिकप्रकरणे तिङन्तप्रयोगैः साधितं सौन्दर्यम्

डॉ. हेमन्त शर्मा[1]

भारतीयकाव्यशास्त्रे वैदिककालादेव काव्यशास्त्रस्येयं परम्परा सनातनरूपेण वर्तमाना वर्तते। विभिन्नप्रयोजनसाधकं काव्यमिदं भवति मञ्जुलं ललितञ्च साहित्यं शब्दार्थयोः कविकर्म वा। तद्योक्तं कुन्तकेन-

**शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।**
**बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि॥[2]**

कुन्तकानुसारं सहृदयाह्लादकारकौ बन्धे व्यवस्थितौ वक्रकविव्यापारसंयुक्तौ च शब्दार्थौ काव्यम् इति। तेनानुसारं शब्दार्थौ पृथक्-पृथक् काव्यं न भवति अर्थात् न केवलं शब्दः काव्यं भवति न च केवलमर्थः काव्यं भवत्यपितु यत्र शब्दार्थौ सहितौ स्याताम् तथा चोभयोः मध्ये अन्यूनातिरिक्तत्वम् स्यात् अथ च बन्धेऽपि व्यवस्थितौ स्याताम् तत्र सहृदयाह्लादकारकौ शब्दार्थौ काव्यमिति।

संस्कृतकाव्यशास्त्रे काव्यवर्गीकरणस्य सर्वोत्कृष्टं आधारो वर्तते इन्द्रियग्राहिताधारः। तदाधारेण काव्यमिदं द्विविधम्। तद्‌यथोक्तम्-

**दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम्।**
**दृश्यं तत्राभिनेयं तद्रूपारोपात्तु रूपकम्॥[3]**

**अवस्थानुकृतिर्नाट्यं रूपं दृश्यतयोच्यते।**
**रूपकं तत्समारोपात्॥[4]**

[1] सहायक प्राध्यापक संस्कृत साहित्यम्, शास. दू.श्री.वै. संस्कृत महाविद्यालय, रायपुर (छ.ग.), ईमेल- dr.hemant2019@gmail.com, Mob-9926586563

[2] वक्रोक्तिजीवितम्- 1.7 पृष्ठ 17

[3] साहित्यदर्पणम्- 6.1 पृष्ठ 319

[4] दशरूपकम्- 1.7 पृष्ठ 8,9,10

इन्द्रियग्राहिताधारेण वर्गीकृतं काव्यं दृश्य-श्रव्यभेदाभ्यां द्विधा भवति। तत्र श्रवणप्रधानं श्रव्यकाव्यं अथ च श्रवणस्य दर्शनस्य अभिनयस्य च प्रधानता तद्दृश्यकाव्यमिति। दृश्यकाव्यमिदं दशरूपकेषु अष्टादशोपरूपकेषु च विभक्तं काव्यशास्त्रज्ञैः। रूपकाणि तद्यथा–

**नाटकं संप्रकरणं भाणः प्रहसनं डिमः।**
**व्यायोग-समवकारौ वीथ्यङ्केहामृगा इति॥**[५]

महाकविशूद्रकविरचितं मृच्छकटिकप्रकरणं रूपकभेदेषु अन्यतमं वर्तते। अस्मिन् प्रकरणे शूद्रकेण दशाङ्केषु चारुदत्त-वसन्तसेनयोः उदात्तप्रेमकथा उपवर्णिता। सम्प्रति मृच्छकटिकप्रकरणे तिङन्तप्रयोगेण सौन्दर्यमिति विषयमधिकृत्य शोधालेखोऽयं प्रस्तूयते।

कस्याश्चिदपि काव्यरचनायाः नाट्यरचनायाश्च महत्वपूर्णः आधारस्तम्भः शव्दः एव भवति। शब्दोऽयं विभक्तियुक्तः सन् पदरूपतामधिगच्छति। व्याकरणानुसारं पदमिदं सुप्तिङ् इति भेदाभ्यां द्विविधं भवति। यथा-

**''सुप्तिङन्तं पदम्''**[६]

व्याकरणानुसारं ''सु-औ-जसादिविभक्तिसूचकाः प्रत्ययाः यस्यान्ते भवन्ति तत्सुप्पदं सुबन्तं वा कथ्यते। एतेषां प्रयोगः संज्ञाविशेषणादिषु भवति किन्तु तेषां विवेचनमत्रापेक्षितम् नास्ति अतः तिङपदस्य विवेचनमत्र भविष्यति। तिप्-तस्-झि इत्यादयः अष्टादशविभक्तिसूचकाः प्रत्ययाः यस्यान्ते भवन्ति तत्तिङन्तपदं तिङन्तं वा कथ्यते। एतेषां तिङन्तानां योगः धातुभ्यः क्रियाभ्यः वा भवति। एते तिङन्तप्रत्ययाः कुत्रचित् परस्मैपदे कुत्रचित् आत्मनेपदे क्वचिच्च उभयपदे प्रयुक्ताः भवन्ति। व्याकरणानुसारं तिप्-तस्-झि-सिप्-थस्-थ-मिब्-वस्-मस्-ता-आताम्-झ-थास्-आथाम्-ध्वम्-इड्-वहि-महिङ् इति एतानि तिङ्पदानि भवन्ति। तद्यथा-

**"तिप्तस्झि-सिप्थस्थ-मिबवस्मस्-ताऽऽतांझ-थासाऽऽथांध्वम्-इड्वहिमहिङ्''**।[७]

अर्थाद्येषां पदानामन्ते एते प्रत्ययाः समायान्ति ते तिङन्तपदवाच्यः इति। व्यवहारे तिङन्तपदमिदं धातुरूपेण क्रियारूपेण आख्यातरूपेण चापि परिज्ञातं भवति। निरुक्तकारः यास्कः स्वकीयनिरुक्ते तिङन्तपदम् आख्यातरूपेण उपवर्णयति-

---

५ *दशरूपकम्-1.8 पृष्ठ 12*

६ *अष्टाध्यायी- 1.1.14*

७ *अष्टाध्यायी- 3.4.99*

**''पूर्वापरिभूतं भावम् आख्यातेन आचष्टे,**
**व्रजति पचतीति उपक्रम-प्रभृत्यपवर्गपर्यन्तम्''**[८]

सामन्यतः आख्यातमिदं क्रियारूपेण वर्तमानं भवति अथ च क्रियायां भवति भावस्य प्रधानता अत एव आख्यातमिदं भावप्रधानं भवति। यथोक्तम्-

**''भावप्रधानमाख्यातम्''**[९]

अनेनानुसारं यत्र भावस्य (क्रियायाः) प्रधानता भवति तदाख्यातमाचक्षते। आख्यातं परिभाषयनाह कोषकारः-

**"धात्वर्थेन विशिष्टस्य विधेयत्वेन बोधने समर्थः स्वार्थयत्नस्य शब्दो वाख्यातमुच्यते''**[१०]
यद्यपि भावशब्दस्य विद्यन्ते अनेकार्थाः किन्त्वत्र तदर्थः साध्यभावः क्रिया वा। इत्थं स्पष्टं भवति यत्येषु पदार्थेषु क्रियायाः प्रधानता भवति उत वा साध्यभावो भवति तदाख्यातमिति। वस्तुतः क्रियायां भावस्यैव प्राधान्यं भवति द्रव्यस्य चाप्रधान्यं यथा प्रसिद्धमस्ति-

**"आख्याते प्रधानभावे न क्रिया अप्रधानभावे न च द्रव्यं यत्र तद् आख्यातम्''**

संस्कृतव्याकरणे वाक्यरचनायाम् एतेषां क्रियापदानां प्रयोगः लट्-लोट्-लङ्-लिङ्-लिट्-लृट्-लुङ्-लृङ्-लेट्च इत्येतेषु दशलकारेषु भवति। एषां दशलकाराणां प्रयोगः व्याकरणे वर्तमानकाले भूतकाले भविष्यकाले च अर्थात् त्रिविधकालेषु भवति। तत्र वर्तमानकालिकक्रियायां 'लट्'लकारस्य प्रयोगः भवति। भूतकालिकक्रियायोगे 'लङ्लुङ्लिट्'इति लकारत्रयस्य प्रयोगः भवति। भविष्यकालीनक्रियासु 'लुट्लृट्लृङ्'इति त्रिलकाराणां प्रयोगः भवति अथ च विधानार्थे आशीषार्थे च 'लिट्-लोट्' इति लकारयोः प्रयोगः भवति। एषु 'लेट्'लकारस्य प्रयोगस्तु वेदे एव भवति। लौकिकसंस्कृते प्रायः तस्याभावः एव दृश्यते।
तद्यथा-

**लट्वर्तमाने लेट्वेदे भूते लुङ्लङ्लिटस्तथा।**
**विध्याशिषोऽस्तु लिङ्लोटौ लुट्लृट्लृङ्च भविष्यतः॥**[११]

---

[८] *निरुक्तम्- 1.1*
[९] *निरुक्तम्- 1.1*
[१०] *वामनशिवरामआप्टे शब्दकोष- पृ. 139*
[११] *वृ. अ. चन्द्रिका (हंस)- पृ. 217*

क्रियायाः योगे एते लकाराः त्रिवचनेषु पुरुषत्रयेषु च प्रयुज्यन्ते। कुत्रचित् एषां प्रयोगः एकवचनक्रियायोगे कुत्रचित् द्विवचनक्रियायोगे कुत्रचिच्च बहुवचनक्रियाप्रयोगे। तत्सर्वं तद्योक्तवान् पाणिनिः-

**"तान्येकवचनं-द्विवचनं-बहुवचनान्येकशः''**[१२]

**"युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः''**[१३]

**"अस्मद्युत्तमः''**[१४]

**"शेषे प्रथमः''**[१५]

व्यावहारिकप्रयोगदृष्ट्या एतानि तिङन्तपदानि द्विधा विभज्यन्ते परस्मैपद-आत्मनेपदभेदाभ्याम्। परेषां अन्येषां वा कृते परस्मैपदप्रयोगः स्वस्य आत्मनः वा कृते आत्मनेपदप्रयोगश्च भवति। अष्टादशतिङ्प्रत्ययेषु तिप्तस्झि-सिप्थस्थ-मिबवस्मस् इत्येतेषां प्रयोगः पस्मैपदे भवति तथाताऽऽतांझ- थासाऽऽथांध्वम्-इडवहिमहिङ् इत्येतेषां प्रयोगः आत्मनेपदे भवति। भगवान् पाणिनिः परस्मैपद-आत्मनेपदविधानाय सूत्रद्वयं प्रस्तुतवान्-

**"लः परस्मैपदम्''**[१६]

**"तङाऽऽनावाऽऽत्मनेपदम्''**[१७]

पाणिनीयव्याकरणे धातुप्रयोगाय विद्यते कश्चित् विशेषमार्गः विशिष्टा वैज्ञानिकपद्धतिश्च। तेन कृतं विभाजनमिदं व्यावहारिकदृष्ट्या अत्यन्तं सरलं वैज्ञानिकपद्धत्या च सर्वथा नवीनतायुक्तञ्चास्ति। दशगणाः तद्यथा-

**भ्वाद्यदादीजुहोत्यादि दिवादिस्वादिरेव च।**
**तुदादिश्च रूधादिश्च तनुक्र्यादिचुरादयः॥**[१८]

काव्ये आह्लादकतामानेतुं तत्र चमत्कारं उत्पादयितुं काव्यसौन्दर्यवर्धयितुं च शब्दार्थयोः भवति महती भूमिका। काव्ये कुत्रचित् सौन्दर्यवृद्धिरियं सुप्पदैः क्वचिच्च तिङन्तपदैः भवति। काव्यसौन्दर्याय कीदृशाणां शब्दार्थानां अर्थात् भवतु नाम सुबन्तानां वा भवतु नाम तिङन्तानां वा प्रयोगः करणीयः एतन्निरूपितवान् कुन्तकः-

---

[१२] *अष्टाध्यायी- 1.4.102*
[१३] *अष्टाध्यायी- 1.4.105*
[१४] *अष्टाध्यायी- 1.4.107*
[१५] *अष्टाध्यायी- 1.4.108*
[१६] *अष्टाध्यायी- 1.4.99*
[१७] *अष्टाध्यायी- 1.4.100*
[१८] *वृ. अ. चन्द्रिका (हंस)- पृ. 217*

**शब्दो विवक्षितार्थैक वाचकोऽन्येषु सत्स्वपि।**
**अर्थः सहृदयाह्लादकारिस्वस्पन्दसुन्दरः॥**[१९]

महाकविशूद्रकविरचितं मृच्छकटिकप्रकरणं लोकभाषायामुपनिबद्धं वर्तते अर्थात् तत्र प्रयुक्ता संस्कृतभाषा सवादात्मिका व्यावहारिकी च। तत्रस्थ वाक्यरचना, संवादाः, लोकोक्तिप्रयोगाश्च नितरां सहृदयानाह्लादयन्ति। काव्ये काव्यसौन्दर्याय क्रियापदस्य भवति अतिमहत्वपूर्णभूमिका। औचित्यविचारचर्चाकारः क्षेमेन्द्रः औचित्यनिरूपणप्रसङ्गे वाक्यरचनायां क्रियापदौचित्यस्य महत्त्वं निरूपयन्कथयति यथा सतां दयादाक्षिण्यादि सद्गुणाः व्यवहारः कुशलता साधुता च तदैव स्पृहणीयाः भवन्ति यदा तेषां क्रिया औचित्यवती स्यात् तथैव काव्यस्यापि माधुर्यादिगुणाः अलङ्काराः छन्दांसि सर्वविधव्याकरणादिलक्षणसम्पन्नरूपता च तदैव रमणीयं चमत्कृतं आह्लादजनकञ्च भवन्ति यदा क्रियापदौचित्यं औचित्ययुतं स्यात्। यथोक्तम्-

**सगुणत्वं सुवृत्तत्वं साधुता च विराजते।**
**काव्यस्य सुजनस्येव यद्यौचित्यवती क्रिया॥**[२०]

मृच्छकटिकप्रकरणे शूद्रकेण काव्यसौन्दर्यवर्धनाय भाषागौरवाय च विभिन्नप्रकाराणां क्रियापदानां प्रयोगः कृतः। तेन सर्वेषां भ्वाद्यादि दशगणानां क्रियाणां प्रयोगः, सकर्मक-अकर्मकक्रियाणां प्रयोगः, द्विकर्मकक्रियाणां प्रयोगः, विभिन्नलकाराणां प्रयोगः प्रकरणसौन्दर्यवर्धनाय बहु सम्यक्प्रकारेण कृतः।

**1. एकाख्यातप्रयोगद्वारा सौन्दर्यम्**-प्रकरणस्य मङ्गलाचरणे भगवतः शम्भोः वन्दना विद्यते तत्र एकस्या एव **'पातु'** क्रियापदस्य प्रयोगः कृतः यथा-

''**पर्यङ्कग्रन्थिबन्धद्विगुणितभुजगाश्लेषसंवीतजानो**
**रन्तःप्राणावरोधव्युपरतसकलज्ञानरूद्धेन्द्रियस्य।**
**आत्मन्यात्मानमेवव्यपगतकरणं पश्यतस्तत्त्वदृष्ट्या**
**शम्भोर्वः पातु शून्येक्षणघटितलयब्रह्मलग्नःसमाधिः॥**[२१]

अत्र मङ्गलाचरणे शूद्रकेण रक्षणार्थक-अदादिगणीय पातुक्रियायाः प्रयोगः कृतः। व्याकरणे रक्षणार्थे अञ्चू, अव, कुटि, कुडि, गुपु, जसि, दय, देङ्, पा, पाल इति क्रियाणां प्रयोगः भवति। अत्र शम्भोः समाधिः वः पातु इत्यनेन केवलं रक्षां कुर्यात् इत्यर्थः अभिव्यक्तः न भवति अपितु सा समाधिः अस्माकं पालनमपि

---

[१९] *वक्रोक्तिजीवितम्- 1.9 पृष्ठ 34*

[२०] *औचित्यविचारचर्चा-श्लोक 19 पृष्ठ 89*

[२१] *मृच्छकटिकम्- 1.1 पृष्ठ 1*

कुर्यात् इति भावोऽपि अभिव्यक्तः भवति यो अन्यरक्षणार्थकक्रियाभिः न समायाति तस्मादत्र पातु इति क्रियायाः प्रयोगः एव उपयुक्तः अस्ति।

2. **अनेकाख्यातप्रयोगद्वारा सौन्दर्यम्**-मृच्छकटिके काव्यसौन्दर्यवर्धनाय कविना अनेकाख्यातयुतवाक्यानामपि भृशं प्रयोगः कृतः। राजशेखरेण काव्यमीमांसायां दशधावाक्यभेदेषु अनेकाख्यातवाक्यानां वर्णनं कृतम्।[२२] एकस्मिन् श्लोके अनेकाख्यातप्रयोगो यथा-

**किं यासि धावसि पलायसे प्रस्खलन्ती वासु ! प्रसीद न मरिष्यसि तिष्ठ तावत्।**
**कामेन दह्यते खलु मे हृदयं तपस्वि अङ्गारराशिपतितमिव मांसखण्डम्॥**[२३]

अत्र गमनार्थक-यासि, धावसि, पलायसे, इति त्रिक्रियापदानां प्रयोगः अथ च प्रसीद, मरिष्यसि, तिष्ठ, दह्यते इति विभिन्नक्रियापदानां प्रयोगः काव्यसौन्दर्यं वर्धयति।

3. **द्विकर्मकक्रियापदद्वारा सौन्दर्यम्**-दुह्य-याच्-पचादयःद्विकर्मकधातवःसन्ति। तद्यथोक्तम्-

**दुह्याचपच्दण्डूधिप्रच्छिचिब्रूशासुजिमथ्मुषाम्।**
**कर्मयुक्स्यादकथितं तथास्यान्नीहृकृष्वहाम्॥**[२४]

प्रकरणे यत्र-तत्र एते धातवः अपि काव्यसौन्दर्यं वर्धयन्ति तद्यथा–

**शर्विलकः- मदनिके ! यद्यसौ राजकुले मां कथयति ?**[२५]

अत्र द्वितीयाविभक्तिविवक्षायां कथयति इति द्विकर्मकधातोः प्रयोगः वाक्यवैशिष्ट्यं प्रतिपादयति।

**5.भ्वाद्यादिगणद्वारा क्रियापदसौन्दर्यम्–**

**भ्वादिगणधातुप्रयोगः-**गणेऽस्मिन् 'कर्तरि शप्' इति सूत्रानुसारं धातूनां मध्ये 'शप्' आगमनं भवति। भू, गम्, जि, पचादयः भ्वादिगणधातवः सन्ति। मृच्छकटिकप्रकरणे तद्यथा-

**"एताभ्यां मत्स्यमांसाभ्यां श्वानोमृतकं न सेवन्ते"**[२६]

अत्र भोजनार्थे सेवन्ते इति क्रियापदस्य प्रयोगः आनन्दं जनयति।

---

[२२] *काव्यमीमांसा- पृष्ठ 51 (वाक्यं दशधा।)*

[२३] *मृच्छकटिकम्- 1.18 पृष्ठ 31*

[२४] *मध्य सिद्धान्त कौमुदी- पृष्ठ 304 कारकप्रकरणम्*

[२५] *मृच्छकटिकम्- पृष्ठ 236*

[२६] *मृच्छकटिकम्- 1.26 पृष्ठ 38*

साङ्ख्यकीयविश्लेषणदृष्ट्या मृच्छकटिकप्रकरणे भ्वादिगणीय-निम्नधातूनां प्रयोगः दृश्यते यथा-

**भू, राजृ, वृत्, शुभ्, बाध्, दृश्, स्था, हस्, गम्, सद्ईक्ष्, तूल, नी, पत्, वृध्, सृ, जीव्, रूच्, दह्, खाद्, भ्रंश्, त्यज्, हृ, नम्, चर्, धाव्, पल्, वल्ग्, रम्, सेव्, लप्, त्रै, कृप्, धृ, अर्ह्, भण्, शप्, वह्, त, भज्, कम्, वद्, वृष्, लिप्, श्रृ, म्लै, भाष्, शुच्, क्रम्, क्रुश्, भास्, यत्, ज्वल्, लष्, वस्, व्रज्, क्रीड्, दा, याच्, चर्व्, वन्द्, जि, स्मृ, जल्प्, शिक्ष्, रुह्, धाव्, निन्द्, ह्वे, बुध्, अर्ज, कम्प्, रक्ष, ध्यै, पै, तेज्, मृद्, भ्रम्, नद्, पच्, लस्, घट्, पा, कूज्, तप्, गर्ज, गै, लग्, वेप्, लभ्, राज्, धूप्, स्रु, लिङ्ग्, नन्द्, त्वर्, स्पन्द्, व्यथ्, गाह्, कृष्, मुद्, कृन्द्, काश्, शङ्क्, लम्ब्, गुह्, ग्रस्, तप्, हिडि, घृष्, श्रि, रस्, गल्, लल्, इति।**

**चुरादिगणधातुप्रयोगः**-गणेऽस्मिन् ''चुरादिभ्यो णिच्'' इति सूत्रात् धातुभ्यः णिच् (अय) विकिरणं संयोज्यते। चुर्-चिन्त्-भक्ष्-कथादयः अस्य गणस्य प्रमुखाः धातवः सन्ति। तद्यथा प्रकरणे-

**"ततः सुहृद्भ्यः किमसौ कथयिष्यति तपस्वी''**[२७]

अत्र चतुर्थी विभक्तिप्रयोगे चुरादिगणीय कथ् धातुः वाक्यसौन्दर्यं वर्धयति।
साङ्ख्यकीयविवेचनाधारेण प्रकरणे प्रयुक्ताः चुरादिगणीयधातवः तद्यथा सम्भवन्ति-

**मृष्, चिन्त्, वृज्, वृत्, ज्ञा, तर्क, गण्, लक्ष्, सूच्, लोक्, कुट्ट्, कथ्, धृ, मन्त्र्, छद्, गुण्ठ्, मुच्, सान्त्व्, शील्, तड्, वृ, विद्, कृत्, वच्, घट्, क्षल्, शब्द्, भक्ष्, पीड्, बीज्, मृज्, मार्ग, वच्, चुद्, घुष्, खण्ड्, पूर्, पिञ्ज्, वद्, पार्, इति।**

**क्रयादिगणधातुप्रयोगः**-अस्य गणस्य धातुभ्यः ''क्रयादिभ्यः श्ना'' इति पाणिनीयसूत्रात्श्ना(ना) विकिरणं जायते। गणेऽस्मिन्क्री-ग्रह्-ज्ञा-बन्ध्-मथ्-इत्यादयः धातवः समायान्ति। शूद्रकस्य मृच्छकटिकप्रकरणे यथा-

**"यदि मे प्रत्ययं न गच्छसि तत्किं निमित्तं मां निष्क्रीणासि''**[२८]

वाक्येऽस्मिन् क्री इति धातुप्रयोगः वाक्यसौन्दर्यं वर्धयति।
साङ्ख्यकीयविश्लेषणदृष्ट्या अस्य गणस्य निम्नधातवः प्रयुक्ताः कविना-

**ज्ञा, ग्रन्थ्, गृह्, क्री, मुष्, बन्ध् इति।**

---

*[२७] मृच्छकटिकम्- 3.23 उप. चारु. संवादः पृष्ठ 193*

*[२८] मृच्छकटिकम्- 4.7 उप. मद. संवादः पृष्ठ 226*

**अदादिगणधातुप्रयोगः**-अस्य गणस्य धातूनां मध्ये 'शप्' विकिरणं न भवति। अद्-अस्-आसादयः धातवः अस्य गणस्य प्रमुखाः धातवः सन्ति। मृच्छकटिकप्रकरणे अस्य गणस्य धातूनां प्रयोगः बहुत्र कृतः तेषु एकमुदाहरणं तद्यथा-

**"निश्चेष्टंस्वपितीवसम्प्रतिपयोधारा-गृहान्तर्गतं**
**स्फीताम्भोधर-धाम-नैक-जलद-च्छत्रापिधानं जगत्।"**[२९]

अत्र श्लोके उत्प्रेक्षालङ्कारप्रयोगे स्वपिति क्रियापदं सौन्दर्यं जनयति।
साङ्ख्यकीयदृष्ट्या मृच्छकटिकप्रकरणे अदादि गणस्य निम्नधातवः प्रयुक्ताः कविना-

**पा, या, इ, स्ना, ख्या, श्वस्, रूद्, अस्, आस्, ब्रू, स्वप्, माप्, भा, रू, विद्, जागृ, स्तु, शास्, वा, हन् इति।**

**जुहोत्यादिगणीयधातुप्रयोगः**-गणस्यास्य प्रारम्भः 'हु' धातोर्भवति तस्माज्जुहोत्यादिगण इति नाम जातम्। गणेऽस्मिन्किमपि विकिरणं धातूनां मध्ये न जायते। हु-दा-धा-भी आदयः धातवः गणेऽस्मिन्समायान्ति। मृच्छकटिकप्रकरणे गणस्यास्य धातूनां प्रयोगो यथा-

**"अन्यस्मादपि अहं न बिभेमि"**[३०]

वाक्येऽस्मिन् पञ्चमी विभक्तिप्रयोगे बिभेमि इति क्रियापदस्य प्रयोगः व्याकरणदृष्ट्या वाक्यसौन्दर्यं वर्धयति।

प्रकरणे साङ्ख्यकीयविश्लेषणदृष्ट्या गणस्यास्य धातूनां सङ्ख्यान्यूनमेव। तद्यथा-

**दा, भी, हु, हा इति**

**दिवादिगणधातूनां प्रयोगः**-'दिवादिभ्यः श्यन्' इति सूत्रात् गणस्यास्य धातुभ्यः 'श्यन्' विकिरणं जायते। दिव्-कुप्-क्षम्-जन्-विदादयः धातवः गणस्यास्यान्तर्गतं समाहिताः भवन्ति। मृच्छकटिकप्रकरणे एकमुदारणं यथा-

**"तस्य न स्खलनं जायते न च कान्तारगतो विपद्यते"**[३१]

पद् धातोः प्रयोगः दिवादिगणे चुरादिगणे च गत्यर्थे भवति किन्त्वत्र वाक्यप्रयोगदृष्ट्या दिवादिगणीय पद् धातोः प्रयोगः एव उपयुक्तः।

---

[२९] *मृच्छकटिकम्- 5.24 पृष्ठ 314*

[३०] *मृच्छकटिकम्- 2.13 उप. माथुर संवादः पृष्ठ 125*

[३१] *मृच्छकटिकम्- 2.14 पृष्ठ 131*

सङ्ख्यात्मकगणनादृष्ट्या अस्य गणस्य निम्नधातूनां क्रियापदानां वा व्यवहारः मृच्छकटिके विद्यते-

**पद्, तुष, रञ्ज्, युज्, जन्, दुष्, कुप्, नृत्, शुष्, युध्, क्लिद्, नश्, डी, मन्, शुध्, वाश्र, तिम्, दीप् इति।**

**स्वादिगणधातूनां प्रयोगः-** "स्वादिभ्यः स्नुः'' इति सूत्रात् अस्य गणस्य धातूनां मध्ये 'श्नु' विकिरणं भवति। सु-आप्-वृ-शकादयः आख्यातानि गणेऽस्मिन्समायान्ति। मृच्छकटिकप्रकरणप्रयुक्तधातुभ्यः एकमुदाहरणम् यथा-

**"घन-तिमिर-निरुद्ध-सर्वभावारजनिरियंजननीवसंवृणोति''**[३२]

इत्यत्र वाक्यसौन्दर्यदृष्ट्या संवृणोतीति क्रियापदमेव उचितमस्ति। यद्यत्र अन्यगणीयक्रियापदानां प्रयोगो स्यात् तर्हि श्लोके तादृशी भावाभिव्यक्तिः न सम्भवा।

मृच्छकटिकप्रकरणे साङ्ख्यकीयविश्लेषणदृष्ट्या एतद्गणीयधातूनां सङ्ख्यान्यूनमेव प्रतीयते। प्रकरणे गणस्यास्य निम्नधातवः प्रयुक्ताः सम्भवन्ति-

**वृ, शक्, आप्, साध् इति।**

**तुदादिगणधातूनां प्रयोगः-** अस्य गणस्य धातूनां मध्ये ''तुदादिभ्यः शः'' इति सूत्रात् 'श' विकिरणं समायाति। अस्य गणस्य प्रमुखाः धातवः तुद्-हष्-क्षिप्-इष् इत्यादयः सन्ति। वाक्यव्यवहारे मृच्छकटिकप्रकरणे गणस्यास्य धातुषु एकमुदाहरणं यथा-

**"एतान्यस्यादशनामकानि मया कृतान्यद्यापि मां नेच्छति''**[३३]

अत्र वाक्ये वाग्व्यवहारे छन्दनियमदृष्ट्या च सत्सु इच्छार्थकधातुषु इच्छ् इति धातोः प्रयोगः एव समुचितः।

साङ्ख्यकीयविश्लेषणदृष्ट्या अस्य गणस्य निम्नधातवः प्रकरणे दृश्यन्ते-

**प्रच्छ्, विश्, गुम्फ्, इष्, क्षिप्, मृ, दिश्, मुच्, घूर्ण्, स्फुर्, नुद्, लस्ज्, स्पृश्, लिख्, लुप्, सृज्, मृश्, मुद्, इति।**

**रूधादिगणधातूनां प्रयोगः-** प्रकरणे रूधादिगणधातूनां समुचितव्यवहारः प्रयोगो वा विद्यते। अत्र 'रूधादिभ्यः श्नम्' इति सूत्रात् धातूनां मध्ये 'श्नम्' (न, न्) इति विकिरणस्यागमनं भवति। रूध्-छिद्-भुज्-युज् इत्यादयः धातवः गणस्यास्य शोभां वर्धयन्ति। ततः उदाहरणमेकं यथा-

---

[३२] *मृच्छकटिकम्- 3.10 पृष्ठ 171*

[३३] *मृच्छकटिकम्- 1.23 पृष्ठ 36*

**"तिष्ठ रे दुष्टश्रमण तिष्ठ। आपानकमध्यप्रविष्टस्येव रक्तमूलकस्य शीर्षं ते भञ्जामि''**[३४]

अत्र वाक्ये भञ्जामि इति क्रियापदं रुधादिगणस्य वर्तते। अत्र शकारोक्तिरूपमेव ताडनार्थकक्रियापदस्य प्रयोगः कृतः।

मृच्छकटिकप्रकरणे अस्य गणस्य निम्नधातूनां प्रयोगः साङ्ख्यकीयविश्लेषणदृष्ट्या विहितः कविना यथा-

**पिष्, छिद्, युज्, भुज्, रूध्, भिद्, भज्, खिदेति।**

**तनादिगणधातुप्रयोगः-** पाणिनेः ''तनाऽऽदिकृञ्भ्य उः'' इति सूत्रात् गणस्यास्य धातूनां मध्ये 'उ' विकिरणं भवति। तन्-कृ इत्यादयः धातवः गणेऽस्मिन् अन्तर्भूताः भवन्ति। प्रकरणे अस्य गणीयधातुप्रयोगः यथा-

**"भवति रदनिके ग्रहाण बलिं प्रदीपं च अहमपावृतं पक्षद्वारकं करोमि''**[३५]

इत्यत्र करोमि इति क्रियापदं अपावृतं पक्षद्वारकं करोमि इत्यस्य सारल्यं प्रकटयति।

साङ्ख्यकीयविश्लेषणदृष्ट्या मृच्छकटिकप्रकरणे अस्य गणस्य 'कृ' एव धातुः मृच्छकटिके प्रयुक्तो इति सम्भवति।

**6.आख्यातपदेन अलङ्कारसौन्दर्यम्–** अलङ्कारसौन्दर्यदृष्ट्या शूद्रकेण स्वकीये प्रकरणे सुष्ठुतया क्रियापदानां प्रयोगः कृतः। तत्कृतक्रियाप्रयोगं विविधालङ्कारेषु द्रष्टुं शक्यते-

**लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।**
**असत्पुरुषसेवेव दृष्टिर्विफलतां गता॥**[३६]

अत्र श्लोके "लिम्पतीव" तथा "वर्षतीव" इति क्रियापदप्रयोगात् उत्प्रेक्षालङ्कारः काव्यसौन्दर्यं जनयति। अन्यश्च

**उन्नमति नमति वर्षति गर्जति मेघः करोति तिमिरौघम्।**
**प्रथमश्रीरिव पुरुषः करोति रूपाण्यनेकानि॥**[३७]

श्लोकेऽस्मिन् 'उन्नमति' 'नमति' 'वर्षति' 'गर्जति' 'करोति' इति क्रियापदानि क्रियादीपकालङ्कारप्रयोगे नितरां सौन्दर्यं वर्धयन्ति। अन्यश्च

---

[३४] *मृच्छकटिकम्- 8.3 उप. शकारसंवादः पृष्ठ 410*
[३५] *मृच्छकटिकम्- 1.38 उप. विदूषकसंवादः पृष्ठ 57*
[३६] *मृच्छकटिकम्- 1.34 पृष्ठ 50*
[३७] *मृच्छकटिकम्- 5.26 पृष्ठ 315*

**आलाने गृह्यते हस्ती बाजी वल्गासु गृह्यते।**
**हृदये गृह्यते नारी यदिदं तद्गम्यताम् ॥**[३८]
**हृदये गृह्यते नारी यदीदं नास्ति गम्यताम् ॥ (ऐसा पाठ होना चाहिए।)**

यत्र "क्रिययैव स्वरूपस्वकारणयोः सम्बन्धो यदवगम्यते साऽपरा निदर्शना"[३९] अत्र "गृह्यते" "गृह्यते" इति क्रियापदप्रयोगात् अनुप्रासालङ्कारः तथा क्रिययैव स्वरूपस्वकारणयोः सम्बन्धावगमनात् निदर्शनालङ्कारश्च सौन्दर्यमावर्धयतः। एवं प्रकारेण बहुषु वाक्येषु आख्यातद्वारा अलङ्कारसौन्दर्यं दृष्टुं शक्यते।

**7. आख्यातपदेन गुणसौन्दर्यम्–** गुणाः भवन्ति रसस्याङ्गिनः उत्कर्षहेतवश्च। काव्ये गुणसौन्दर्यवर्धनाय आख्यातपदानां महत्त्वपूर्णभूमिका भवति। काव्यशास्त्रे गुणाभिव्यञ्जकरचनया माधुर्यादि गुणानां ज्ञानं जायते। काव्यशास्त्रानुसारं कोमल वर्णात्मिका वाक्यरचना माधुर्यगुणव्यञ्जिका, कठोरवर्णात्मिका वाक्यरचना ओजगुणव्यञ्जिका तथा उभयवर्णात्मिका वाक्यरचना प्रसादगुणाभिव्यञ्जिका भवति। वाक्यरचनायां क्रियायाः अपि महत्त्वपूर्णं भूमिका भवति यतो हि माधुर्यगुणाभिव्यक्तये तादृशी क्रियैव उपयुक्ता एवं अन्यगुणयोः कृतेऽपि तादृशी क्रियापदानि। प्रकरणे तद्यथा-

**धन्यानि तेषां खलु जीवितानि ये कामिनीनां गृहमागतानाम्।**
**आर्द्राणि मेघोदकशीतलानि गात्राणि गात्रेषु परिष्वजन्ति ॥**[४०]

अत्र श्लोके परिष्वजन्तीति क्रियापदं माधुर्यगुणाभिव्यक्तये सहायकमस्ति। यतो हि परिष्वजन्तीति क्रियापदे कोमलवर्णानां प्रयोगः विद्यते तथा यत्र एतादृशाणां वर्णानां प्रयोगो तत्र माधुर्यगुणः। यथोक्तम्-

**मूर्ध्नि वर्गान्त्यागाः वर्णाः अटवर्गा रणौ लघु।**
**अवृत्तिर्मध्यवृत्तिर्वा माधुर्ये घटना तथा ॥**[४१]

**8. आख्यातपदेन रससौन्दर्यम्–** काव्ये भवति रसास्वादस्य प्राधान्यम्। सरसं काव्यमेव सहृदयान् आह्लादयति। अस्मै रसस्वादाय आख्यातपदस्यापि महत्त्वपूर्णस्थानं भवति। प्रकरणे आख्यातपदेन रससौन्दर्यस्य बहून्युदाहरणानि सन्ति। तद्यथा-

---

[३८] *मृच्छकटिकम्- 1.50 पृष्ठ 73*
[३९] *काव्यप्रकाशः- सूत्र 149 वृत्तिः पृष्ठ 476*
[४०] *मृच्छकटिकम्- 5.49 पृष्ठ 339*
[४१] *काव्यप्रकाशः- 8.74 पृष्ठ 393*

**गर्ज वा वर्ष वा शक्र मुञ्च वा शतशोऽशनिम्।**
**न शक्या हि स्त्रियो रोद्धुं प्रस्थिता दयितं प्रति॥**[४२]

उदाहरणेऽस्मिन् रमणाभिमुखीनायिकायाः स्थितिः कीदृशी भवति तद्वर्णनं विद्यते। अत्र उद्दीपनविभावदृष्ट्या 'गर्ज' 'वर्ष' 'मुञ्च' इति क्रियापदानि श्रृंगाररससहायकभूतानि सन्ति।

9. **आख्यातपदेन ध्वनिसौन्दर्यम्-** मृच्छकटिकप्रकरणे बहूनि तादृशानि वाक्यानि सन्ति यत्र आख्यातपदैः ध्वनिसौन्दर्यं वर्धते। यथास्मिन् उदाहरणे-

**दीनानां कल्पवृक्षः स्वगुणफलनतः सज्जनानां कुटुम्बी**
**आदर्शः शिक्षितानां सुचरितनिकषः शीलवेलासमुद्रः।**
**सत्कर्त्ता नावमन्ता पुरुषगुणनिधिर्दक्षिणोदारसत्त्वो**
**ह्येकः श्लाघ्यः स जीवत्यधिकगुणतया चोच्छ्वसन्तीव चान्ये॥**[४३]

अत्र 'जीवति' 'उच्छ्वसन्ति' च क्रियापदे काव्यसौन्दर्यवर्धनाय अविवक्षिकवाच्यध्वनिप्रतीतौ सहायके। अन्यश्च

**अयञ्च सुरतज्वालः कामाग्निः प्रणयेन्धनः।**
**नराणां यत्र हूयन्ते यौवनानि धनानि च॥**[४४]

अत्र हूयन्ते इति क्रियापदं अत्यन्ततिरस्कृतवाच्यध्वनौ सहायकमस्ति। यतो हि यौवनस्य धनस्य होमः सम्भवं न किन्तु हूयन्ते इति क्रियापदं अत्यन्ततिरस्कृतं भूत्वा यौवनस्य धनस्य च नष्टतां क्षीणतां विनाशतां वा गच्छति इति द्योतयति।

**10. आख्यातपदेन रीतिसौन्दर्यम्–** रीतिर्पदं भवति विशिष्टा पदरचना तथा पदसमूहात् वाक्यनिर्माणं सञ्जायते। वाक्ये क्रियापदस्य विशिष्टस्थानं भवति। समुचितक्रियायुक्तं वाक्यं स्वतः एव सहृदयान् आह्लादयति। मृच्छकटिकप्रकरणे विशिष्टपदयुक्तानि अनेकानि वाक्यानि प्रयुक्तानि कविना। तद्यथा-
यथा वा –

---

[४२] *मृच्छकटिकम्- 5.31 पृष्ठ 318*
[४३] *मृच्छकटिकम्- 1.48 पृष्ठ 71*
[४४] *मृच्छकटिकम्- 4.11 पृष्ठ 229*

**भो मेघ ! गम्भीरतरं नद त्वं तव प्रसादात् स्मरपीडितं मे।**
**संस्पर्शरोमाञ्चितजातरागं कदम्बपुष्पत्वमुपैति गात्रम्॥**[४५]

समग्रगुणगुम्फिता वैदर्भीरीतिः भवति, तद्दृष्ट्या अत्र चारुदत्तस्य अनुरागोत्पन्ने नद इति क्रिया महत्त्वपूर्णां भूमिकां निर्वहति।

**11. आख्यातपदेन वक्रोक्तिसौन्दर्यम्–** वक्रोक्तिर्भवति वैचित्र्यपूर्णा उक्तिः। ईदृश्यः उक्तयः काव्यसौन्दर्ये महत्त्वपूर्णां भूमिकां निर्वहन्ति। मृच्छकटिके एताद्दशीनि वैचित्र्यपूर्णानि बहून्यूक्तानि सन्ति। यथा-

**शकारः- श्रृणोमि माल्यगन्धम् अन्धकारपूरितया पुनर्नासिकया सुव्यक्तं पुनर्न प्रेक्षे भूषणशब्दम्।**[४६]

वाक्येऽस्मिन् शकारोक्तिरियं किमपि सौन्दर्यविशेषं जनयति। वाक्येऽस्मिन् नासिकया माल्यगन्धं श्रृणोमि इत्यत्र श्रृणोमि इति स्थाने जिघ्रामि इति क्रियापदस्य प्रयोगः उचितः तथा च भूषणशब्दं प्रेक्षे अत्र प्रेक्षे इति क्रियापदस्थाने श्रृणोमि इति प्रयोगः समुचितः किन्तु शकारोक्तिकारणाद् अत्र कोऽपि दोषो नास्ति। अथ च वाक्यमिदं वक्रताजन्यसौन्दर्यविशेषं जनयति।

**12. आख्यातपदेन औचित्यसौन्दर्यम्–** उचितस्य भावो औचित्यमिति। प्रकरणे वाक्यरचनायां काव्यसौन्दर्यवर्धनाय आख्यातद्वारा औचित्यसौन्दर्यमपि द्रष्टुं पार्यते। तद्यथा-

**पद्मव्याकोशं भास्करं बालचन्द्रं वापी विस्तीर्णं स्वस्तिकं पूर्णकुम्भम्।**
**तत् कस्मिन् देशे दर्शयाम्यात्मशिल्पं दृष्ट्वा श्वो यं यद्विस्मयं यान्ति पौराः॥**[४७]

अस्मिन् श्लोके 'विस्मयं यान्ति पौराः' इत्यत्र विस्मयेण सह यान्ति इति क्रियायाः प्रयोगः नूतनौचित्यं जनयति आह्लादकत्वञ्च विवर्धयति।

**12. अकर्मकक्रियापदद्वारा सौन्दर्यम्-** येषां धातूनां कर्म न भवति तः अकर्मकपदवाच्याः भवन्ति। एते लज्जा-सत्ता-स्थित्यादयः सन्ति तद्यथा-

**लज्जासत्तास्थितिजागरणं वृद्धिक्षयभयजीवनमरणम्।**
**नत्र्तननिद्रारोदनवासाःस्पर्धाकम्पनमोदनहासाः॥**
**शयनक्रीडारुचिदीप्त्यर्थाःधावतएतेकर्मणिनोक्ता॥**[४८]

मृच्छकटिकप्रकरणे अनेकत्र अकर्मकधातवः काव्यशोभां काव्यसौन्दर्यं चावर्धयन्ति। तेषु केचन यथा-

---

[४५] *मृच्छकटिकम्- 5.47 पृष्ठम् 338*

[४६] *मृच्छकटिकम्- 1.35 पूर्वं पृष्ठम् 52*

[४७] *मृच्छकटिकम्- 3.13 पृष्ठम् 174*

[४८] *बृहद् अनुवाद चन्द्रिका(हंस चक्रधर नौटियाल)- पृष्ठम् 217*

**इयं हि निद्रा नयनावलम्बिनी ललाटदेशादुपसर्पतीव माम्।**
**अदृश्यरूपा चपला जरेव या मनुष्यसत्त्वं परिभूय वर्द्धते॥**[४९]

अत्र वर्द्धते इति अकर्मक क्रिया तस्याः एव प्रयोगोऽत्र वाक्यरचनादृष्ट्या पात्रस्थितिदृष्ट्या चोपयुक्ता।

**निष्कर्षः-** काव्यरचनायां शब्दार्थयोः अभिन्ना भूमिका भवति। सर्वैः काव्यशास्त्रिभिः रसादिविभिन्नसम्प्रदायसिद्धान्ताचार्यैश्च एकस्वरेण उभयोः अभिन्ना भूमिका स्वीकृता। यद्यपि शूद्रकेण स्वकीये प्रकरणे काव्यसौन्दर्यदृष्ट्या सर्वेषां पदानां भवतु नाम सुप्पदानां वा तिङ्दानां वा कृदन्तपदानां वा तिङन्तपदानां वा निपातपदानां वा विशेषणपदानां वा उपसर्गादीनां वा सम्यक् प्रयोगः विहितः तथापि तेन कृततिङन्तपदविन्यासः किमपि वैशिष्ट्यं धारयति। काव्यसौन्दर्यवर्धनाय भाषागाम्भीर्यवर्धनाय सहृदयाह्लादयाय च शूद्रकेण बहुविधानां क्रियापदानां प्रयोगः विहितः। फुरफुरायते प्रदीपः(पृष्ठ 62), मस्तकं ते मडमडायिष्यामि(पृष्ठ 78),सभिकेन खलीक्रियते(पृष्ठ 121)कोपप्रसादाः विफलीभवन्ति (पृष्ठ 332) इत्यादि वाक्येषु नामधातुपदान्यपि प्रकरणसौन्दर्ये चमत्कृतिमुत्पादयन्ति। एवं प्रकारेण तेन कृतमाख्यातप्रयोगः केवलं रस-गुण-ध्वन्यादीनां सौन्दर्यं न वर्धयति अपितु क्वचित् वाक्यसौन्दर्यं, क्वचित् पात्रसंवादसौन्दर्यं, क्वचित् भावगाम्भीर्यं, क्वचित् भाषाशैलीसौन्दर्यं, क्वचिच्च प्रकरणसौन्दर्यमपि आवर्धयति। तत्कृतमाख्यातप्रयोगः पात्रानुकूलःछन्दोऽनुकूलः भाषानुकूलः वाग्व्यवहारानुकूलश्च विद्यते।

**सहायकग्रन्थसूचीः-**

1. मुसलगाँवकर डॉ. केशवराव, वि.सं. 2066, हिन्दी दशरूपक, चतुर्थसंस्करण, चौखम्भा प्रकाशन, वाराणसी
2. राय डॉ. गंगासागर, 2014, मृच्छकटिकम्, द्वितीय संस्करण, चौखम्भा प्रकाशन, वाराणसी
3. मिश्र श्री राधेश्याम, वि.सं. 2068, वक्रोक्तिजीवितम्, चौखम्भा संस्कृत संस्थान, वाराणसी
4. राय डॉ. गंगासागर, 2010, हिन्दी काव्यमीमांसा, चौखम्भा विद्याभवन, वाराणसी
5. शास्त्री डॉ. सुरेशचन्द्र, 2010, मध्यसिद्धान्तकौमुदी, चौखम्भा सुरभारती प्रकाशन, वाराणसी
6. शास्त्री आचार्य कृष्णमोहन, वि.सं. 2063, साहित्यदर्पणः, चौखम्भा संस्कृत संस्थान, वाराणसी
7. सिद्धान्तशिरोमणि आचार्य विश्वेश्वर, वि.सं. 2031, पञ्चम संस्करण, ज्ञानमण्डल लिमिटेड, वाराणसी
8. डॉ. उमाशंकर, 1992, निरुक्तम्, चौखम्भा विद्याभवन, वाराणसी
9. नौटियाल हंस चक्रधर,1995, बृहद अनुवाद चन्द्रिका, मोतीलाल बनारसीदास, नई दिल्ली
10. मिश्र नारायण, 2006, अष्टाध्यायीसूत्रपाठः, चौखम्भा संस्कृत सीरीज ऑफिस, वाराणसी
11. झा आचार्य ब्रजमोहन, 2007,औचित्यविचारचर्चा, चौखम्बा विद्याभवन, वाराणसी
12. आप्टे वामनशिवराम, 2001, संस्कृतहिन्दीकोशः, मोतीलाल बनारसीदास, वाराणसी

~~~~~~~~~~~

[४९] *मृच्छकटिकम्- 3.8 पृष्ठम् 169*
~~~~~~~~~~~

वर्षम्-०४ अङ्कः-०४ शोधज्योतिः
जनवरी-दिसम्बर, २०२२ ISSN-2350-0700

# अर्थद्योतनिकाटीकाधारेण अभिज्ञानशाकुन्तलस्य रससमीक्षा

डॉ. हरीशचन्द्रः की. भट्टः[१]

कविकुलगुरुकालिदासस्य अभिज्ञानशाकुन्तलं संस्कृतजगति नाटकेषु सर्वदा सर्वथा ख्यातिं भजते। बहुभिः पौर्वर्त्यपाश्चात्यविद्वद्भिरपि ग्रन्थस्यैतस्योपरि बह्व्यः टीकाः प्रतिपादिताः सन्ति। यतो हि नाटकमिदं श्रृङ्गारप्रधानमस्ति अतः टीकासु श्रृङ्गारस्य प्राधान्यमस्ति। मुख्याः टीकाकाराः शकुन्तलादुष्यन्तयोः श्रृङ्गाराय महत्वं प्रदत्तवन्तः। बह्वीषु टीकासु श्रृङ्गारं विहाय अन्यरसेभ्योऽपि महत्वं प्रदत्तमस्ति।

अर्थद्योतनिकाटीकागुजराते प्रसिद्धा नास्ति। अत: कार्यमिदं मया स्वीकृतमस्ति। अभिज्ञानशाकुन्तलस्य अर्थद्योतनिकाटीकाकर्तारः राघवभट्टाचार्याः सन्ति। अर्थद्योतनिकाटीकायां राघवाचार्येण रुय्यकादीनां बहूनां विदुषां मतानि उररीकृतानि सन्ति। एतस्या: टीकाया: पठनेन लक्षणग्रन्थानां सरलतया ज्ञानं भवति। स्वगता सद्दशानां छन्दसां ज्ञानमित: प्राप्तुं शक्यते। बहूनां कोशग्रन्थानामध्ययनं राघवभट्ट: अकरोदिति तस्या अभ्यासेन ज्ञायते।

मुखाद्या: पञ्चसन्धय: राघवाचार्या: अकुर्वन्। संक्षेपेण टीकाया: विषये लिखामि चेत् राघवभट्टस्य अर्थद्योतनिकाटीकानावं समारुह्य य: कोऽपि अभिज्ञानशाकुन्तलं तर्तुमिच्छति स: पारं यातुं शक्नोति।

अतोऽत्र अस्या: टीकाया आधारेण श्रृङ्गारं विहाय अन्यरसानां परिशीलनं विहितमस्ति।

- **अर्थद्योतनिकाटीकाधारेणरससमीक्षा**

**ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः**
**पश्चार्धेन प्रविष्टः शरपतनभयाद् भूयसा पूर्वकायम्।**
**दर्भैरर्धावलीढै: श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा**
**पश्योदग्रप्लुतत्वाद्वियति बहुतरं शोकमुर्व्यां प्रयाति॥**[२]

ग्रीवाभङ्गा– रसभावादितात्पर्यमाश्रित्य विनिवेशनम्। अत्र भयानको रसो व्यङ्ग्यः। तस्य मृगगतं भयं स्थायिभावः। दुष्यन्ताधिष्ठित स्यन्दनालोकनमालम्बनविभावः। तदनुपतनशरपतनौत्सुक्यादीन्युद्दीपन-विभावः। ग्रीवाभङ्गार्धभक्षिततृणस्खलनशुष्कौष्ठकण्ठत्वमुख-वैवर्ण्यशरीरसंकोचाश्चञ्चलादयोऽनुभावाः। त्रासश्रमवेगादयो व्यभिचारिणः। कम्पादयः सात्विकाः। अनेनात्र भयानको रसः व्यज्यते।[३]

---

[१] *प्रधानाचार्यः, श्रीनर्मदासंस्कृतवेदपाठशाला, तपोवनसंकुलम्, भरुच, मो. ९९२५२२०२३४*

[२] *अभिज्ञानशाकुन्तले– श्लोकः ७, अङ्कः १.*

[३] *अभिज्ञानशाकुन्तले अर्थद्योतनिकाटीकायां पृष्ठम् १७*

**तीव्राघात-प्रतिहततरु-स्कन्धलग्नैकदान्तः**
**पादाकृष्टव्रततिवलयासङ्ग-सञ्जातपाशः।**
**मूर्तो विघ्नस्तपस इव नो भिन्नसारङ्गयूथो**
**धर्मारण्यं प्रविशति गजः स्यन्दनालोकभीतः॥**[४]

तीव्राघातप्रतिहततरुः-अत्रापि भयानको रसः। गजगतभयं स्थायिभावः। दुष्यन्तसेनारथावलोकनं विभावः। पार्थावलोकनपलायनादयो व्यभिचारिणः अनेनात्र भयानको रसः।

**अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये**
**रक्षायोगादयमपि तपः प्रत्यहं संचिनोमि।**
**अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः**
**पुण्यः शब्दो मुनुरिति मुहुः केवलं राजपूर्वः॥**

**नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्री-**
**मेकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति।**
**आशंसन्ते सुरयुवतयो बद्धवैरा हि दैत्यै-**
**रस्याधिज्ये धनुषि विजयं पौरूहूते च वज्रे॥**[५]

अध्याक्रान्ता एवं नैतच्चित्रमित्यत्र आभ्यां युद्धवीरो ध्वन्यते। तल्लक्षणं तु

अविस्मयादसंमोहादविषादाच्च यः सताम्।
धर्माद्यर्थविशेषेषु कार्यतत्त्वविनिश्चयः।
तपश्च विनयः कीर्तिः पराक्रमणशक्तिता।

इत्यादयः विभावाः स्युः।

युद्धवीरेहर्षगर्वामर्षाद्याव्यभिचारिणः।
असहायेऽपि युद्धेच्छा समरादनिवर्तनम्॥
भीताभयप्रदानाद्या अनुभावाः प्रकीर्तिताः।
उत्साहःस्थायिभावश्च धीरावीरं बभाषिरे॥

अत्र विभावानुभावावुपनिबद्धौ। व्यभिचार्यादयः स्वयमूहनीयाः। अनेन अत्र वीरो रसः।[६]

---

[४] *अभिज्ञानशाकुन्तले– श्लोकः ३२, अङ्कः १.*

[५] *अभिज्ञानशाकुन्तले– श्लोकः १४-१५, अङ्कः २.*

[६] *अभिज्ञानशाकुन्तले अर्थद्योतनिकाटीकायां पृष्ठम् 78-79*

विदूषकः – त्रिशंकुरिवान्तराले तिष्ठ इत्यत्र विदुषकवचनेषु हास्यप्रतीतिः स्फुटैव। उक्तं च-

विदुषकस्य हास्यं तु नायके हास्यकारणम्।

तल्लक्षणम् -

**भाषणाकृतिवेषाणां क्रियायाश्च विकारतः।**
**लोल्यादेश्च परस्थानामेषामनुकृतेरिति॥**

विकासश्चेतसो हासः ... इति एतत्स्थायीहास्यं ज्ञेयम्।[७]

**सायंतने सवनकर्मणि संप्रवृत्ते वेदीं हुताशनवतीं परितः प्रयस्ताः।**
**चायाश्चरन्ति बहुधा भयमादधानाः सन्ध्यापयोदकपिशाः पिशिताशनानाम्॥**[८]

अत्र भयानको रसः। उक्तं च 'भये तुमन्तुनाघोरदर्शनश्रवणादिभिः। चेतस्यतीवचाञ्चल्यं तत्प्रायोनीचमध्ययोः' इति। तद्भयं स्थायिभावः। पिशिताशनच्छायावलोकनं विभावः। पद्यस्थभय'शब्देन त्रासलक्षणो व्यभिचारी। उद्दीपनभावादिकं स्वयमूहनीयम्।[९]

**आचार इत्यवहितेन मया गृहीता या वेत्रयष्टिरवरोधगृहेषु राज्ञः।**
**काले गते बहुतिथे मम सैव जाता प्रस्थानविक्लवगतेरवलम्बनार्था॥**[१०]

औत्सुक्यस्य भावः वर्णितोऽस्ति। तद्यथा-
कालाक्षमत्वमौत्सुक्यमिष्टवस्तुवियोगतः।
तदर्शनाद्रम्यवस्तुदिदृक्षोदेश्च -इति।

ननु अत्र औत्सुक्यलक्षणस्य भावस्य शब्दवाच्यत्वं दोष इति चेन्न अत्र न तथा विभावादेः औत्सुक्यप्रतीतिर्यथा पुनरौत्सुक्यग्रहणात्। एतदभिप्रायेणैव 'न दोषः स्वपदेनोक्तावपि संचारिणः क्वचित् इत्युक्तम्। अत्र 'प्रस्थानविक्लवगतेः' इत्यनेन औत्सुक्यस्य ग्रहणं भवति।[११]

अत्राङ्कान्ते नेपथ्यादारभ्य राजा- वेत्रवतिपर्याकुलोऽस्मि। इत्यत्र- 'नेपथ्ये' इत्याद्ये तदन्तेन शक्तिर्नामाङ्गमुपक्षिप्तम्। तल्लक्षणं तु -

विरोधप्रशमो यस्तु सा शक्तिरिति कीर्तिता। इति

---

*७ अभिज्ञानशाकुन्तले अर्थद्योतनिकाटीकायां पृष्ठम् 83*

*८ अभिज्ञानशाकुन्तले– श्लोकः २४, अङ्कः ३.*

*९ अभिज्ञानशाकुन्तले अर्थद्योतनिकाटीकायां पृष्ठम् 117*

*१० अभिज्ञानशाकुन्तले– श्लोकः ३, अङ्कः ५.*

*११ अभिज्ञानशाकुन्तले अर्थद्योतनिकाटीकायां पृष्ठम् 159*

अनेन अद्भुतरसोऽपि ध्वनितः। तल्लक्षणं तु -

दुर्लभाभिष्टसंप्राप्तिः खेचराणां विलोकनम्।
एते यत्र विभावाः स्युरनुसंचारिणस्त्वमी॥
स्तम्भः स्वेदश्च रोमाञ्चः प्रलयो गद्गदं वचः।
आवेगसम्भ्रमौजाड्यमिति यत्राथ विस्मयः॥

स्थायीतमद्भुतं प्राह ................ इति। अनेन अद्भुतरसस्य प्रभवोऽत्र अनुमीयते।

**एष त्वामभिनवकण्ठशोणितार्थी शार्दूलः पशुमिव हन्मि चेष्टमानम्।**
**आर्तानां भयमपनेतुमात्तधन्वा दुष्यन्तस्य शरणं भवत्वदानीम्॥**[१२]

इति श्लोके अभिनवकण्ठशोणितशार्दूलः चेष्टमानमितस्ततो पशुमिवैषवाहन्मि। अनेन बीभत्सरसो ध्वन्यते।[१३]

(नेपथ्ये) अविहा अविहा। इत्यत्र रौद्रो रसो ध्वन्यते। तल्लक्षणं तु -

हन्तृप्रकृतयोरक्षोदैत्याद्यन्यायकारिणः।
जिघांसाद्याश्च यत्रास्युर्विभावाः परिकीर्तिताः॥
भावाः संचारिणः स्थायी क्रोधोरौद्रोऽभ्यधायिसः॥ इति।[१४]

**उपसंहारः**

अनेन प्रकारेण रसमवलम्ब्य कार्यं मयात्र विहितमस्ति। यतो हि प्रत्येकस्य अङ्कस्य समाससमीक्षा-अन्वयसमीक्षा-कोशसमीक्षा-अलङ्कारसमीक्षा-ध्वनिसमीक्षा-व्याकरणसमीक्षा अवशिष्टाः सन्ति। एतेषु विषयेष्वपि कार्यं करणीयं भवति। अत्र अस्या: टीकाया आधारेण शृङ्गारं विहाय अन्यरसानां परिशीलनं विहितमस्ति। अनेन शोधलेखाधारेण अन्येऽपिकार्येऽस्मिन् प्रवृत्ताः भविष्यन्ति इति भावनया सह...

**सन्दर्भग्रन्थसूचिः**

१. अभिज्ञानशाकुन्तम् – कालिदास:, व्याख्याकार: - डॉ.सुधाकर मालवीय, चौखाम्बा कृष्णदास अकादमी, वाराणसी – २०१७
२. अभिज्ञानशाकुन्तम् – कालिदास:, सम्पादक: - वस्तकुमार भट्ट, राष्ट्रियसंस्कृतसंस्थान, नवदेहली, २०१८

---

*[१२] अभिज्ञानशाकुन्तले– श्लोकः २७, अङ्कः ६.*
*[१३] अभिज्ञानशाकुन्तले अर्थद्योतनिकाटीकायां पृष्ठम् 232*
*[१४] अभिज्ञानशाकुन्तले अर्थद्योतनिकाटीकायां पृष्ठम् 233*

३. काव्यप्रकाश: - मम्मट:, व्याख्याकार: - डॉ. सत्यव्रतसिंह:, चौखम्बा विद्याभवन, वाराणसी, २०१४
४. साहित्यदर्पण: - विश्वनाथ:, व्याख्याकार: - डॉ. सत्यव्रतसिंह:, चौखम्बा विद्याभवन, वाराणसी, दशम संस्करण – १९९७
५. मल्लिनाथ की टीकाओ का विमर्श – डॉ. प्रभुनाथ द्विवेदी, चौखाम्बा पब्लीशर्स, वाराणसी, २००८
६. काव्यमीमांसा – राजशेखर:, व्याख्याकार: - डॉ. श्रीकृष्णमणि त्रिपाठी, चौखाम्बा सुरभारती प्रकाशन, वाराणसी -२०१६
७. चन्द्रालोक: - जयदेव:,व्याख्याकार: - डॉ. श्रीकृष्णमणि त्रिपाठी, चौखाम्बा सुरभारती प्रकाशन, वाराणसी -पुनर्मुद्रित - २०००
८. वक्रोक्तिजीवितम् – कुन्तक:, व्याख्याकार: - श्री राधेश्याम मिश्र, चौखाम्बा संस्कृत संस्थान, वाराणसी, पञ्चम संस्करण – २००१
९. बृहद्‌कोश – संपादक प्रा. रतिलाल सां नायक, अक्षरा प्रकाशन, अमदावाद – तृतीय आवृत्ति – २००८
१०. संस्कृत हिन्दी कोष – वामन शिवराम आप्टे, मोतीलाल बनारसीदास, वाराणसी, १९७६
११. अमरकोष – अमरसिंह – हरदत्तशर्मा तथा सार देसाई, पूना, १९४१
१२. अभिज्ञानशाकुन्तलम्, कालिदास:, चौखाम्बा संस्कृत प्रतिष्ठान, प्रकाशक- नारायण रामआचार्य, ३८, यू.ए. जवाहर नगर, बंगलो रोड, पो. बो. नं. २११३, दिल्ली – ११०००७, ई. स. २०१२

~~~~~~~~~~~
~~~~~~~~~~~

वर्षम्-०४ अङ्कः-०४ शोधज्योतिः
जनवरी-दिसम्बर, २०२२ ISSN-2350-0700

# संस्कृतखृष्टीयसाहित्यसम्बद्धा समीक्षिता दृष्टिः

डॉ. सौम्यजित् सेनः[1]

## १. उपोद्घातः

सर्जना समीक्षा चेति सरस्वत्यास्तत्त्वद्वितयं परस्परसम्बद्धमविच्छेद्यमावहोः कालाद्युगपदेव प्रवहमानम्। सर्जना समीक्षाया विषयो भवति, समीक्षा च सर्जनाममरां विदधाति। अतः संस्कृतसाहित्यपरम्परायां कविसहृदययोरन्योन्याश्रयत्वं स्फुटमेव। स्वरूपभेदाद्[2] विषयभेदात्[3] च कवित्वाद्भावकत्वं, भावकत्वाच्च कवित्वं पृथगेवेति विदुषां केषाञ्चिन्मतम्। तदुच्यते साहित्यमीमांसकमौलिनाभिनवगुप्ताचार्येण –'**सरस्वत्यास्तत्त्वं कविसहृयाख्यं विजयते**' इति। तस्मात्कारयित्री-भावयित्र्योः प्रतिभयोः सहावस्थानं नामालौकिकोऽपूर्वश्च विषयः कश्चन। तयोः प्रतिभयोराधारा यथार्थाः खलु संस्कृतखृष्टीयसाहित्यस्य प्रत्येकं कविवरा इति सुनिश्चिता मे मतिः।

## २. संस्कृतखृष्टीयसाहित्यम्

संस्कृतभाषामविनाशिनीममरीं च न केवलं भारतीया अपि तु वैदेशिका अपि विद्वांसः सुदृढं मन्यन्ते। स्थिरत्वं सर्वदेशव्यापित्वं जगन्मान्यत्वं बहुज्ञानाश्रयत्वं साम्प्रतिकविशेषविज्ञानज्ञानजनकत्व-ञ्चेत्यादयोऽसंख्याः संस्कृतगिरो गुणास्त्वनन्यसाधारणाः। तस्मादेव यदा खृष्टधर्मप्रचारकाः समाजग्मुर्भारतवर्षं, तदा तैरवगतं यद् भारतीये समाजे खृष्टधर्मस्य तथाङ्गनां चिरस्थायिप्रभावस्य स्थापनहेतोरादावेव भारतीयसंस्कृतेस्तथा भारतीयसाहित्यानां सम्यग् ज्ञानमत्यावश्यकमिति। यतस्तदानीमपि भारतीयायाः संस्कृतेश्चिन्ताधारायाश्च प्रधानभूतमाध्यमत्वेन संस्कृतमेव सर्वैर्विद्वन्मूर्धन्यैस्तथा सामाजिकैः समस्वरेण स्वीक्रियते स्म। अतः सूक्ष्मेक्षिकया सर्वं पर्यवेक्ष्य तैः खृष्टीयधर्मप्रचारकैः सिद्धान्तितं यद् भारतीयचिरन्तनैतिह्यस्य मूलस्तम्भभूतस्य संस्कृतस्याध्ययनं तु नितरां प्रयोजनमिति।

गच्छता कालेन भाषायामस्याञ्चाप्तव्युत्पत्तयस्ते संस्कृतभाषां द्वारीकृत्यैव खृष्टधर्मस्य प्रधानभूतानां *बाइबेला*दीनां धर्मग्रन्थानामनुवादकर्मणि कायमनोवाक्यैः प्रवृत्ताः। खृष्टधर्मस्योपजीव्यभूतानां ग्रन्थानां यथा –*'Bible'*-*'Old and New Testaments'*-*'Sermon on the Mount'*– इत्यादिकानां

---

*[1] सहायकोऽध्यापकः, संस्कृतविभागस्य, कोचविहार-पञ्चाननवर्मा-विश्वविद्यालयस्य, पश्चिमबङ्गस्य।*

*[2] स्वरूपभेदः– 'यः कवते, काव्यं कुरुते स कविः। यस्तु काव्यानुशीलनाभ्यासवशाद्विशदीभूते मनोमुकुरे वर्णनीयतन्मयीभवनयोग्यहृदय-संवादभाक् स भावकः इति स्वरूपभेदः।'*

*[3] विषयभेदः– 'एकस्य शब्दार्थौ विषयः। अपरस्य रसास्वादो विषयः इति विषयभेदः।'*

स्वल्पेनैव कालेन संस्कृतानुवादोऽपि प्रकाशितस्तैः। न केवलमनुवाद एव स्वारसिकास्तेऽपि तु तदीयव्याकरणग्रन्थानां तथा चाभिधानग्रन्थानां रचनायामपि तेषामाग्रहः सुतरामेव वर्धित इत्यत्र नास्ति संदेहलेशः।

किञ्च, अनुवादरचनायामेव ते न स्तब्धाः, अपि तु तेषामिष्टभगवतो येषूखृष्टस्य पवित्रं जीवनमाश्रित्य बहूनि काव्यानि सुरगिरा विरचयामासुस्ते। गद्यमयानां तथा च पद्यमयानां तादृशानां मौलिकसंस्कृतकाव्यानां संख्या न तु स्वल्पा, नूनमेवाङ्गुल्यगण्या। तेनैव संजज्ञे संस्कृतसाहित्ये नितरामनालोचितावहेलिता विस्मृतप्राया परन्त्वविस्मरणीया काचित्साहित्यधारा, सा हि– **'संस्कृतखृष्टीयसाहित्यम्'** इत्यभिधयात्राभिधीयते।

'संस्कृतखृष्टीयसाहित्यम्' इति पदेन मयका खृष्टधर्मावलम्बिभिरन्यैर्वा विद्वद्भिर्विरचितानि श्रीयेषूखृष्टविषयकाणि तद्धर्मस्यान्येषां खृष्टीयमतप्रचारकाणां वा जीविताश्रितानि संस्कृतकाव्यकुसुमानि तथा च खृष्टधर्मस्य मूलभूततत्त्वान्युपजीव्य प्रणीतानि संस्कृतकाव्यान्येव बोधयितुमिष्यन्त इत्यवधेयम्। तथा हि सुरगिरा खृष्टीयविश्वासानां खृष्टीयमतानां वा प्रकाशेन सृष्टं सारस्वतं वाङ्मयमेव संस्कृतखृष्टीयसाहित्यत्वेन प्रसिद्धतां गतम्।

अत्र प्राच्य-पाश्चात्य-कविवरैः प्रणीतानां संस्कृतखृष्टीयसाहित्यस्य मौलिभूतानां महाकाव्यानां, खण्डकाव्यानां, गद्यकाव्यानाम्, अनूदितकाव्यानां तथा च विविधकाव्यानां समावेशो दृष्टिपथमुपैति येन समग्रस्याप्यस्य वाङ्मयस्य विशालत्वं महत्त्वं तथा च नूतनत्वं प्रतीयमानं स्यादिति निश्चप्रचम्। महाकाव्येषु यथा उइलियम-हज-मिल-पादेन प्रणीता *श्रीखृष्टसंगीता* इति, जान्-म्यूर-कृतं *श्रीपौलचरित्रम्* इति *श्रीयेषूखृष्टमाहात्म्यम्* इति वा, पि.सि.देवस्य-वर्येण रचितं *क्रिस्तुभागवतम्* इति चान्यतमत्वं भजन्ते, तथैव खण्डकाव्येषु जान्-म्यूर-प्रणीतानि *शर्म्मपद्धतिः, परमात्मस्तवः, मतपरीक्षा, निस्तारमार्गदीपिका, पापमोचनीययथार्थोपायप्रदर्शनम्* चेत्यादीनि तथा च सोमवर्मराजरचितं *श्रीयेशुसौरभम्* इति च विशेषतयोल्लेखमर्हन्ति। गद्यकाव्येषु जे.आर.व्यालाण्टाइन्-वर्येण विरचितं *खृष्टधर्मकौमुदी* इति, जे.मार्सलाचार्येण कृतं *येशुचरितम्* इतिजान्-म्यूर-प्रणीतम् *ईश्वरोक्तशास्त्रधारा* इति च प्रख्यातानि। पाश्चात्यपण्डिता भारतमागम्य देवभाषायां प्राप्तव्युत्पत्तयः प्राधान्येनानुवादकर्मणि मनोनिवेशनमकार्षुः। भारतीयपण्डितानां साहाय्येन तेषां पाश्चात्यविदुषां नितान्तमक्लान्तपरिश्रमेण च शीघ्रमेव खृष्टधर्मस्य प्रायः सर्व एव प्रधानग्रन्थाः संस्कृतभाषायामभवन्ननूदिताः। अत्रैतेषां ग्रन्थानां मुद्रणव्यापारे 'व्याप्टिस्ट-मिशन-प्रेस' तथा 'बिशप-कलेज-प्रेस' इत्येतयोः प्रकाशनसंस्थयोर्भूमिका त्वनस्वीकार्या। विविधकाव्येषु *नूतनोदन्तोदोत्स-खृष्टपुराण-इतिहासदीपिका-व्यवहारालोक-क्रिस्तोपनिषत्-सत्यवेदसारसंग्रह-क्रिस्तायन-शैलोपनिषत्-परमेश्वरप्रकाशे*त्यादीनि काव्यान्यन्यतमानीति संस्कृतखृष्टीयसाहित्यं सुतरामेव सम्पुष्टमित्यपेतशङ्कम्।

---

**३. संस्कृतखृष्टीयसाहित्यस्य भाषाविमर्शः**

समाजे प्रभूतप्रभावोपेतानां प्रशिक्षितानां हिन्दुपण्डितप्रवराणां परिषदि सुतरां समादृता या खल्वासीत् संस्कृतभाषा, तयैव संरचितमिदं साहित्यमिति त्वेतादृशसाहित्यस्य नाम्न एव प्रतीयते। किन्तु किं तावत्कारणं स्यादस्या एव भाषायाश्चयने तथा च व्यवहारे?

भारतवर्षे तदानीं संस्कृतज्ञानां संख्या सुतरामेवाङ्गुलिगण्यैवासीदिति तु समेषां विदितचरमेव। परं संख्यायां स्वल्पानामपि प्रभावेण प्रतिपत्त्या च तेषां समकक्षतां कर्तुं तदा तु नासीत् कोऽपि समर्थः। अपि च, समग्रेऽपि भारतवर्षे ते चासन् प्रसारिताः। तदर्थं तेषामवहेलनं कदापि नोचितमिति मन्यमानैः प्रतीच्यैस्तैश्चिन्तितं यत्ते प्रभावशालिनो ब्राह्मणास्तेषामेव प्रियतमया संस्कृतभाषया सम्बोध्या इति। तेन तेषां भारतीयपण्डितानां सन्तुष्टिर्यथा स्यात्तथैव खार्ष्टकैर्विरचितानि संस्कृतखृष्टीयसाहित्यानि प्रत्यपि तन्मनांसि समाकृष्टानि भवेयुः। किञ्च, ये खलु प्रान्तीयभाषासु विदग्धाः पण्डिताः संस्कृते न तथा पारङ्गमास्तेषां सौविध्याय संस्कृतमूलैः साकं कयाचिदपि प्रान्तीयभाषया तत्साहित्यानामनुवादो यदि दीयेत, तदा प्रायः सर्वेऽपि समाजस्योच्चस्तरीयाः पण्डितप्रमुखाः खृष्टीयसाहित्यकृतयः न केवलं जानीयुरपि तु सम्यगवगच्छेयुरित्यासीत् खृष्टीयमतप्रचारकाणां सुनिश्चितो राद्धान्तः।

अत्रेदमपि वक्तव्यं यन्न केवलं संस्कृतखृष्टीयकाव्यानां प्रान्तीयभाषाभिरनुवादस्तैर्विहितोऽपि तु तमेव विषयं तदितरविषयञ्चाश्रित्य तासु भाषासु बहूनि पुस्तकानि तैः प्रणीतानि, यथा प्रधानतया समाजस्य प्रत्येकं जनानां मनःसु खृष्टीयमतविषयकं ज्ञानं जायेत। प्रसङ्गेऽस्मिन् श्रीरामपुरस्थस्य श्रीमत उइलियम-केरी-वर्यस्य बङ्गीयव्याकरणादिपुस्तकप्रणयनं तत्प्रकाशनञ्चावश्यमेव प्रशंसार्हम्। परन्तु स्वल्पसंख्यकानामपि तेषां सुमेधसां विशेषतः कोलकातायाः तत्परितो वा निवसतां शिक्षितानां यूनां युवतीनां च कृते तद्धर्मप्रचाराय आङ्ग्लभाषाया अपि व्यवहारः समुचित आसीदिति तेषां मतिः। किं बहुना, कृतञ्च तदेव तैः। तेषां त्वेवमेवाभीप्सासीद्यदेकदा समग्रेऽपि भारते सर्वे आङ्ग्लभाषामेव व्यवहरेयुः, विशेषतया उच्चतरशिक्षावाप्तिस्तथा च समाजस्य संस्कृतेश्च विविधविषयाणां ज्ञानमनयैव भाषया ते लभेरन्निति। नितरां खेदावहं किन्तु सत्यमिदं तथ्यं यत्तेषां तदभिसन्धौ नूनमेव साफल्यमधिगतवन्तस्त इत्यत्र साम्प्रतिकी भारतीया शिक्षाव्यवस्था कर्मव्यवस्था वा प्रमाणमिति। हा धिक्!अस्माभिस्तु प्राचीनास्माकिनी संस्कृतिर्विस्मृताद्यत्वे।

विषयेऽस्मिन्नेतदप्यस्माभिरनुसन्धेयं यदाङ्ग्लभाषायाः शिक्षया समं तैः खार्ष्टकैः संस्कृतभाषाया अप्यध्ययनं तथा ज्ञानार्जनमावश्यकमिति परामृष्टम्; विशेषतया तेषां कृते, येषां ह्याङ्गलभाषायाः समुत्कृष्टं ज्ञानमासीत्। कथमेवं तैश्चिन्तितमित्याकाङ्क्षायां प्रधानतया यत्कारणं नयनयोर्मे पान्थायते तद्धि समधिगतविद्यानां तेषां भारतीयानां संस्कृतज्ञानेन साकं यद्याधुनिकभाषाज्ञानमपि भवेत्तदा प्राचीनगूढधर्मज्ञानगर्वगर्वितानां समाजस्य प्रभाववतां पुरोहितानां ब्राह्मणानां गर्वध्वंसः सुतरामेव सम्भवति।

अतोऽस्माभिर्दरीदृश्यते यदाङ्ग्लभाषानुवादपुरस्कृतानि संस्कृतखृष्टीयकाव्यानि तदानीं बहुलतया तामिल-माराठी-बङ्गादिप्रान्तीयभाषासु अप्यनूदितानीति।

वस्तुतस्तु भाषा भवति विश्वस्मिन्नपि विश्वे वसतां समेषां मनुजनूनां हृदयावगतयेऽन्यतमः कश्चन मार्ग इत्यत्र नास्ति संशीतिः। सा विश्वसंस्कृतेरेवोत्पन्नं कञ्चनाङ्गं यन्माध्यमेन सत्यस्य प्रकाशो जायते, विश्वभावना च प्रतिफलिता भवति। एवमेव खृष्टीयमतानां तत्रस्थानां धर्मीयविश्वासानां हिन्दुसंस्कृतौ प्रवेशविधानाय भाषाया एव प्रयोजनं सर्वाधिकमासीत्। तदर्थं तैः खार्ष्टकैः संस्कृतमेव चितं, येनैकतो भारतीयभूमौ खृष्टीयमतानां भित्तिप्रस्तरं प्रोथितं भवेत्, अपरतः खृष्टीयमतविश्वासादीनां समुन्नतये भारतीयसंस्कृतेर्योगदानमपि सम्भवेत्। तथाह्याह एम. धवमोणि-महोदयः –

"Inculturation in this context is the process of infusing the Gospel message, the Christian faith and life, in the soul of a culture, so that the Christian message and life is communicated and expressed in its language which in turn adopts the Christian way of viewing and living. This process of inculturation involves a double movement: infusion in order that the Christian message may take root in the soil of the new culture, and transculturation which implies a recognition of what is valuable in the new culture which can contribute to the enriching of the Christian experience and expression."[४] इति।

अतः सुरगिरा खृष्टीयमतप्रकाशेन यदपूर्वं संघटितं तद्भवति खृष्टीयविश्वासस्य संस्कृतायनं, संस्कृतस्य च खृष्टायनमिति। श्री-रिचार्ड-फक्स-इयङ्ग-वर्येण तस्मादेवागादि –

"...what resulted in the case of Sanskrit might be called its Christianization, and by the same token what resulted in the case of Christian faith might be called its Sanskritization."[५] इति।

## ४. संस्कृतखृष्टीयसाहित्ये प्रतिपादिता धर्मतत्त्वमीमांसा

संस्कृतखृष्टीयसाहित्यमिदं सम्पूर्णमेव विविधधर्मीयतत्त्वाश्रितं मोक्षोपयोगिवाक्यसमेतं तथा चोपदेशसमृद्धम्। अत्र मुख्यतया खृष्टीयतत्त्वानामेव व्याख्यानं सुलभम्। परन्तु प्रसङ्गत्या संस्कृतखृष्टीयसाहित्यस्य कविभिरन्यैर्धर्मैः साकं खृष्टीयधर्मीयतत्त्वानां तौलात्मिकमालोचनं कृतमत्र। तथा

[४] *The Lord's Prayer in the Sanskrit Bible, p. 666.*

[५] *The Indian Christiad: A Concise Anthology of Didactic and Devotional Literature in Early Church Sanskrit, p. 1.*

हि खण्डनमण्डनदिशा पल्लवितेऽस्मिन् साहित्ये विद्यमानानां नानाधर्मीयतत्त्वानां सूक्ष्मेक्षिकया समीक्षयेदमत्र प्रतिभाति यदिदं साहित्यमान्तर्धर्मीयविश्वासानां ज्ञानोपलब्धये सुतरामेवोपयोगीति।

मुक्तिरेव परमः पुरुषार्थः समेषामितरपुरुषार्थानामनित्यत्वात्, मुक्तेश्च नित्यत्वात्। अतो मुक्तेरुपाय एवास्माभिः सदानुसन्धेयः। संस्कृतखृष्टीयकवेः जान्-म्यूरस्य नये मुक्तेरुपायः केवलं शास्त्राद् नाम ईश्वरोपदेशादेव ज्ञेयः, उपायान्तरेण तज्ज्ञानमशक्यमिति। वस्तुतः पृथ्व्यां नास्ति कोऽपि मनुष्यो यो धीरोऽपि सन् स्वबुद्धिप्रभावमात्रेण मुक्तेरशेषविषयान् जानीयात्। मनुजाः स्वबुद्धिशक्त्या बहूनतीन्द्रियपदार्थान् दृष्टश्रुतपदार्थेभ्यो हेतुभ्यो जानन्ति। यथा सिकतासु मनुष्यपदलक्ष्माणि दृष्ट्वा मार्गेणानेनास्यां दिशि कश्चन जनोऽगच्छदित्यनुमातुं शक्यते, यथा वा दग्धं शून्यं भग्नप्राकारं कञ्चिद् ग्रामं वीक्ष्यानुमितिर्भवति यत्केनचनारिणा ग्रामोऽयं लुण्ठितः अग्न्युत्पातादिहेतोर्वा तस्माद् ग्रामात् प्रजाः सर्वाः स्वस्ववेश्मानि परित्यज्य पलायिता इति, तथैवानुमानेनेश्वरसम्बन्धि ज्ञानमपि भवितुमर्हति। तथाहि विशालस्यास्य विश्वस्य कश्चनावश्यमुत्पादकः स्यात्। तेनातिविचित्रकर्मकृता तत्सूचितसद्गुणैर्विशिष्टेन परमात्मना भाव्यमिति स हि सर्वात्मविलक्षण ईश्वरः। एवं परलोकमपि ज्ञातुं शक्नुमो वयम्। यदा संसारेऽस्मिन् सत्पुरुषा यावज्जीवं दुःखमुपभुञ्जानाः दुष्टाश्च सुखमनुभवन्तो दृश्यन्ते, तदा विचारिणां मनसि शङ्का समुत्पद्यते यदेतादृशोऽपि कश्चन लोकोऽवश्यं स्यात्, यत्र साधवो दुष्टा वा स्वस्वकर्मानुसारं फलं प्राप्नुयुरिति। इत्थं परलोकस्यानुमानेन ज्ञानं यद्यपि कथमपि सम्भवति, परन्तु नैव तन्निःसंशयं निरवशेषं वा। अतीन्द्रियपदार्थेषु बुद्धिमद्भिर्बहवः परस्परविरुद्धा मतवादाः समुत्थाप्यन्ते, तस्मात्प्रकृतज्ञानी जनः सन्तोषमलभमानः सत्यं तथा सम्पूर्णं ज्ञानमपेक्षते। अतो मुक्त्युपायज्ञानाय शास्त्रमवश्यमपेक्षितमित्यत्र नास्ति संशीतिरिति संस्कृतखृष्टीयकवीनां मतम्।

ईश्वरीयं ज्ञानं जगतः सर्वदेशीयजनैरेकस्मादेवादिमूलात्समवाप्तमित्यपि प्रतिपादितमत्र। यथा मनुष्यद्वये वदनवचनगमनादीनां साम्यावेक्षणात्तयोर्मिथो भ्रातृत्वमनुमीयते, तथैव नानादेशीयानां धर्माणां मतानाञ्च रीतिसाम्यदर्शनात् तेषामेकमूलत्वमवश्यमस्तीति वाच्यम्। यद्यपीश्वरस्य गुणविषये सर्वेषां जनानां मतसाम्यं नास्ति, तथापि प्रायः सर्वदेशीयाः कमप्यतिमानुषमेव प्रभुं स्वीकुर्वन्तीत्येकं प्रमाणम्। विश्वस्य मुख्यदेशानां प्राचीनशास्त्रेषु सृष्टिक्रमो मिथो न्यूनाधिकतया समान एवेति द्वितीयं प्रमाणम्। विविधदेशानां शास्त्रेषु मानवानां प्रथमावस्थावर्णनाविषयेऽपि सम्मतिरस्तीति तृतीयं प्रमाणम्। यथा भारतवर्षस्य शास्त्रेषु प्राप्यते तत्त्वमिदं यत्प्रथमे सत्ययुगे सर्वे जनाः पवित्राः सुखिनश्चासन्, पश्चात् त्रेताद्वापरकलियुगेषु क्रमेण ते दुष्टाः धर्ममार्गतः प्रभ्रष्टा दुःखिनश्च सञ्जाताः। एवमेव ये प्राचीना यवना महम्मदानुगेभ्योऽपि पूर्वमासन् तेषां पुराणकथास्वपि सौवर्णाख्यः कश्चनादियुग आसीत्, पश्चात् रजतपित्तललोहानां युगाः क्रमेण समागताः। एवमेव यहूद्यानां प्राचीनशास्त्रेष्वपि मानवानामाद्या दशा पूता सुखावहा चासीत्, परं यदादिमपुरुषेण तत्पत्न्या चेश्वराज्ञा उल्लङ्घिता, तदा तौ स्वकीयपूतावस्थातोऽपतताम्। तदारभ्य तयोः सन्ताना अपि दिग्भ्रष्टा भ्रमन्ति तत इतः। इत्थं संसारस्य प्रलयोऽपि पूर्वोक्ते त्रिविधे शास्त्रे प्रायः समभावेनैव वर्णित इत्यालक्ष्यते।

पशुयागस्य होमस्य वा विषयोऽपि प्रायः सर्वस्मिन्नपि शास्त्रे चर्चित आस्ते। यथा भारते वेदादिशास्त्रेषु यहूदीये तौरेताख्ये शास्त्रे च यज्ञविषयी विधिः समानतयैव वर्णितः। प्राचीनयवना अपि वलिदानेन धूपादिज्वलनेनैव स्वस्वदेवता अयजन्त। प्रायः सर्वस्मिन्नपि देशे कालपरिच्छेदार्थं सप्ताहः कल्पितोऽस्ति। तस्मादिदमनुमीयते यत् सर्वदेशीयशास्त्राणां तु मूलमेकमेवास्ते।

सर्वदेशीयशास्त्राणामेकमूलत्वादपि तेषां मध्ये बहुत्रैव मिथो विरोधो दृग्गोचरीभवति। वस्तुतो धर्ममार्गस्य यज्ज्ञानमादौ यथार्थं तथा च निर्मलमासीत्, तत्परम्पराप्राप्तं ज्ञानं ग्रन्थेषु लिपिबद्धं नासीत्। वेदस्य श्रुत्यपरं नाम तदेव तत्त्वं निर्दिशति। अत ईश्वरीयमादिशास्त्रं भिन्नभिन्नदेशीयजनैः भ्रमेण दुष्टतया च विभ्रश्य स्वस्वनूतनमतैर्मिश्रितम्। यथा बह्व्यो नद्यः कस्माच्चित् पर्वतनिर्झरात् निर्गत्यादौ स्वच्छप्रवाहास्तिष्ठन्ति, ततश्च विविधदेशेषु प्रसरन्तो मलसंसर्गान्मलिना जायन्ते, तथैव धर्ममार्गस्यापि ज्ञानमादौ निर्मलमेवासीत्, पुनश्च नानादेशेषु प्रसरणात्क्रमशो प्रचूरमलसंसर्गाद् अशुद्धमभवत्। परन्तु सत्यस्यैकरूपत्वात् भ्रमाणाञ्च नानारूपत्वान्मानवानां रुच्यनुसारेण विविधेषु देशेष्वयथार्थमतान्यजनिषत। कस्यापि शास्त्रस्येश्वरोक्तत्वं प्रतिपादयितुमवश्यं स्यात्प्रमाणं किञ्चिदपीति तु खार्ष्टकानां सुनिश्चिता मतिः। तथाहि खृष्टीयमते किमपि शास्त्रं यदुपज्ञं भवेत्, स आचार्योऽवश्यमेव साधारणमनुष्यैरसाध्यानि अद्भुतकर्माणि कर्तुं शक्नुयादिति। सा चाद्भुतशक्तिस्तु द्विधा विभक्ता – अद्भुतकार्यजनिका प्रथमा, अद्भुतज्ञानरूपा हि द्वितीया। तत्र प्रथमा शक्तिर्यथा रोगपीडितानां स्ववचनप्रभावमात्रेण सपदि स्वस्थीकरणं मृतजनानां वा सञ्जीवनमित्यादिकमद्भुतकर्म। द्वितीया पुनः भवति भविष्यद्वक्तृता, यथा शतवर्षेभ्यः पश्चाद् यद्वृत्तं संघटिष्यते तस्य सविस्तरं वर्णनमिति। केन खलु पुरुषार्थेन वास्तवं शर्माधिगन्तुं शक्यत इति शिष्येण पृष्टो गुरुराह यत् परमेश्वरसेवात एव सर्वथात्मसन्तोषः प्राप्यत इति। अतः सदाचारान्वितां श्रद्धां ये खल्वाश्रयन्ति, तेषां चित्तेषु सदानन्दो विराजते। समग्रस्यापि जगतो यो हि कर्ता पाता शास्ता सत्तम ईश्वरो वर्तते, स एव केवलं मानवान् सर्वथोपकर्तुं शक्नोति। ये पुनः दरिद्रा दुःखिनोऽविद्वांसो जनाः सन्ति, तेऽपि परमेश्वरे श्रद्धां कृत्वा शान्तिं प्राप्नुवन्तीत्यत्र नास्ति संशीतिः। तथाह्याह जान्-म्यूरः स्वीये *शर्म्मपद्धतिः* इत्याख्ये काव्ये –

“दृढा परेश्वरे श्रद्धा शिष्यैकैवात्मतृप्तिदा।
परमेश्वरसेवा हि परमार्थस्वरूपिका॥
असाध्यो मिलितैः सर्वैः पुरुषार्थान्तरैरपि।
संसिद्ध्यत्यात्मसंतोषः परमार्थस्य सेवनात्॥”[६] इति।

खृष्टीयनये स्वर्गः कीदृक् लोकः मुक्तिर्वा कीदृशीति प्रतिपादयितुमनाः कविराह यद् ब्रह्मणि लयो नैव मुक्तिरिति खार्ष्टकानां मतम्। मर्त्यैः स्वीयपुण्यकर्मभिः स्वर्गो नार्जितः, अपि तु खृष्टस्यानन्तेन

---

[६] *शर्म्मपद्धतिः, पृ. ११.*

पुण्येनोपार्जितः हि सः। अतस्तत्स्वर्लोकं प्रविश्य जनाः कदापि पुनः न पतेयुः, तत्रैवेष्टे स्वर्गलोके सदा तिष्ठेयुरित्यत्र भारतीयशास्त्रेभ्यो वैपरीत्यं तु सुस्पष्टमेव। वस्तुतस्तु पापान्धीभूतमानसैः संसारकारास्थैर्मर्त्यैः पारलौकिकं तत्सुखं बोद्धुं न शक्यते। तस्मिन् शुभानन्दान्विते सत्तमे लोके कदाचन दुःखसंघः शोको वा प्रवेष्टुं न शक्नुयात्। अतः परेश्वरस्यार्चनात् तन्माहात्म्येन भययुतात् तत्प्रेम्णश्च स्वर्गीयानन्दः प्राप्यते। किं बहुना, यैस्तु मुक्तिर्न गम्यते, तेषां कृते भयङ्करो दण्डोऽपेक्षते। अतस्तस्मिन्नुग्रपीडायुक्ते भयानकेऽक्षये स्थाने यथा न कोऽपि पतेत्तदर्थं प्रभोः सकाशात् क्षमा प्रार्थनीया सदैव। वस्तुतः खृष्टे यः कश्चिदपि विश्वस्यात्, स स्वर्गीयशर्मोपेतं पापमोचनं लब्ध्वा स्वर्गभाग्भवेदित्यस्ति खार्ष्टकानां नयः। तदुच्यते कविना तदीये *पापमोचनीययथार्थोपायप्रदर्शनम्* इत्याख्ये काव्ये –

"फलं हि खृष्टसिद्धस्य त्राणस्याखिलवंशजैः।
मनुष्यैः शक्यते लब्धुं पापघ्नं नित्यशर्मदं॥"[७] इति।

तथा हि जान्-म्यूरवर्येण धर्मतत्त्वानां यन्मीमांसा प्रस्तुता स्वकाव्येषु तेषां समीक्षणात्स्पष्टमेतत्प्रतीयते यद् भारतीयशास्त्रोक्तधर्मतत्त्वमीमांसातः सावश्यं वैभिन्न्यं बिभर्तीति तद्विषयिणी समीक्षाप्यपेक्षत एव।

**५. प्राग्भावानां कवीनां शास्त्राणां च प्रभावः**

भारतीयानां कवीनामन्यतममेकं वैशिष्ट्यं तावद् यत्तेषां काव्येषु प्राग्भावान् कवीन् प्रति अकुण्ठश्रद्धामिश्रिता सरस्वती प्रायः प्रतिच्छत्रं दृग्गोचरीभवतीति। प्राचीनमतं खण्डनसमयेऽपि ते कवयः शास्त्रकारा वा पूर्वपक्षिणां पण्डितानां स्तुतिमेवादौ विदधति। अत्र महिमभट्टकृता ध्वनिवादप्रवक्तुरानन्दवर्धनस्य स्तुतिरेव प्रमाणम्। अन्यत्रापि भवभूतिना 'उत्तररामचरित'स्य प्रारम्भ एव गुरुप्रसादमिच्छता पूर्वेभ्यो वाल्मीकिभासकालिदासादिभ्यो व्याह्रियते च प्रणतिः। एवमेवास्मिन् जान्म्यूरप्रणीते संस्कृतखृष्टीयसाहित्येऽपि नैकेषां भारतीयशास्त्राणां तथा खृष्टीयधर्मग्रन्थानां वचनान्यत्र कविः क्वचित्स्वमतं प्रतिष्ठापयितुं तथा दृढीकर्तुं क्वचिच्च दूषयितुं प्रयोजयामास। विशेषतया महाकविना कविकुलकोकिलेन कालिदासेन नितरां प्रभावितो बभूव सः। किं बहुना, संस्कृतसाहित्यस्य कालिदासेन इव संस्कृतखृष्टीयसाहित्यस्य कालिदासेन श्री-उइलियम-हज-मिल-वर्येणापि स म्यूरो नितरामेवासीत्प्रभावित इत्यत्र नास्ति सन्देहावसरः। तथा हि *श्रीयेषूखृष्टमाहात्म्यस्य* प्रथमाध्याये चतुर्भिः श्लोकैः कविना श्रीखृष्टस्याद्भुतकथाया यद्वर्णनमकारि, तत्र तेन महाकवेः कालिदासस्य रचनाप्रणाल्येव समाश्रिता। कालिदासेन यथा 'रघुवंश'स्य प्रथमे सर्गे रघूणामन्वयः प्रतिपादितस्तथैवेहापि म्यूरपादैः श्रीयेष्वश्चरितमुपवर्णितम्। अहो सादृश्यं धत्ते तयोर्वाचनभङ्गीभणितिः। तथाह्यधस्तात् कविवर्ययोः

[७] *पापमोचनीययथार्थोपायप्रदर्शनम्, पृ. ११.*

कालिदास-जान्म्यूरयोर्वैदग्ध्यमिश्रिताया वाचः साम्यमतुलनीयं समेषां सहृदयहृदयानां हृदयाह्लादनाय समुपस्थाप्यते –

| *रघुवंशम्* | *श्रीयेषूखृष्टमाहात्म्यम्* |
|---|---|
| यथाविधिहुताग्नीनां यथाकामार्चितार्थिनाम्।<br>यथापराधदण्डानां यथाकालप्रबोधिनाम्॥१.६॥ | अथेश्वरात्मजस्याहमनादेर्जगदीशितुः।<br>नृमध्ये त्ववतीर्णस्य संगुप्तैश्वर्यलक्ष्मणः॥१.११॥ |
| त्यागाय संभृतार्थानां सत्याय मितभाषिणाम्।<br>यशस्ते विजिगीषूणां प्रजायै गृहमेधिनाम्॥१.७॥ | कुमारीगर्भजातस्य धृतबालकवर्ष्मणः।<br>अस्पृष्टस्याघलेशेन भुक्तपापफलस्य तु॥१.१२॥ |
| शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम्।<br>वार्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम्॥१.८॥ | जगद्गुरोर्जगद्बन्धोर्जगन्मोक्तुर्जगत्प्रभोः।<br>जगत्कल्याणमूलस्य सर्ववंशोपकारिणः॥१.१३॥ |
| रघूणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि सन्।<br>तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः॥१.९॥ | श्रीखृष्टस्याद्भुतां वक्ष्ये सत्कथां हृष्टमानसः।<br>तस्योदारात्मनः प्रेम्णा परमेण प्रवर्तितः॥१.१४॥ |

श्रीखृष्टस्यावताराद्वर्षशतत्रयात्प्रागेव भव्यवक्तृभिरारचिता सम्पूर्णा ग्रन्थसंहिता यहूदिन्या तथा यावन्या वाण्याप्यनूदिता। न केवलं यवना रोमिणो वा तद्गुणैर्महोन्नतिं प्राप्ताः, अपि तु भारतेऽपि तस्य कीर्तिगाथा क्रमेण विस्तृता। तदुच्यते कविना *श्रीयेषूखृष्टमाहात्म्ये* –

"देशेषु परितःस्थेषु क्रमशश्च प्रणादितः।
तेषां कीर्त्तेः प्रतिध्वानः शुश्रुवेऽत्रापि भारते॥"[८] इति।

तथा हि 'महाभारत'स्य श्लोकमुद्धृत्य कविना तदीयवचनस्य याथार्थ्यं प्रतिपादितम्। तेन तु केवलमेकस्यैव श्लोकचरणस्योद्धृतिः *श्रीयेषूखृष्टमाहात्म्ये* सन्निवेशितः –

'तथा च महाभारते॥ सर्वज्ञा यवना राजन् शूराश्चैव विशेषत इति।'[९] इति।

एवं प्रतीच्यां यथा भविष्यतस्त्रातुर्विस्तृता कथानकैः सद्भिर्जगृहे स्वकीयां दुर्दशामनुभूय, तथैव प्राच्येऽपि भारते खृष्टमतानि नैकेऽनुमेनुर्जना इति कवेर्मतम्। तथा हि मतमिदं प्रतिष्ठापयितुमना जान्म्यूरः'श्रीमद्भगवद्गीता'तः प्रभोः कृष्णस्य मुखनिःसृतां वाणीमपि तदीये *श्रीयेषूखृष्टमाहात्म्ये* प्रथमाध्यायस्यान्ते समुद्दधार –

"यथा प्रतीच्यलोकेषु तथा प्राच्येऽत्र भारते।
क्षितावैशावतारस्य मतमाशिश्रिये सदा॥

न केवलं भारतीयशास्त्रेभ्यस्तेन स्वमतप्रतिष्ठापनाय वचांस्युद्धृतान्यपि तु संस्कृतखृष्टीयसाहित्ये सुतरामेव प्रथितयशस्काया मिलपादैः प्रणीतायाः 'खृष्टसंगीता'याः बहवः श्लोका अत्रामूलचूडमुद्धृताः।

---

[८] *श्रीयेषूखृष्टमाहात्म्यम्, पृ. १७.*

[९] *तत्रैव, पृ. १७.*

क्वचिद्वा केषाञ्चित् श्लोकानां भावमादाय स्वभाषया प्रस्तुतं स्वकीयं मतम्। प्रायः सर्वस्मिन्नेव तदीये काव्ये संस्कृतखृष्टीयसाहित्यस्य गुणगरिम्णा मुख्यतमायाः 'खृष्टसंगीता'याः न्यूनाधिकं प्रभावस्त्ववश्यमस्तीति स्वयं जान्-वर्यः स्वीकरोति। अस्य नितान्तमेव रोमाञ्चकरं करुणातिकरुणं च निदर्शनमुपलभ्यते प्रभोः खृष्टस्य शूलबिद्धीकरणवर्णनावसरे। तथाह्यधस्तात्प्रदर्श्यते तयोः कविवर्ययोः रचनाशैलीसाम्यम्–

| *खृष्टसंगीता* | *श्रीयेषूखृष्टमाहात्म्यम्* |
|---|---|
| एष शूल ऋजुभ्यां तु दारुभ्यां परिनिर्म्मितः।<br>विज्ञेयः स्तम्भवत्त्वेकं तयोरन्यच्च दिङ्मुखम्॥४.१२.६॥ | शूलस्तै रोमिभिर्द्वाभ्यां दारुभ्यां निरमीयत।<br>तदेकं लम्बमन्यच्च तिर्यक् काष्ठं तस्मिन्ननह्यत॥५.९४॥ |
| सप्तहस्तमितं पूर्व्वं स्तम्भवत् स्थापितं भुवि।<br>तच्चूडान्तिकलग्नं चु मध्यमन्यस्य दारुणः॥४.१२.७॥ | यंत्रस्याधस्तने भागे दृढमारोपिते भुवि।<br>सार्द्धव्यामोन्नतं तस्थौ तिर्यक् काष्ठं महीतलात्॥५.९५॥ |
| इदं व्याममितं त्वस्ति दिङ्मुखं किल संस्थितम्।<br>नद्धं तदग्रयोर्हस्तौ तत्रोत्तोलितदोषिणः॥४.१२.८॥ | तस्मिंस्तिरश्चिकाष्ठे तु विततौ दोषिणः करौ।<br>लौहैः कीलैरवध्येतां पादौ लम्बे च दारुणि॥५.९६॥ |
| तस्य दण्डायमानस्य देहं तु स्तम्भदारुणि।<br>लग्नं नद्धौ पदौ चास्मिंस्तलाद्धस्तत्रयान्तरे॥४.१२.९॥ | विद्धाङ्घ्रिपाणयस्तद्वल्लम्बमानाश्च दोषिणः।<br>सुतीव्रां वेदनां भुक्त्वा शनैः पंचत्वमाप्नुवन्॥५.९७॥ |
| रज्जुभिस्तु तमुत्तुल्य पूर्व्वं कीलैस्ततः पदौ।<br>स्तम्भदारुण्यविध्यंस्ते तथा हस्तौ च दिङ्मुखे॥४.१२.१०॥ | श्रीयेषूं तद्विधे शूले विव्यधुर्दण्डपाशिकाः।<br>द्वयोस्तस्करयोर्मध्ये दोषवन्तमिवानघम्॥५.९८॥ |
| चतुरङ्गेषु विद्धं तु तथोर्व्युत्तोलितं नरम्।<br>नान्यत्कृत्वात्यजन्नुग्रमृतिप्राप्त्यै शनैः शनैः॥४.१२.११॥ | |

एतद्व्यतिरिच्य, कविना इयेट्स-पादस्य 'Sanskrit New Testament'इति अनूदितग्रन्थस्यापि केचन श्लोका अत्रोद्धृताः, तत्रत्यान् श्लोकान् कांश्चिद्वानुसृत्यात्र प्रस्तुताः। तथाहि तयोराभारं व्यक्तीकुर्वता म्यूरपादैः *श्रीयेषूखृष्टमाहात्म्यम्* इति ग्रन्थस्य प्रास्ताविके स्पष्टमवादि यत् –

"Free use has been made of the renderings of terms in Dr. Mill's Christa Sangītā and in Dr. Yate's Sanskrit New Testament, and some entire Slokas of the former have been employed."[१०] इति।

श्रीकृष्ण इव श्रीयेषूरपि जगति धर्मप्रतिष्ठापनायैवावतीर्णोऽभूत्। तस्मादिह प्राधान्येन 'श्रीमद्भगवद्गीता'याः प्रभावोऽस्माभिरालक्ष्यते। तद्रचनानुगा रचनापीह न दुर्लभा। तथाहि अपराधानां समाप्तये यज्ञानां प्रारब्धये पापस्य शोधनाय जगति च सततं धर्मस्यैव प्रवर्तनाय श्रीखृष्टस्याविर्भावोऽभवेदिति कवेर्मतम्। अतः *श्रीयेषूखृष्टमाहात्म्ये महामोक्तृप्रतीक्षाख्ये* प्रथमाध्याय एव दृश्यते, भगवतः श्रीयेष्वो धराधाम्न्याविर्भावोऽभवत्कथमिति जिज्ञासायामुच्यते –

"रोधनायापराधानां यज्ञानां च समाप्तये।

[१०] *श्रीयेषूखृष्टमाहात्म्यम्, Preface, p. iii.*

पापस्य शोधनार्थाय नित्यधर्मप्रवृत्तये ॥"[११] इति ।

बहुविधानां भारतीयशास्त्राणामध्ययनं तु संस्कृतखृष्टीयकविवरैः कृतमित्यत्र नास्ति सन्देहः। तथा हि तेषां शास्त्राणामुद्धृतिर्बहुत्रैव विहितेति तच्छास्त्राणां प्रभावस्तल्लेखन्यां नितरामेवासीदिति तु न्यूनमेव प्रमाणीभवति। यथा वेदादीनां शास्त्राणां ब्रह्ममुखोत्पत्तिं वर्णयता कविना म्यूरेण *भागवतपुराणस्य* तृतीयस्कन्धस्य द्वादशाध्यायतः श्लोकाः समुद्धृताः। तथा हि *मतपरीक्षायाः* प्रथमे खण्डे वयं तद्वर्णनं द्रष्टुं शक्नुमः –

"कदाचिद् ध्यायतः स्रष्टुर्वेदा आसंश्चतुर्मुखात् ।
कथं स्रक्ष्याम्यहं लोकान् समवेतान् यथा पुरा ॥
ऋग्यजुःसामाथर्वाख्यान् वेदान् पूर्वादिभिर्मुखैः ।
शस्त्रमिज्यां स्तुतिस्तोमं प्रायश्चित्तं व्यधात् क्रमात् ॥
इतिहासपुराणानि पञ्चमं वेदमीश्वरः ।
सर्वेभ्य एव वक्त्रेभ्यः ससृजे सर्वदर्शनम् ॥"[१२] इति ।

श्रुतेः प्रामाण्यं प्रमाणयता जैमिनिना मीमांसाशास्त्रे यदुक्तं, तदपि सम्यक्तया स्वकाव्ये तेन म्यूरपादेन प्रतिपादितमित्येव कवेर्विशेषता। तथाह्याह म्यूरः –

"औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य
ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे
तत् प्रमाणं बादरायणस्यानपेक्षत्वात् ॥
वेदांश्चैके सन्निकर्षं पुरुषाख्याः ॥ अनित्यदर्शनाच्च ॥
उक्तन्तु शब्दपूर्वत्वम् ॥ व्याख्याप्रवचनात् ॥
परन्तु श्रुतिसामान्यम् ॥"[१३] इति ।

एवमेव न्यायसूत्रवृत्तिकारस्य विश्वनाथस्यापि मतं स्थान एव समुपस्थापितम्। तथा च प्रसङ्गत्या ऋग्वेदस्य ऋचां, रामायणस्य महाभारतस्य मनुसंहितायाः वा श्लोकानां, विष्णुपुराणस्य मत्स्यपुराणस्य भागवतपुराणस्य ब्रह्मवैवर्त्तपुराणस्य लिङ्गपुराणस्य वा श्लोकानां, भगवद्गीताया विष्णुधर्मतन्त्रस्य वा मतानां, रघुवंशादिकाव्येभ्यः श्लोकानां वा समुद्धृतिस्तेन विहितेति म्यूरकाव्येषु भारतीयशास्त्राणां भूयान् प्रभावोऽस्तीत्यत्र नास्ति कश्चन सन्देहावसरः।

---

[११] *तत्रैव, पृ. १६.*

[१२] *मतपरीक्षा (भारतीयशास्त्रविचारात्मकः प्रथमः खण्डः), पृ. ३-४.*

[१३] *तत्रैव, पृ. ५.*

**६. समीक्षकेक्षया विमृष्टिः**

संस्कृतगिरा खृष्टीयतत्त्वाश्रितविषयाण्यवलम्ब्य प्राच्यपाश्चात्यपण्डितैः प्रणीतानां काव्यानां मिश्रप्रतिक्रिया भारतवर्षे तदानीन्तने काले साधारणजनेष्वापतिता। दरिद्रा भारतीयाः केचनावश्यं खृष्टमतं स्वीचक्रुः सम्पदादिप्राप्त्याशयेति तु सत्यम्। परन्तु, न केवलं दीनजनाः, शिक्षिताः संस्कृतशास्त्रं प्रति विश्वसन्तोऽपि भारतीयाः खृष्टधर्मं परिगृह्य भारतीयशास्त्राणि दूषयितुं बद्धपरिकरा बभूवुः। अत्र प्रख्यातबङ्गीयपण्डितस्य श्रीकृष्णमोहनव्यानार्जीवर्यस्य नाम यथा श्रूयते तथैव वाराणसीस्थसंस्कृतविदुषः श्रीनीलकण्ठगोरेवर्यस्यापि धर्मान्तरवृत्तं विशेषेण कर्णपथं समायाति।

संस्कृतखृष्टीयसाहित्यसमीक्षणं कुर्वता प्रख्यातप्राच्यतत्त्वविशारदेन श्रीराघवन्-वर्येण काव्यानामेतेषां नास्ति किमपि महत्त्वं तथा भारतीयसाहित्ये समाजे वा तेषामन्तर्भुक्तिरेव कारणान्तरं सूचयतीति मतं प्रकाशितम्। भारतीयसंस्कृत्या साकं किमपि योगसूत्रं काव्यानामेषां न सञ्जातमिति कृत्वा काव्यानां रचनावैफल्यं तु स्फुटमेव। तथाह्याह राघवन्-पादः –

"Another strange product of the early British age, at the beginning of the Christian missionary movements in India, is the attempt to put into the classical language of Hinduism the text of the Bible or its parts. Over a score of such Sanskrit versions of Biblical selections are known; one common feature of these is the very crude and unintelligible jargon in which most are written, which shows the significant failure of the Christian missions to establish any link with the learned of the land."[१४] इति।

एवमेव काव्यानां संस्कृतसाहित्यविस्ताराय कश्चनापि प्रभावो नास्तीति ब्रूते *Modern Indian Literature: An Anthology* इत्याख्ये प्रबन्धे भारतस्यान्यतमः प्रख्यातः शास्त्रतत्त्ववेत्ता विद्वान् श्रीकृष्णमूर्तिचरणः –

"The Serampore missionaries, as far back as the first half of the nineteenth century, had issued several editions of the Sanskrit translation of the Holy Bible. But these did not have any noticeable impact on the growth of new literature in Sanskrit."[१५] इति।

---

[१४] *Modern Sanskrit Writings. Madras, pp. 5-6.*

[१५] *"Sanskrit" in Modern Indian Literature: An Anthology, vol. 1: Surveys and Poems, p. 356.*

परन्तु चिन्ताहरणचक्रवर्तिना तदीये बङ्गभाषाबद्धे *आधुनिकसंस्कृतसाहित्य*-इत्याख्यस्य ग्रन्थस्य *भाषासाहित्यसंस्कृति* इति प्रबन्धे निगदितं यद् ऊनविंशशतकस्य प्रथमभागे यदा भारतवर्षे विशेषतया कलिकातायां खृष्टीयसम्प्रदायाः *बाइबेल* इति धर्मीयग्रन्थस्यानुवादसंस्करणप्रकाशनाय न्यस्तप्रतीतयो बभूवुस्तदैव येषूखृष्टस्य तच्छिष्याणां वा जीवनवृत्तान्यवलम्ब्य संस्कृतपुराणानां रचनारीत्या प्राच्यैः पाश्चात्यैश्च मौलिकसंस्कृतकाव्यानि प्रणीतानि। तत्र प्रतीच्यभवस्य म्यूरसाहेबस्यावदानं तु वाचामगोचरमिति चिन्ताहरणमतिः। अपि च, प्राच्यपण्डितेन श्रीताराचरणचक्रवर्तिना प्रणीता *ख्रीष्टोपनिषत्* इत्याख्या काचन उपनिषदपि प्रकाशिता विंशशतके इति तथ्यं तेनैवोपर्युक्ते प्रबन्धे प्रदत्तम्।

भारतवर्षे संस्कृतखृष्टीयसाहित्यस्य प्रथमसमीक्षकेण श्रीमता सत्यव्रतशास्त्रिणापि काव्यानामेतेषां महत्त्वं स्वीकृत्योक्तं यत्–

"…there has grown in Sanskrit a considerable corpus of Christian literature both in original and in translation. The literature, though composed primarily to reach the Sanskrit-knowing intelligentsia to motivate it to Christianity, has a lot to commend itself even as work of art and consequently deserves wide notice not only in India but also beyond its shores."[१६] इति।

यद्वा भवतु नाम समीक्षकाणां दृष्टिः, मन्मते तु प्राच्यैः प्रतीच्यैश्च पण्डितैः संस्कृतेन प्रणीतस्य खृष्टीयवाङ्मयस्याध्ययनं तु नितरामेवापेक्षितम्। काव्यानामुत्कर्षतास्ति न वेति विचारार्थमपि तेषां समीक्षात्यावश्यिकीत्यत्र मन्ये नास्ति कस्यचिदपि विमतिरित्यलमति पल्लवितेनेति शिवम्।

## परिशीलिता ग्रन्थानुक्रमणिका


- Amaladass, Anand, and Richard Fox Young. *The Indian Christiad: A Concise Anthology of Didactic and Devotional Literature in Early Church Sanskrit*. Anand, Gujarat Sahitya Prakash, 1995.
- Dhavamony, Mariasusai. "The Lord's Prayer in the Sanskrit Bible." *Gregorianum*, vol. 68, 1987, pp. 639-670.
- Kishnamoorthy, K. "Sanskrit." *Modern Indian Literature: An Anthology*, vol. 1: *Surveys and Poems*, New Delhi, Sahitya Akademi, 1992.
- Mill, William Hodge. *श्रीखृष्टसंगीता* (*येषूत्पत्तिपर्व, पुत्राभिषेकपर्व, सत्पालकचरित्रपर्व, मोक्तृमाहात्म्यपर्व*), Bishop's College, Calcutta, 1831-1838.


[१६] *Shastri, Satya Vrat. Modern Christian Literature in Sanskrit, pp. 5.323.*

- Muir, John. *पापमोचनीययथार्थोपायप्रदर्शनम्– The Inefficacy of the Ganges to Wash Away Sin, with a Statement of the True atonement, etc*. Calcutta, Baptist Mission Press, 1840.
- *मतपरीक्षा –A Sketch of the Argument for Christianity and against Hinduism*. Calcutta, Bishop's College Press, 1839 (1st Ed.).
- *शर्म्मपद्धतिः– The Way of True Happiness: A Sketch of the True Theory of Human Life*. Richard Watts, London, 1841.
- *श्रीपौलचरित्रम्–A Short Life of the Apostle Paul, with a Summary of Christian Doctrine, as Unfolded in His Epistles*. Calcutta, Encyclopedia Press, 1848.
- *श्रीयेषूखृष्टमाहात्म्यम्– The Glory of Jesus Christ. A Brief Account of Our Lord's Life and Doctrines*. Calcutta, Ostell and Lepage, 1848.
- Raghavan, V. *Modern Sanskrit Writings*. Madras: The Adyar Library and Research Centre, 1956.
- Shastri, Satya Vrat. "Modern Christian Literature in Sanskrit." *Devavāṇī-suvāsaḥ* (Rama Kant Felicitation Volume). New Delhi, Devavani Parishad, 1991, pp. 5.313 – 5.325.
- Young, Richard Fox. *Resistant Hinduism: Sanskrit Sources on Anti-Christian Apologetics in Early Nineteenth-Century India*. Vienna, Indological Institute, University of Vienna, 1981.


~~~~~~~~~~~
~~~~~~~~~~~

वर्षम्-०४ अङ्कः-०४ शोधज्योतिः
जनवरी-दिसम्बर, २०२२ ISSN-2350-0700

# आधुनिक-काव्यलक्षणविमर्शः[१]

डॉ. जिगरः म. भट्टः[२]

किं नाम काव्यम्? काव्यस्य निरपवादं लक्षणं किमित्यस्ति प्राचां नव्यानामाचार्याणां स्वानुभूतिविषयः। येन यदन्वभूयत तदेव काव्यलक्षणम् उक्तम्। यस्मै पूर्वोक्तं लक्षणं नारुच्यत, तेन तल्लक्षणं खण्डितम्। किन्तु क्रमेण यैः आचार्यैः काव्यलक्षणानि प्रोक्तानि तैः मार्गः सुगमः जातः। अत्र संक्षेपेण पूर्वाचार्याणां काव्यलक्षणानि प्रतिपाद्य आधुनिककाव्यशास्त्रे त्रिरग्निरिव शोभमानानां रेवाप्रसादद्विवेदि-राजेन्द्रमिश्र-राधावल्लभत्रिपाठिनाम् आचार्याणां काव्यलक्षणानि प्रस्तोष्यन्ते।

**''शब्दार्थौ सहितौ काव्यम्''**[३] इति भामहोक्तं काव्यलक्षणम्, **''काव्यशब्दोऽयं गुणालङ्कारसंस्कृतयोः शब्दार्थयोर्वर्तते''**[४] इति वामनेन काव्यालङ्कारसूत्रवृत्तौ प्रत्यपादि, **''ननु शब्दार्थौ काव्यम्''**[५] इति रुद्रटेन भणितम्, **''काव्यस्यात्मा ध्वनिः''**[६] इति आनन्दवर्धनेन सानन्दम् उद्घोषितम्, **''शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि। बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणी''**[७] इति कुन्तकेन वक्रोक्तिसहितं प्रतिपादितम्, **''निर्दोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम्। रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिं च विन्दति''**[८] इति भोजदेवभणितिः, **''तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि''**[९] इति मम्मटमार्गः, **''अदोषौ सगुणौ सालङ्कारौ च शब्दार्थौ काव्यम्''**[१०] इति हेमचन्द्राचार्याभिहितम्, **''वाक्यं रसात्मकं काव्यम्''**[११] इति विश्वनाथनाथीकृतं लक्षणम्, **''रमणीयार्थप्रतिपादकः शब्दः काव्यम्''**[१२] इति जगन्नाथस्य

---

*[१] काव्यालङ्कारकारिका-अभिराजयशोभूषण-अभिनवकाव्यालङ्कारसूत्रदृष्ट्या*

*[२] सहायकाचार्यः, श्रीसोमनाथसंस्कृतयुनिवर्सिटी, वेरावलम्*

*[३] भामहः, काव्यालङ्कारः १/१६, डॉ.आर.पी.महेता, सरस्वती पुस्तक भण्डार, अहमदाबाद, २००८-०९, पृ. २६*

*[४] वामनः, काव्यालङ्कारसूत्रवृत्तिः १/१/१, डॉ.आर.पी.महेता, सरस्वती पुस्तक भण्डार, अहमदाबाद, २००७-०८, पृ.३*

*[५] रुद्रटः, काव्यालङ्कारः, २/१, पं. दुर्गाप्रसाद, निर्णयसागरप्रेस, बोम्बे, १९०९, पृ. ०८*

*[६] आनन्दवर्धनः, ध्वन्यालोकः १/१, डॉ.जी.एस.शाह, पार्श्व पब्लिकेशन, अहमदाबाद, २००९, पृ. ७२*

*[७] कुन्तकः, वक्रोक्तिजीवितम् १/७, श्रीराधेश्याम मिश्र, चौखम्बा संस्कृत संस्थान, वाराणसी, २०१६, पृ. १७*

*[८] भोजदेवः, सरस्वतीकण्ठाभरणम्, १/२, पं. केदारनाथ शर्मा, निर्णयसागरप्रेस, बोम्बे, १९३४, पृ. ०२*

*[९] मम्मटः, काव्यप्रकाशः १/४, डॉ. सत्यव्रतसिंह, चौखम्बा विद्याभवन, वाराणसी, २००९, पृ. १०*

*[१०] हेमचन्द्रः, काव्यानुशासनम्, पं. शिवदत्त, निर्णयसागरप्रेस, बोम्बे, १९०१, पृ. १६*

*[११] विश्वनाथः, साहित्यदर्पणः १/३, डॉ. सत्यव्रतसिंह, चौखम्बा विद्याभवन, वाराणसी, २०१०, पृ. २३*

*[१२] जगन्नाथः, रसगङ्गाधरः, प्रथमाननम्, पण्डित मदनमोहन झा, चौखम्बा विद्याभवन, वाराणसी, २०१३, पृ. १०*

जगत्प्रसिद्धं काव्यलक्षणम्, इत्थं प्राचामाचार्याणां काव्यलक्षणानि वर्तन्ते। क्रमेण भामहादारभ्य जगन्नाथं यावत् काव्यलक्षणं परिष्कारं प्रापत् दृश्यते।

पण्डितराजजगन्नाथानन्तरं काव्यशास्त्रीयविवेचनपरम्परा प्रायः स्थिरा अभवत्। अस्यामवस्थायाम् आचार्यः ब्रह्मानन्दः शर्मा स्वकीये काव्यसत्यालोके नवीनविचारान् प्रास्तौत्। तस्य काव्यलक्षणम् इत्थम् –

**''शब्दार्थवर्तिसत्यस्य सुन्दरं प्रतिपादनम्।**

**काव्यस्य लक्षणं ज्ञेयं सत्यस्यात्र विशेषता॥''**[१३]

एतस्य मतानुसारं शब्दार्थयोः मध्ये वर्तमानस्य सत्यस्य सुन्दरं प्रतिपादनमेव काव्यम्। शब्दार्थभ्यां सत्यस्य सुन्दरं प्रतिपादनमिति विशिष्टं मतम्। आधुनिककाव्यशास्त्रपरम्परायाम् अस्याचार्यस्य योगदानं नाविन्यपूर्णमस्ति। एतस्मात् परं स्वर्गतः महामहोपाध्यायः रेवाप्रसादः द्विवेदी काव्यालङ्कारकारिकायाम्, पद्मश्रीः प्रो. राजेन्द्रः मिश्रः अभिराजः अभिराजयशोभूषणे, प्रो. राधावल्लभः त्रिपाठी अभिनवकाव्यालङ्कारसूत्रे स्वप्रतिभां प्रादर्श्य काव्यशास्त्रे महत्त्वपूर्णं योगदानं प्रायच्छन्। अतः इदानीम् एतेषाम् आचार्याणां काव्यलक्षणानि क्रमेण निरूप्यन्ते।

➢ **काव्यालङ्कारकारिकानुसारं काव्यलक्षणम्**

महामहोपाध्यायः सनातनकविः रेवाप्रसादद्विवेदी अद्य अस्मासु नास्ति किन्तु तस्य शास्त्रोपष्कृता मतिः काव्यालङ्कारकारिकारूपेण अस्मासु वर्तते। आचार्यः रेवाप्रसादः स्वरचितायाः काव्यालङ्कारकारिकायाः आरम्भे एव स्वाभिमतं काव्यलक्षणं प्रस्तौति –

**''आनन्दकोषस्योल्लासे लोकोत्तरविभावना।**

**अलङ्कृतार्थसंवित्तिः कविता सर्वमङ्गला॥''**[१४]

अलङ्कृतार्थसंवित्तिः कविता इति पदद्वयं प्रधानम्। अलङ्कृतश्चासौ अर्थः अलङ्कृतार्थः, तस्य संवित्तिः ज्ञानम्। अलङ्कृतस्य अर्थस्य ज्ञानं कविता। वृत्तौ आचार्यः सर्वाणि पदानि व्याचिख्यासुः कथयति तदेवावलोक्य लक्षणस्पष्टता जायते। लक्षणेऽस्मिन् कविता विशेष्यपदम्, तस्य त्रीणि विशेषणपदानि– लोकोत्तरविभावना अलङ्कृतार्थसंवित्तिः सर्वमङ्गला चेति। उल्लासे इति पदं वैषयिकम् अधिकरणं सूचयति। आनन्दकोषस्य उल्लासे लोकोत्तरविभावना अलङ्कृतार्थसंवित्तिः कविता उच्यते। सा च कविता सर्वमङ्गला। आनन्दकोषस्य इति पदं व्याकुर्वन् आचार्यः वृत्तौ भणति ''आनन्दकोषो नाम वेदान्तादिप्रसिद्धा जीवात्मनः आनन्दकला''।[१५] वेदान्तप्रसिद्धाः पञ्च कोषाः सन्ति –

---

*[१३] आचार्य-ब्रह्मानन्द-शर्मा, काव्यसत्यालोकः, ५/६४, प्रविण पण्ड्या, राजस्थानसंस्कृत अकादमी, जयपुर, २०१३, पृ. ७५*

*[१४] पं. रेवाप्रसादः द्विवेदी, काव्यालङ्कारकारिका – ०१, चौखम्बा सुरभारती प्रकाशनम्, वाराणसी, १९७७, पृ. ५*

*[१५] तत्रैव – ०१ वृत्तौ, पृ. ६*

१. अन्नमयकोषः २. प्राणमयकोषः ३.मनोमयकोषः
४. विज्ञानमयकोषः ५. आनन्दमयकोषः
एतेषु आनन्दमयकोषस्य उल्लासे = प्रतिबोधे लोकोत्तरविभावना कविता।

लोकोत्तरविभावनेति पदं व्याकुर्वन् वृत्तौ आचार्यो ब्रूते- ''लोकोत्तरम् अलोकसामान्यम् अनुत्तरपदप्रतीतं वा विभावनम् अपूर्वसृष्टिप्रादुर्भावे अनामृष्टकारणफलं प्रागल्भ्यम्। तदस्त्यस्याः सा (विभावना)। सा चेयं कविः सहृदयश्चेत्युभयसाधारणा''।[१६] नाम कविः सहृदयश्च अपूर्वसृष्टेः कल्पनया अलौकिकं प्रागल्भ्यं यस्यामनुभवतः सा लोकोत्तरविभावना कविता। अलोकसामान्यमिति पदं ध्वन्यालोकप्रेरितम् –

**''सरस्वती स्वादु तदर्थवस्तु निःष्यन्दमाना महतां कवीनाम्।**
**अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम्॥''**[१७]

सर्वमङ्गला कवितेत्यनेन आचार्यः सर्वेषां मङ्गलं कवितया क्रियते इति विवक्षुर्विलोक्यते। सर्वपदेन सः वैदिकानाम् अवैदिकानां च ग्रहणं करोति।[१८] काव्यम् आस्तिकेभ्यः नास्तिकेभ्यः मङ्गलमेव भवति यतोहि आस्तिकाः नास्तिकाः च रसिकाः सामान्यतया।[१९] तस्मात् सर्वेषां मङ्गलमस्याम् अस्तीति सर्वमङ्गला कविता।

सङ्ग्रहोऽयम् आनन्दकोषस्य प्रतिबोधे लोकोत्तरविभावना अलौकिकनिर्माणप्रगल्भता वर्तते तया युक्ता अलङ्कृतस्य अर्थस्य संवित्तिः = ज्ञानं कविता कथ्यते। इयञ्च कविता वैदिकानामवैदिकानामिति उभयेषां मङ्गलं वितनोति तस्मात् कविता सर्वमङ्गला।

काव्यात् प्राप्यमाणः आनन्दः कवेः सहृदयस्य च कृते समानो न भवति। सहृदयः काव्यं पठित्वा केनचित् ज्ञानात्मकेन शब्देन कञ्चित् चमत्कारिणम् अर्थं बोधयति। आचार्यः तस्मात् सहृदयदृष्ट्या काव्यं व्याकरोति यथा –

**''ज्ञानात्मकेन शब्दाख्येनार्थेनार्थान्तरात्मकः।**
**यः कश्चन चमत्कारी बोधः काव्यं स उच्यते॥''**[२०]

अस्य तात्पर्यं यत् ज्ञानात्मकेन शब्दाख्येन अर्थेन अर्थान्तरात्मकः यः कश्चित् चमत्कारी बोधः भवति सः काव्यम् उच्यते। अत्र उक्तम् – शब्दाख्यः अर्थः। तत् स्पष्टीकुर्वन् आचार्यः कथयति यत् काव्ये त्रयः

---

[१६] *तत्रैव – ०१ वृत्तौ, पृ.६*
[१७] *आनन्दवर्धनः, ध्वन्यालोकः, १/६, आचार्य जगन्नाथ पाठक, चौखम्बा विद्याभवन, वाराणसी, २०११, पृ.९२*
[१८] *सर्वपदेन अत्र उभयेषामपि सङ्ग्रहः वैदिकानाम् अवैदिकानां च। तत्रैव – ०१ वृत्तौ, पृ.७*
[१९] *मङ्गलं हि काव्यमास्तिकेभ्य इव नास्तिकेभ्योऽपि रसिकेभ्यः। तत्रैव – ०१ वृत्तौ, पृ.८*
[२०] *तत्रैव – १३४, पृ.२००*

अर्थाः भवन्ति – शब्दपदवाच्यः, वाच्यार्थपदवाच्यः, प्रतीयमानार्थपदवाच्यश्च।[२१] अत्र प्रश्नो भवति यत् शब्दपदवाच्यः अर्थः कथम्? आचार्यः रेवाप्रसादः समादधानो ब्रूते - ''ननु यो हि शब्दत्वेन उदीर्यते कथं नाम तस्य अर्थत्वमिति चेत् शब्द-शब्दाभिधेयस्य अपि अर्थस्य ज्ञानात्मकत्वेन इह ग्रहणात् तथा।''[२२] अर्थात् शब्दः शब्देन च अभिधीयमानः अर्थः, उभयमपि ज्ञानात्मकत्वेन अत्र गृह्यते। अतः शब्दपदेन शब्दाभिधेयोऽपि ज्ञेयः। इममेवार्थं दृढीकुर्वन्नाह आचार्यः ''शब्दपदेन शब्दाभिधेयोऽपि विवक्षितं, न ह्येव विस्मर्त्तव्यमत्र स्वप्नेऽपि''[२३] इति। नाम शब्दपदेन आचार्यः शब्दज्ञानं विवक्षुरस्ति अतः इदं सर्वथा स्मर्तव्यमेव। तदयमत्र सारः ''ज्ञानात्मकः शब्दः कञ्चन अर्थान्तरं चमत्कारिणं बोधं जनयति स एव काव्यम् उच्यते। ज्ञानात्मकः शब्दः इत्यनेन शब्दज्ञानं विवक्षितम् आचार्यप्रवरस्य।''

इत्थं सहृदयदृष्ट्या काव्यलक्षणं प्रतिपाद्य अधिकरणानि कथयति काव्यस्य –

**''कवेर्बुद्धौ च काव्ये च वाक्यज्ञाने च संस्थितः।**
**अलङ्कृतार्थसंघातः काव्यमित्यभिधीयते॥''**[२४]

अस्यां कारिकायां कथ्यते अलङ्कृतार्थसङ्घातः काव्यम्। इदं च काव्यस्य स्वरूपलक्षणम् इत्याचार्यः।[२५] अलङ्कृतस्य अर्थस्य सङ्घातः समूहः काव्यम् उच्यते। स चायमर्थः त्रीणि अधिकरणानि अपेक्षते – कवेः बुद्धिः, वाक्यं वाक्यज्ञानं च। एतानि त्रीण्यपि तृणारणिमणिन्यायेन[२६] काव्यभूतम् अलङ्कृतार्थसङ्घातं जनयन्ति। त्रयाणामपि कथमधिकरणत्वम् इत्यत्र आचार्यो भणति –

**''एषु (त्रिषु) कविप्रतिभायामुद्भूतसकलावयवकं किन्तु अप्राप्तबहिःप्रकाशनं यत् तस्याधिकरणं कविबुद्धिरेव''**[२७] इति। अर्थात् प्रथमं तावदधिकरणं कविबुद्धिः, यस्यां काव्यस्याखिलानि अवयवानि उद्भवन्ति किन्तु तानि बहिः प्रकाशितानि न भवन्ति। कवेः बुद्धौ काव्यस्य प्रकाशनं भवति किन्तु बहिः प्रकाशनं तावत् न भवति तस्मात् कविबुद्धिः प्रथमम् अधिकरणम्।

**''लिप्यादिना प्रकाशितं किन्त्वनुच्चारितावयवकं यत् तस्याधिकरणं सामाजिकनिष्ठं वाक्यज्ञानम्''**[२८] इति। अर्थात् द्वितीयम् अधिकरणं वाक्यज्ञानम् अस्ति। तच्च वाक्यज्ञानं नागरी-देवनागर-शारदेत्यादिभिः लिप्यादिभिः प्रकाशितं भवति किन्तु तस्य अवयवानि उच्चारितानि न भवन्ति। इदञ्च वाक्यज्ञानं सामाजिकनिष्ठम् अस्ति।

---

*[२१] तत्रैव – १३४, वृत्तौ, पृ.२००*
*[२२] तत्रैव – १३४, पृ.२०१*
*[२३] तत्रैव – १३४, वृत्तौ, पृ.२०२*
*[२४] तत्रैव – १३५, पृ.२०४*
*[२५] अलङ्कृतार्थसंघात इति हि काव्यस्य स्वरूपलक्षणम्। तत्रैव – १३५, वृत्तौ, पृ.२०४*
*[२६] तत्रैव – १३५, वृत्तौ, पृ.२०४*
*[२७] तत्रैव – १३५, वृत्तौ, पृ.२०४*
*[२८] तत्रैव – १३५, वृत्तौ, पृ.२०४*

**''यच्चोच्चारितवाक्यप्रकाशितं तस्याधिकरणं वाक्यशरीरमेव''**[२९] इति। अर्थात् कविबुद्धौ उद्भूतस्य किन्तु बहिः अप्रकाशितस्य, लिप्यादिना बहिः प्रकाशितस्य किन्तु अनुच्चारितस्य अवयवस्य उच्चारणेन प्रकाशनं भवति, तदस्ति वाक्यम्। इदमधिकरणं तृतीयमस्ति। एभिः त्रिभिः अधिकरणैः अर्थसङ्घातः उत्पद्यते यथा तृण-अरणि-मणिभिः अग्निः उत्पद्यते। अयमेव अर्थसङ्घातः काव्यमित्युच्यते।

अनेन कवितालक्षणं कविदृष्ट्या सहृदयदृष्ट्या अधिकरणदृष्ट्या च प्रतिपादितम्। एतादृशं विशिष्टं लक्षणं न केनापि पूर्वं प्रतिपादितम् अतः अस्मिन् विषये आचार्यः रेवाप्रसादः अतीव विशिष्टः वर्तते।

➢ **अभिराजयशोभूषणानुसारं काव्यलक्षणम्**

अभिराजः मिश्रः राजेन्द्रवर्यः स्वकीये अभिराजयशोभूषणे प्रथमे उन्मेषे स्वाभिमतं काव्यलक्षणं प्रस्तौति यथा-

**''काव्यं लोकोत्तराख्यानं रसगर्भं स्वभावजम्।**
**परत्रेह च निर्व्याजं यशोऽवाप्तिप्रयोजनम्॥''**[३०]

लोकोत्तराख्यानं काव्यम् इति काव्यलक्षणम्। लोकादुत्तरं नाम अलौकिकम् आख्यानं काव्यमिति निगद्यते। यस्य कस्यापि आख्यानस्य काव्यत्वं मा भूत्, तदर्थमुक्तं लोकोत्तरम्।[३१] इदं लोकोत्तरं पण्डितराजस्य रसगङ्गाधरात् स्वीकृतम्। जगन्नाथः यमर्थं रमणीयतां ब्रूते तस्य लोकोत्तरत्वं साधयति।[३२] ततः प्रेरितः सन् आचार्यः काव्यलक्षणे लोकोत्तरं पदं प्रायुङ्क्त।[३३] एतच्च लोकोत्तरत्वं लोकोत्तराख्यानं रसगर्भं भवति। नीरसं तावत् लोकोत्तराख्यानं काव्यं मा भूदिति उक्तं रसगर्भम्। अनेन मिश्रवर्यः साहित्यदर्पणकृतः विश्वनाथस्य अनुमोदनं करोति।[३४] इत्थं रससिद्धं लोकोत्तराख्यानं काव्यमिति काव्यस्य लक्षणम्।

कारिकायां प्रयुक्तानि ''स्वभावजम्, निर्व्याजम्, यशोऽवाप्तिप्रयोजनम्'' पदानि विशेषणानि सन्ति काव्यस्य। काव्यं स्वभावतः उत्पद्यते न तु आयासेन। काव्यं निर्व्याजं लिख्यते, कविः निष्कामः सन् काव्यं रचयति इति मिश्रवर्याणां मतम्। अस्य च काव्यस्य प्रयोजनं यशःप्राप्तिरेव इति कारिकायाः घटितार्थः।

---

[२९] *तत्रैव – १३५, वृत्तौ, पृ.२०४*

[३०] *राजेन्द्रमिश्रः, अभिराजयशोभूषणम् १/३४, वैजयन्त प्रकाशनम्, इलाहाबाद, २००६, पृ. ३८*

[३१] *तत्किं यत्किमपि आख्यानं काव्यपदवाच्यमुताहो विशिष्टम् एव इत्याशङ्क्य आह लोकोत्तरम् इति। तत्रैव, वृत्तौ, पृ. ४०*

[३२] *रमणीयता च लोकोत्तराह्लादजनकज्ञानगोचरता। जगन्नाथः, रसगङ्गाधरः, प्रथमाननम्, पण्डित मदनमोहन झा, चौखम्बा विद्याभवन, वाराणसी, २०१३, पृ. ११*

[३३] *अनेनकाव्यत्वे रमणीयार्थत्वपक्षधरस्य रसगङ्गाधरकारस्य मन्तव्यानुमोदनं जायते। राजेन्द्रमिश्रः, अभिराजयशोभूषणम् प्रथमोन्मेषः वृत्तौ, वैजयन्त प्रकाशनम्, इलाहाबाद, २००६, पृ. ४०*

[३४] *रससिद्धशब्दग्रहणेन वाक्यं रसात्मकं काव्यमिति स्थापना पराणां विश्वनाथमहापात्राणां भावानुमोदनम्। तत्रैव, पृ. ४०*

शब्दार्थयोः साहित्यं काव्यपर्यायः भवति। अनेन शब्दार्थौ काव्यं मन्वानानामाचार्याणाम् अनुमोदनम्[३५] विहितम्। लोकोत्तरत्वस्य कारणं सगुणत्वम्, अदोषत्वम्, अनायासाऽलङ्कृतिः तथा नवोन्मेषा प्रज्ञा वर्तते।[३६] अनेन आचार्यमिश्रवर्यः मम्मटाचार्यस्यापि काव्यलक्षणं सङ्गृह्णाति।[३७] इत्थं लोकोत्तराख्यानं रसगर्भं शब्दार्थयोः साहित्यं सगुणत्वम् अदोषत्वं निष्प्रयत्नाऽलङ्कृतिः इत्येतैः शब्दैः राजेन्द्रमिश्रवर्यः प्राचां काव्यलक्षणानां सङ्ग्रहं कृतवान् दृश्यते। अनेन वक्तुमुचितं यदेतत् काव्यलक्षणं सङ्ग्रहात्मकम् अस्ति।

- **अभिनवकाव्यालङ्कारसूत्रानुसारं काव्यलक्षणम्**

पण्डितप्रवरः आचार्यः राधावल्लभः त्रिपाठी स्वग्रन्थे अभिनवकाव्यालङ्कारसूत्रे प्रथमे सूत्रे काव्यलक्षणं निरूपयति। तदनुसारं काव्यलक्षणं यथा- **''लोकानुकीर्तनं काव्यम्''**।[३८] अर्थात् लोकस्य अनुकीर्तनं काव्यं कथ्यते। लोकशब्दं स्पष्टीकुर्वन् आचार्यः वृत्तौ लिखति- लोक इति पदेन जनपदवासी जनः देशः इति अभिनवभीरत्याः अभिमतः अर्थः न ग्राह्यः, किञ्च स्थावरजङ्गमात्मकः लोकः इति मम्मटाभिमतोऽर्थोऽपि न ग्रहणीयः। लोक इति पदेन चराचरमिदं जगत् गृह्यते[३९] इति। केवलं स्थावरजङ्गमात्मकं लोकपदवाच्यं नास्ति अपि तु चेतनया यद् विभाव्यते तत् सकलमेव भुवनं लोक इति ग्रहणीयम्।

द्वितीये सूत्रे आचार्यः लोकस्वरूपं निरूपयन् आह - **''स च लोकस्त्रिविधः''**[४०] **''आधिभौतिक आधिदैविक आध्यात्मिकश्च''**।[४१] लोकः त्रिविधः भवति – (१) आधिभौतिकः, (२) आधिदैविकः, (३) आध्यात्मिकः। तत्र आधिभौतिकं जगत् पञ्चमहाभूतात्मकं यदन्तःकरणैः बाह्यकरणैश्च अनुभूयते तत्। स एवाधिभौतिकः लोकः उच्यते।[४२] एषः आधिभौतिकः लोकः निखिलकाव्यकलादीनाम् आधारः अस्ति। एतद्विना मनुष्याणां कार्यव्यापाराः न प्रभवन्ति इति त्रिपाठिवर्यः। नाम त्रिषु लोकेषु आधारभूतः लोकः आधिभौतिकः।

मनसि यस्य साक्षात्कारः भवति सः आधिदैविकः।[४३] आत्मसम्बन्धी लोकः आध्यात्मिकः।[४४] तात्पर्यं यत् लोकस्य त्रैविध्यं सर्वविधं तत्त्वम् आत्मनि समावेशयति ब्रह्मणः आरभ्य तृणं यावत् सर्वमपि लोके

---

*[३५] शब्दार्थसङ्गमेनैव किञ्चिदाख्यातुमिष्यते। ततश्चोभयसाहित्यं काव्यपर्यायगोचरम्॥ किञ्च शब्दार्थसाहित्यं काव्यसंज्ञं भवेत्पुनः। मनसा कर्मणा वाचा लोकोत्तरमसंस्तुतम्॥ तत्रैव – १/३५,३६, पृ. ३८*

*[३६] सगुणत्वमदोषत्वं निष्प्रयत्नाऽप्यलङ्कृतिः। प्रज्ञा चापि नवोन्मेषा लोकोत्तरत्वकारणम्॥ तत्रैव – १/३७, पृ. ३८*

*[३७] तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि। मम्मटः, काव्यप्रकाशः १/४, आचार्य विश्वेश्वर, ज्ञानमण्डल लिमिटेड, वाराणसी, २०१४, पृ. १०*

*[३८] राधावल्लभत्रिपाठी, अभिनवकाव्यालङ्कारसूत्रम्-१/१/१, जगदीशसंस्कृतपुस्तकालय, जयपुर,२००९, पृ. ३*

*[३९] तत्रैव – १/१/१ वृत्तिः, पृ. ४*

*[४०] तत्रैव – १/१/२, पृ. ५*

*[४१] तत्रैव – १/१/३, पृ. ६*

*[४२] इदं पञ्चभूतात्मकं जगत्......। तत्रैव – १/१/२ वृत्तिः, पृ. ५*

*[४३] आधिदैविकस्तु लोको मानससाक्षात्कारजनितः। तत्रैव – १/१/२ वृत्तिः, पृ. ६*

*[४४] आत्मसम्बन्धी इत्यर्थः। तत्रैव – १/१/२ वृत्तिः, पृ. ७*

प्रतिष्ठितं भवति।[४५] लोकाद् बहिः किमपि अवस्थितं नास्ति। अतः संक्षेपेण उच्यते त्रिविधस्यापि लोकस्य अनुकीर्तनं काव्यम्।

एतेषां त्रयाणामपि लोकानाम् अनुषक्तत्वम् अस्ति।[४६] अनुषक्तत्वं नाम परस्परं सम्बन्धित्वम्। त्रिविधेन लोकेन एव पुरुषार्थचतुष्टयं सिद्ध्यति। आधिभौतिकेन लोकेन अर्थसिद्धिः, आधिदैविकेन लोकेन कामसिद्धिः, आध्यात्मिकेन लोकेन धर्ममोक्षसिद्धिः भवति।[४७] वस्तुतः चत्वारः पुरुषार्था अपि परस्परम् अनुषक्ताः सन्ति। धर्मपूर्वकः अर्थः कामश्च वस्तुतः अर्थकामौ उच्येते। तथैव अर्थकामौ विना धर्मः न सम्भवति, धर्मार्थकामान् विना न मोक्षसिद्धिः इति पुरुषार्थाणां परस्परमनुषक्तत्वं सिद्धम्। तथैव त्रिलोकस्यापि अनुषक्तत्वम् अस्ति।

एतस्मिन् विस्तृते लोके परमसत्ता अपि अन्तर्भूता भवति। यदि कश्चित् आक्षिपेत् सा परमसत्ता अलौकिकी एव, इति न। परमसत्ता अपि लोकः एव, न तु लोकातिक्रान्ता। अत्र राधावल्लभः आचार्यः परमसत्तायाः लौकिकत्वं साधयन् ब्रूते – ये महायोगिनः ब्रह्मसाक्षात्कारं कुर्वन्ति ते अन्यत्र लोकं गत्वा कुर्वन्ति उत अस्मिन् लोके एव स्थित्वा? ते अस्मिन्नेव लोके स्थित्वा ब्रह्मसाक्षात्कारं कुर्वन्ति अतः तस्य ब्रह्मणः लोकान्तर्वर्तित्वं सिद्धम्। इत्थम् अलौकिकं वस्तु कविः काव्ये निरूपयति इति पूर्वाचार्याणां मतम् अपास्तम्। यत् लोके न भवति तत् काव्येऽपि न सम्भाव्यते।[४८]

त्रयाणामपि लोकानां समन्वितत्वं जीवनम् उच्यते।[४९] पूर्वोक्तानुसारं यथा एते त्रयः लोकाः अनुषक्ताः तथैव पुरुषार्थाः अपि अनुषक्ताः सन्ति। पुरुषार्थचतुष्टययुक्तं जीवनं तथैव लोकत्रययुक्तं जीवनं भवति। इदं जीवनं साहित्ये शास्त्रेषु च महाकविभिः शास्त्रकारैश्च निरूप्यते। इदमेव जीवनं त्रिविधं पुनः व्यक्तिगतं समाजगतं ब्रह्माण्डगतम् इति त्रिविधं भवति। संक्षेपतः उच्यते यत् समस्तमपि वस्तुजातं जीवने पर्यवसितं भवति। साहित्ये जीवनम् अस्ति जीवने च साहित्यमस्ति इति परस्परं द्वयोः संसिद्धिः जायते[५०] इति जीवनस्वरूपम्।

इत्थं लोकशब्दं व्याख्याय्य आचार्यः अनुकीर्तनपदं व्याकुरुते यत् अनुकीर्तनं चतुर्विधम्[५१] इति। अनुपश्चात् कीर्तनं कथनम्[५२] इति अनुकीर्तनम्। नाम पूर्वं जातस्य पश्चात् कथनम् अनुकीर्तनम् उच्यते। अनेन सिद्धयति यत् लोकः पूर्ववर्ती काव्यं च पश्चाद्वर्ति वर्तते। पूर्वं भूतस्य अर्थजातस्य शब्दैः पुनराविष्करणं

---

[४५] *आब्रह्मस्तम्बावधि लोकः प्रसृतः सनातनोऽक्षय्यः। लोकाद् बहिर्न किञ्चिल्लोके सर्वं प्रतिष्ठितं च॥ तत्रैव, परिकरश्लोकः, पृ. ७*

[४६] *अनुषक्तत्वं चैतेषां त्रयाणामपि। तत्रैव – १/१/४, पृ. ०५*

[४७] *तत्रैव, वृत्तिः, पृ. १५*

[४८] *तत्रैव, वृत्तिः, पृ. ८,९*

[४९] *त्रयाणां च सकलः समुल्लासो जीवनम्। तत्रैव – १/१/५, पृ. ०५*

[५०] *जीवने यास्ति साहित्यं साहित्ये जीवनं तथा। परस्परकृता सिद्धिरनयोः सम्प्रवर्तते॥ तत्रैव, परिकरश्लोकः, पृ. १८*

[५१] *तत्रैव – १/१/७, पृ. १९*

[५२] *तत्रैव – १/१/७, वृत्तिः, पृ. १९*

राधावल्लभेन अनुकीर्तनम् इति भण्यते। शब्दाः सार्थाः भवन्ति अतः अनुकीर्तनपदेन निर्दुष्टयोः सगुणयोः सालङ्कारयोः रसाभिव्यञ्जकयोश्च शब्दार्थयोः सङ्ग्रहः क्रियते।[५३] अनेन अनुकीर्तनेन काव्ये पूर्णता आयाति।[५४] इयं पूर्णता एव आचार्येण अलङ्कारः इति गृह्यते।[५५] अनुकीर्तनेन पूर्णता, पूर्णता च अलङ्कारः इति क्रमेण सिद्ध्यति यत् अलङ्कारः एव काव्यम्।[५६]

अनुकीर्तनं चतुर्विधं भवति– (१) अनून्मीलनम्, (२) अनुदर्शनम्, (३) अनुभवः, (४) अनुव्याहरणम् इति। यः काव्यं चिकीर्षुरस्ति तस्य मानसे उद्भूतः प्रथमः उन्मेषः अनून्मीलनमुच्यते। तस्यैव अन्तश्चेतसि कविः दर्शनं करोति तत् अनुदर्शनम्। अनुदृष्टस्य अर्थस्य वर्णनं कर्तुं शब्दार्थयोः आविष्कारः अनुभवः उच्यते। अनुभूतस्य च अर्थस्य स्फुटैः शब्दैः कथनम् अनुव्याहरणम् उच्यते।[५७] तात्पर्यमिदमस्ति यत् प्रथमं कवेः मानसे कश्चिदर्थः उत्पद्यते, ततः सः अर्थः अन्तः चेतसि दृश्यते, ततः तस्यार्थस्य अनुभूतिः भवति, तस्याश्चानुभूतेः आविष्कारः भवति। इत्थम् अनुकीर्तनस्य चतस्रः अवस्थाः सन्ति। इदमेव अनुकीर्तनं काव्यपदवाच्यम् अस्ति।

➢ **उपसंहृतिः**

अत्रादौ प्राचामाचार्याणां काव्यलक्षणं प्रतिपाद्य काव्यालङ्कारकारिकानुसारम् अभिराजयशोभूषणानुसारम् अभिनवकाव्यालङ्कारसूत्रानुसारं च काव्यलक्षणम् अस्माभिः प्रतिपादितम्। काव्यालङ्कारकारिकायाम् आचार्य-रेवाप्रसाद-द्विवेदी काव्यलक्षणं त्रिविधं निरूपयति कविदृष्ट्या सहृदयदृष्ट्या अधिकरणदृष्ट्या च। तस्य लक्षणस्य सारः ''अलङ्कृतार्थसंवित्तिः चमत्कारकारी बोधः अलङ्कृतार्थसङ्गतश्च काव्यम्'' इति। किन्तु अभिराजः राजेन्द्रमिश्रवर्यः कविदृष्ट्या काव्यं लक्षयति। तस्य काव्यलक्षणं सामान्यं प्रतीयते यतो हि तेन प्रायेण पूर्वाचार्याणां लक्षणानि समादृत्य स्वाभिमतं सङ्ग्रहात्मकं काव्यलक्षणं प्रतिपादितम्। अस्मिन् सन्दर्भे राधावल्लभः त्रिपाठिवर्योऽपि रेवाप्रसाद इव विशिष्टं काव्यं लक्षयन् प्रतीयते किन्तु सूक्ष्मदृष्ट्या पश्यामश्चेत् नाट्यशास्त्रस्य ''त्रैलोक्यस्यास्य सर्वस्य नाट्यं भावानुकीर्तनम्''[५८] इति कारिकांशेन प्रेरितः सन् ''लोकानुकीर्तनं काव्यम्''[५९] इति काव्यं लक्षयन् दृश्यते। इदमपि काव्यसामान्यलक्षणमेव।

आचार्यः रेवाप्रसादः अलङ्कृतार्थस्य ज्ञानं बोधं वा सङ्गतं काव्यं मनुते। अभिराजः मिश्रवर्यः लोकोत्तरम् आख्यानं रसयुक्तं काव्यम् अङ्गीकरोति। राधावल्लभस्तु लोकस्य अनुकीर्तनं शब्दैः कथनं काव्यं

---

[५३] *तत्रैव – १/१/७, वृत्तिः, पृ. १९*
[५४] *तेनास्य पूर्णता॥ तत्रैव – १/१/८, पृ. १९*
[५५] *पूर्णता चालङ्कारः॥ तत्रैव – १/१/९, पृ. १९*
[५६] *तेन अलङ्कारः एव काव्यम्॥ तत्रैव – १/१/१०, पृ. १९*
[५७] *तत्रैव – १/१/१०, वृत्तिः, पृ. २०*
[५८] *भरतमुनिः, नाट्यशास्त्रम्-१/१०७, बाबुलाल शुक्ल शास्त्री, चौखम्बा संस्कृत संस्थान, वाराणसी, २०१४, पृ. २६*
[५९] *राधावल्लभत्रिपाठी, अभिनवकाव्यालङ्कारसूत्रम्-१/१/१, जगदीशसंस्कृतपुस्तकालय, जयपुर,२००९, पृ. ३*

स्वीकरोति। अतः इदमत्र उच्यते यत् रेवाप्रसादानुसारं ज्ञानं बोधः सङ्घातः वा काव्यम्, मिश्रवर्यानुसारं लोकोत्तरम् आख्यानं काव्यम्, त्रिपाठिवर्यानुसारं लोकस्य अनुकीर्तनं काव्यम् इति।

सनातनकवेः रेवाप्रसादस्य मतानुसारं काव्यं तिसृभ्यः अवस्थाभ्यः पारं गत्वा रचितं भवति। काव्यं प्रथमं कवेः बुद्धौ उद्भवति, ततश्च तत् वाक्यस्वरूपं दधाति, तच्च वाक्यं वाक्यज्ञानं सद् काव्यम् उच्यते। आचार्यः राधावल्लभोऽपि अनुकीर्तनस्य चतस्रः अवस्थाः निरूपयति-अनून्मीलनम्, अनुदर्शनम्, अनुभवः, अनुव्याहरणम् इति। एताः चतस्रः अवस्थाः रेवाप्रसादाचार्यकथितावस्थानां विस्तृतं रूपं प्रतीयते। एतत्सन्दर्भे आचार्यः अभिराजः राजेन्द्रमिश्रः मौनं सेवमानः अस्ति। एवमाधुनिककाव्यलक्षणसन्दर्भे त्रयाणामाचार्याणां लक्षणसारः अत्र यथामति न्यरूप्यत।

## सन्दर्भग्रन्थाः

१ भामहः, काव्यालङ्कारः, शङ्कररामशास्त्री, श्रीबालमनोरमा प्रेस, मद्रास – १९५६
२ रुद्रटः, काव्यालङ्कारः, पं. दुर्गाप्रसाद, निर्णयसागर प्रेस, बोम्बे – १९०९
३ वामनः, काव्यालङ्कारसूत्रवृत्तिः, आचार्य विश्वेश्वर, आत्माराम & सन्स, दिल्ली - १९८२
४ आनन्दवर्धनः, ध्वन्यालोकः, जगन्नाथपाठक, चौखम्बा विद्याभवन, वाराणसी - २०११
५ कुन्तकः, वक्रोक्तिजीवितम्, श्रीराधेश्याममिश्र, चौखम्बा संस्कृत संस्थान, वाराणसी – २०१६
६ मम्मटः, काव्यप्रकाशः, आचार्यविश्वेश्वर, ज्ञानमण्डल लिमिटेड, वाराणसी - २०१४
७ भोजदेवः, सरस्वतीकण्ठाभरणम्, पं. केदारनाथशर्मा, निर्णयसागर प्रेस, बोम्बे – १९३४
८ विश्वनाथः, साहित्यदर्पणः, डॉ. सत्यव्रतसिंह, चौखम्बा विद्याभवन, वाराणसी - २०१०
९ हेमचन्द्रः, काव्यानुशासनम्, डॉ. रामानन्दशर्मा, चौखम्बा कृष्णदास अकादमी,वाराणसी - २०००
१० जगन्नाथः, रसगङ्गाधरः, पण्डितमदनमोहनझा, चौखम्बाविद्याभवन,वाराणसी – २०१३
११ पं. रेवाप्रसादः द्विवेदी, काव्यालङ्कारकारिका, चौखम्बासुरभारतीप्रकाशनम्,वाराणसी - १९७७
१२ राजेन्द्रमिश्रः, अभिराजयशोभूषणम्, वैजयन्त प्रकाशनम्, इलाहाबाद - २००६
१३ राधावल्लभत्रिपाठी, अभिनवकाव्यालङ्कारसूत्रम्, जगदीश संस्कृत पुस्तकालय, जयपुर - २००९
१४ ब्रह्मानन्दशर्मा, काव्यसत्यालोकः, प्रविणपण्ड्या, राजस्थान संस्कृत अकादमी, जयपुर २०१३



वर्षम्-०४ अङ्कः-०४ शोधज्योतिः
जनवरी-दिसम्बर, २०२२ ISSN-2350-0700

# अभिनव-प्रणववादे नादतत्त्वस्य मौलिकी भावना

डॉ. सेविका नाग[१]

**प्रबन्धसारः**

वर्णः शब्दो वा ओङ्काराद् न भिन्नः, अस्मादोङ्कारात्सकलवर्णमालायाः सृष्टिरिति प्रसिद्धेः। यत्र यत्र शब्दः तत्र तत्र स्पन्दनमवश्यमेव तिष्ठति। सुतरां शब्दस्पन्दनयोर्मध्ये नित्यसम्बन्धो विद्यते। *शारदातिलकतन्त्रे* सच्चिदानन्दस्वरूपात् सप्रकृतिक-परमेश्वरादादौ शक्तिः, ततः नादः, नादात् बिन्दुः समुद्भवतीति उक्तम्।[१] प्रसङ्गेऽस्मिन् श्रीओङ्कारनाथदेवेन उन्मोचितं नादतत्त्वं प्रासङ्गिकमिति विचिन्त्य प्रारभ्यमाणोऽयं प्रबन्धः।

भारतीयदर्शनशास्त्रपरम्परायां वेदान्तस्यावस्थानं सुप्राचीनम्। प्रस्थानत्रय्यां ये भाष्यकारास्ते आचार्या इति सामाजिकैः स्वीक्रियन्ते। यथा शङ्कर-रामानुज-मध्व-वल्लभ-निम्बार्कादीनां धाराः वेदान्तशास्त्रस्य अन्तर्गता इति। अतीव आमोदकारणं यत्ता धाराः अद्यावधि प्रवहन्ति। यथा प्राचीना सन्ति तथैव नवीना धारा आविर्भूय वेदान्तशास्त्रम् अद्यापि समर्धयति। आधुनिकतमायां विंशशताब्द्यां श्रीओङ्कारनाथदेवेन अभिनवदर्शनमेकं प्रचारितम्। विद्वत्समाजे एतत्प्रणववादरूपेण ख्यातम्।

येषु ग्रन्थेषु तस्य प्रणवतत्त्वमिदं प्रतिष्ठितं ते सन्ति- (१) ब्रह्मसूत्रस्य *ओङ्कारभाष्यम्* (२) गीतायाः *प्रणवप्रेमपीयूषभाष्यम्* (३) श्रीचण्ड्याः *प्रणवप्रेमामृतभाष्यम्* (४) उपनिषदां *सद्गुरुकृपामृतभाष्यम्* (५)*ब्रह्मानुसन्धानम्* (६) *ओङ्कारसहस्रगीतिः* (७) *पुरुषोत्तमः*। अपि च प्रणवतत्त्वमिदं तस्य सार्धशताधिकग्रन्थेषु इतस्ततः विक्षिप्तरूपेण विधृतम्। एतेषां मध्ये *श्रीश्रीनादलीलामृतम्, सुधाधारा, पुरुषोत्तमलीला, मातृगाथा, योगरहस्यम्, प्रपन्नपथिकम्* (ज्ञानपथ), *सनत्सुजातीयमध्यात्मशास्त्रं, श्रीश्रीनामामृतलहरी,* क्षेपार-झुलि, *महारसायनम्*-इत्यादि-ग्रन्थेषु तस्य प्रणववादस्याभिनवत्वं सुस्पष्टम्।

**शोधप्रविधिः**

गवेषणापद्धतिप्रसङ्गे प्राचीनाचार्याः अस्माकं मार्गं प्रदर्शयन्ति यत्—विषयः, संशयः, पूर्वपक्षः, उत्तरपक्षः सिद्धान्तपक्षो वा, प्रयोजनम् (=फलम्)।केचित् तदतिरिक्तां सङ्गतिं स्वीकुर्वन्ति। अस्य प्रणववादस्याभिनवत्वसमीक्षणप्रसङ्गे मूलतः उल्लिखित-पद्धति-अवलम्बनेन ब्रह्मसूत्रोपरि श्रीओङ्कारनाथदेवप्रणीतस्य ओङ्कारभाष्यमाधृत्य च वयमेतद्गवेषणासन्दर्भनिर्माणे प्रयासी भवामः।

---

[१] *सहायिकाचार्या, अद्वैतवेदान्तः, प्राच्यविद्याविभागः, संस्कृतमहाविद्यालयविश्वविद्यालयः, कलकत्ता, Email– sebikanag@gmail.com, Contact no. 9874152284*

एतत्प्रणववादप्रतिष्ठापनार्थं तस्यापराणां दार्शनिकग्रन्थानां तत्त्वं वर्तमाननिबन्धे प्रयोजनानुसारेण उल्लिखितम्।

**प्रास्ताविकम्**

नामरूपात्मकायाः सृष्टेरस्याः यथार्थस्वरूपोपलब्ध्यर्थं बन्धनमुक्त्यर्थञ्च श्रीओङ्कारनाथदेवेन नामनामिनोरभिन्नता प्रतिपादिता। तस्मिन्नुपलब्धौ नाम कदापि उपायः, कदापि वा उपेय इति, यतो हि नामिभिन्ना नाम्नः सत्ता नाङ्गीक्रियते। महर्षिणा पतञ्जलिनाऽभिहितं यत् प्रणवः केवलमीश्वरस्य वाचक इति। अभिनवप्रणववादे तु वाचकः वाच्यान्न भिन्न इति। अत एव ओङ्कारनाथदर्शने स्फोटरूपिणि ओङ्कारे वाच्यवाचकरूपो बोध्यबोधकरूपः कश्चिद् द्वैतभावो भेदभावो वा नास्ति। परावाग्रूपादोङ्कारात् सकलवर्णमालायाः सृष्टिः, अतोऽङ्कारान्न भिन्नः वर्णः शब्दो वा। अपि च यत्र यत्र शब्दः तत्र तत्र स्पन्दनमवश्यमेव तिष्ठति। अतः शब्दस्पन्दनयोर्मध्ये नित्यसम्बन्धो विद्यते। विविधेषु शास्त्रेष्वपि अयं नादप्रसङ्गः, तस्य समुद्भवप्रसङ्गः, तस्य च गतिः दृश्यन्ते। अतः श्रीओङ्कारनाथदेवेनोन्मोचितं नादतत्त्वं प्रासङ्गिकमितिमन्यामहे।

नादस्वरूपं विविधतया वर्णितं विविधेषु शास्त्रग्रन्थेषु। व्युत्पत्त्यनुसारेण अर्थनिर्णये नादः ध्वनिरिति बोध्यते, यतः नद् धातोरर्थः शब्दायते। अस्योत्तरं भावबोधकेन घञ्-प्रत्यययोगेन नादः शब्दः निष्पन्नः। *सङ्गीतदामोदरे*ऽपि नादशब्दस्य व्युत्पत्तिगतः अर्थ उल्लिखितः।[२] तत्रोच्यते नाभेः ऊर्ध्वं प्राणसंज्ञकः वायुः हृदिस्थानात् आब्रह्मरन्ध्रं गत्वा नदति। अस्मात् कारणात् तच्छब्दः नाद इति प्रकीर्त्तितः। नादस्य पञ्चानामवस्थानां मध्ये प्रथमावस्था अतिसूक्ष्मा नाभावेवोपलब्धा च तत्र दृश्यते। एतद्व्यतिरिच्य नाभेः नादस्योर्ध्वगतिरपि[३] तत्रोल्लिखिता।

**शास्त्रेषु नादतत्त्वविमर्शः**

यदा पुरुषस्य शब्दोच्चारणेच्छा समागच्छति तदा तस्य तादृशेच्छावशात् तदीयमूलाधारचक्रस्थितायां कुलकुण्डलिन्यां विकारः समुद्भूतः। तस्मात् सूक्षतमा परा वाक् सञ्जाता। उत्पत्तिक्षणे एवोक्ता परा-वाक् सुषुम्नानाड्याः मध्येन क्रमशः ऊर्ध्वमुत्थिता भवति। स्वाधिष्ठानं मणिपुरमनाहतं विशुद्धमाज्ञाचक्रञ्चातिक्रम्य सूक्ष्मा वागेषा सहस्रारचक्रं प्रविशति। ततश्च पुनः निम्नगतिं परिलभ्य वदनेन विनिर्गता भवति। उत्पत्तिकालादारभ्य उच्चारणकालपर्यन्तं सकलावस्थायामेव सा नाद इति मन्यते। नाभिपद्मात् ऊर्ध्वम् अव्यक्तां ध्वनिं जनयति। एषावस्था सर्वैः गोचरीभूतेति वक्तुं शक्यते।

अनवस्थितत्वे सति उच्चारणेच्छायामपि देहमध्यस्थेन वायुप्रभावेन कस्यचन सूक्ष्मनादस्य सृष्टिर्भवति। नादोऽयं नाभेरुत्पद्य सहस्रारचक्रमागच्छति, पुनश्च नाभ्यभिमुखं धावितो भवति। एवं नाभिसहस्रारचक्रयोर्मध्ये नादस्यास्य अविरतागतिः। सूक्ष्मोऽयं नादः सर्वदा एव ब्रह्मरन्ध्रं गच्छति तस्माच्च सदैव कस्यचन अव्यक्त-ध्वनेर्सृष्टिर्भवति। अवरुद्धे कर्णद्वये नादोऽयं ध्वनिर्वा श्रुतिगोचरो भवति।

शब्दं करोति गर्जतीत्यर्थे नद्धातोः बहुलप्रयोगः[४] समुपलभ्यते। *शिवपुराणे*ऽपि दृश्यते नद्धातोः प्रयोगः।[५] प्लुतध्वनिरिति *लिङ्गपुराणम्*।[६] अस्मिन् लिङ्गपुराणेऽपि उच्चारणार्थं नाद इति शब्दस्य प्रयोगः दृश्यते। नादोऽयं ब्रह्म इत्यभिधीयते।[७] एतद्व्यतिरिच्य विविधेषु ग्रन्थेषु अभिधानेऽपि च अस्मिन्शब्दार्थे नादशब्दस्य प्रयोगः दृश्यते।[८]

उपनिषत्सु सूक्ष्मातिसूक्ष्मः नाद एव प्रणवपदवाच्यः। एष एव उद्गीथ ओङ्कारो वा। यथा अनुदिते सूर्ये लोके कर्मशक्तेः प्रावल्यं न परिदृश्यते तथैव नादात्मकं प्राणं विना जीवशरीरे ब्रह्माण्डे वा कुत्रापि कर्मशक्तेराविर्भावो न परिदृश्यते। अत आदित्यरूपेण आदित्यःवेति नाम्ना नादोऽयमभिधीयते। *छान्दोग्योपनिषदि*[९] यस्य उद्गीथस्य प्राणस्य वा उल्लेखो वर्तते स उद्गीथः प्राणो वा प्रणवो वा नादब्रह्मेति मन्यन्ते केचन। *बृहदारण्यकोपनिषदि*[१०] उद्गीथस्य य उल्लेखो विद्यते स एव नादः, न तु भिन्न इति केचन मन्यन्ते। तन्त्रशास्त्रे वर्णितः नादब्रह्म-शब्दः नाद-प्रतिपाद्य-ब्रह्म इति जगन्मोहन-तर्कालङ्कारस्य मतिः।[११] *लिङ्गपुराणस्य* सप्तदशाध्याये[१२], *पातञ्जलयोगदर्शने*ऽपि परमेश्वरस्य वाचकरूपेण नादः प्रणवो वा वर्णितः। *तैत्तिरीये आरण्यके*ऽपि प्राणरूपेणैव नादस्य वर्णना परिदृश्यते।[१३] एतेन स्पन्दनात्मकः सूक्ष्मः अव्यक्तः ध्वनिरेवोद्घोषितः। देहे यावत् स्पन्दनम् अव्यक्तः ध्वनिर्वा विराजते तावदेव देहस्य प्राणवत्ता स्वीकृता। अतः स्पन्दनमिदम् अव्यक्तध्वनिरेव देहस्य प्राणः इत्युपनिषदः अभिप्रायः। विश्वब्रह्माण्डरूपस्य विराट्-पुरुषस्य विपुलायतनेऽपि देहे यावत् स्पन्दनमिदं सूक्ष्मो वा ध्वनिः विराजते तावदेव तस्मिन् सृजनीशक्तिः विद्यमाना वर्तते; अत एषः नादः स्पन्दनं वा विश्वब्रह्माण्डस्यापि प्राणस्वरूपम्। ओमिति प्रणवोऽयं आदित्यं ज्योतिः ब्रह्म चेति *मैत्रायणीश्रुतिः*।[१४] *प्रपञ्चसार*इति तन्त्रशास्त्रीये ग्रन्थे ओङ्कारस्य नादस्य चाभिन्नता प्रदर्शिता। तत्रोच्यते यथा- स्थावर-जङ्गमात्मकं समग्रं ब्रह्माण्डं परिव्याप्य कारणरूपः ओङ्कारः विद्यते सर्वत्र सर्वदा। उक्त ओङ्कार एव नादः प्राणः जीवः घोषः इत्त्यादिभिः बहुभिः नामभिः अभिधीयते।[१५] अस्य ज्योतिःरूपस्य नादस्यानुभवप्रकारः *बृहदारण्यकोपनिषदि* समाम्नातः। तत्र वर्ण्यते यथा - मानवदेहस्थितस्य भुक्तद्रव्यस्य येनाग्निना परिपाको भवति, तस्यैव नाम वैश्वानर अग्निः। अवरुद्धे कर्णद्वये यः शब्दः श्रुतो भवति स एव अग्नेः शब्दः। देहत्यागकाले सम्प्राप्ते शब्दोऽयं न श्रुतः।[१६] *स्कन्दपुराणमपि*[१७] एतत्समर्थयति।

महर्षिः जैमिनिः तस्य *पूर्वमीमांसादर्शने* ध्वन्यर्थे नादशब्दस्य प्रयोगं प्रदर्शयति।[१८] तत्परवर्तिनि काले व्याख्यातरश्चापि एतदर्थे नादशब्दस्य ग्रहणं कुर्वन्ति।[१९] मीमांसकप्रवरः कुमारिलभट्टोऽपि स्फोटवादस्थले ध्वन्यर्थे नादशब्दस्य ग्रहणं करोति। नादःशब्दस्य व्यञ्जक इति तेन स्पष्टतया कथ्यते।[२०] नादः पदांशरूपेणैव स्वीक्रियतेमहर्षिना पतञ्जलिना। *योगदर्शने* विभूतिपादे[२१] व्यासेनोच्यते पदं पुनर्नादानुसंहारबुद्धिनिर्ग्राह्यम् इति। तद्व्याख्यानस्थले हरिहरानन्द-आरण्योऽपि अ, आ इत्यादीनां वर्णानामुच्चारणमेव नाद इति कथयति। आचार्येण भर्तृहरिणा ध्वन्यर्थे नादशब्दस्य प्रयोगः कृतः, अपि च टीकाकारः पुण्यराजः समर्थयति एतत्।[२२] आचार्यअभिनवगुप्तः तस्य '*तन्त्रालोक*' इति ग्रन्थे शब्दं

नादात्मकमिति शब्दात् नादस्याभिन्नतां स्वीकरोति।[२३]उक्तः नादः शब्दात्मकान्नादान्न भिन्न इति जयराजसिद्धान्तोऽपि।[२४] तत्र जयरथेन स्पष्टतयोच्यते यदत्र 'बिन्दुनादादिसंभिन्नम्' इति पदंतन्त्रशास्त्रवर्णितस्य षड्-वस्तुस्वरूपस्य शिवस्य वैशिष्ट्यमात्रप्रतिपादनाय व्यवहृतमिति।

तन्त्रशास्त्रे अपि नादसम्बन्धिनि अधिकतरा आलोचना परिदृश्यते। किञ्चिद् भिन्नार्थे तु अयं नादशब्दः प्रयुक्तः। *सारदातिलके* उच्यते यत् सच्चिदानन्दविग्रहात् अखण्डात् परमेश्वराच्छक्तेः सृष्टिर्भवति, ततः शक्तेः नादः नादाच्च बिन्दोःउत्पत्तिरिति।[२५]*प्रपञ्चसारे* तु उच्यते - गुण्त्रयाणां साम्यावस्थारूपा प्रकृतिः क्षुब्धा सन् बिन्दुरूपेण परिणताऽभवत्। ततश्च बिन्दुरयं त्रिधा विभज्य सृष्टिकार्ये प्रवृत्तपरो भवति। विभागत्रयं बिन्दुः नादः बीजम् इति। भिद्यमानाद् बिन्दोरस्माद् अव्यक्तस्य शब्दात्मकस्य ब्रह्मणः प्रकाशो भवति।[२६] भिद्यमाने परेबिन्दौ अव्यक्तस्य 'ख'स्य समुद्भवः सम्भवति। अयमव्यक्तः खः नाद इति। अत्र परबिन्दुरिति शब्देन शक्तेः विकृतावस्यारूपः प्रथमः बिन्दुरुच्यते।[२७] तस्मादत्र सृष्टिप्रक्रियापि द्योतिता। बिन्दुरयं शिवात्मकः, बीजञ्च शक्त्यात्मकमिति। उभयोर्योगेन नादस्य सृष्टिर्भवति।[२८] अत्रापि बिन्दुरिति पदेन परबिन्दुः आदिस्पन्दनात्मकः प्रथमो बिन्दुर्वा समुपलब्धः।

भिद्यमाने परमे बिन्दौ अव्यक्तस्वरूप अपरप्रणव उत्पन्नः जातः। अयमेव अपरप्रणवः शब्दब्रह्म इत्यभिधीयते। अत्र प्रश्नावकाशःजायते कोऽयमपरप्रणव इति। अस्य विश्लेषणप्रसङ्गे तन्त्राचार्यैः तस्य सप्ताङ्गानि प्रदर्शितानि। यथा - अ, उ, म, नादः, बिन्दुः, कला, कलातीता चेति। *महानिर्वाणतन्त्र*व्याख्यानकाले जगन्मोहन-तर्कालङ्कारः कथयति यत् ओम् इति वर्णं न प्रणवः किन्तु यः अस्य वर्णस्य वाच्यं स एव अपर-प्रणवः शब्दब्रह्म वा। एतदपरप्रणवस्य मध्ये उल्लिखितानि सप्ताङ्गानि विद्यन्ते। अपितुतन्त्राचार्यैः एतदतिरिच्य नादस्य च बिन्दोश्चास्तित्वं स्वीकृतम्।

वस्तुतः उच्चारणात् पूर्वं शब्दस्य या सूक्ष्मतमा अवस्था विद्यते, विविधेषु च ग्रन्थेषु या परावाक् इत्यभिधीयते, स एव नादः परनादो वा। नादोऽयं चिदात्मिका शक्तिरिति गोपीनाथकविराजस्यमतिः।[२९] तस्य मते अव्यक्तः ध्वनिविशेष एव नादः। परा, पश्यन्ती मध्यमा च - तिस्रः अवस्थाः एव अव्यक्ताः। वैखरी वाक् तु नाद इति वक्तुं शक्यतेनादशब्दस्य व्युत्पत्तिग्रहणात्। पश्यन्तीति नामकरणप्रसङ्गे *योगशिखोपनिषदि* उच्यते यथा - योगिनः अनया विश्वस्य ज्ञानसमूहं जानन्ति इति पश्यन्ती वाक्। यद्यपि वैखरी वाक्माध्यमेन ज्ञानस्य आदान-प्रदानं संघटितं तथापि परा-प्रभृति- सूक्ष्मतरामवस्थां विना वैखरीरूपायाः स्थूलावस्थायाः उत्पत्तिः न सम्भवति। अतः शब्दस्य प्रत्येकावस्था एव उल्लिखितार्थे पश्यन्ती इत्यभिधीयते।

**नादानुसन्धानम्**

नित्ये शुद्धे बुद्धे मुक्ते सच्चिदानन्द-सत्यस्वरूपे आत्मनि स्थित्यर्थं शास्त्रोक्ताः निर्दिष्टाः ये उपायाः सन्ति, तेषामुत्कृष्टा इयं नादसाधना। सर्वैः साधकैः नादमहिमा उच्चैरुद्घोषितः। पुरा 'वाग्योगः' ततश्च

'सुरतशब्दयोग-प्रभृतिभिः विविधनामभिः तन्नादमाहात्म्यमेव प्रकारान्तरेण प्रकटितम्। वैष्णवादिसम्प्रदायान्तर्गताः भक्ताः मनसः स्थिरीकरणार्थं मूढचित्तबोधनार्थञ्च नादस्योपयोगिता उररीकुर्वन्ति। सर्वोपरि योगे, तन्त्रसाधने मन्त्रजपे चापि नादमाहात्म्यं प्रकाशितम्।

अविद्योपाधिवशात् जीवः तस्य शिवमयायाः सत्तायाः विस्मृतिवशाद् अनात्मं वस्तु आत्मा इति मन्यते। अतः सः तदनुरूपं कर्म तस्य च फलभोगार्थं संसारचक्रे परिभ्रमति। यावज्जीवस्य एतादृशस्य अशुद्ध-विकल्पस्य शुद्धिर्न भवति तावत् जीवात्मनः स्व-स्वरूपे प्रतिष्ठालाभसामर्थ्यमपि नावगम्यते। अशुद्धविकल्पयुक्तात्मनस्तु स्थितिरेषा सर्वार्थे न समाना। यथा- उच्चाधिकारसम्पन्नानां तु अशुद्धविकल्पयुक्तानां महापुरुषानां स्थले मन्त्र-पूजा-ध्यानादिः काऽपि विशिष्टा साधनपद्धतिः नापेक्षते। यतो हि परमेश्वरस्य परमाणुग्रहप्राप्तस्य पुरुषस्य विवेकज्ञानं यथाकालं समुपस्थितम्। अतः ते प्रतिबोधयन्ति यत् शिवरूपिनः स्वतःप्रकाशस्यात्मनः प्रकाशक्षेत्रे काऽपि साधना नापेक्षते। अपि च देश-काल-उपाधि-आकार-शब्द-प्रमाण-परिच्छिन्न आत्मनः बहिः अन्य-निरपेक्ष-स्वतन्त्र-आनन्दघन-आत्मनः स्वरूपं तैरुपलब्धम्।

ये जीवात्मनः निम्नभूमौ स्थिताः, ते स्वयम् अखण्डमण्डलाकारं व्याप्तं महाकाशं प्रवेशयितुम् असमर्थाः सन् आत्मस्वरूपादभिन्नां स्वातन्त्र्यशक्तिमिमां अवलम्ब्य अनायासेन तं प्रविष्टाः भवन्ति। अपि च एषा स्वातन्त्र्यशक्तिरेव विम्बप्रतिविम्बात्मकभावसकलस्य मूलाधारः। स्वातन्त्र्यशक्तिरेषा सदाचैतन्यं चिदात्मकं वेति तस्मिन् सर्वदा स्वरूपस्यामर्शनं भवति। आमर्शनस्य मूलं यः परनादः स एव परावागिति रूपेण वेदादिशास्त्रेषु समाम्नातः। स्वररूपिनः परामर्शाः योनिरिति। बीजञ्च योनिश्चेति शक्तेः स्वरूपम्। मायिकायां भूमौ मायातीतायाञ्च विशुद्धविद्यायामेते परामर्शसकलाः कार्यक्षमाः भवन्ति। आत्मसाक्षात्कारकाले परावागेव परामर्शसकलं, शक्तेः एकमात्रं विश्रामस्थलं, अस्यां सकलतत्त्वानि भुवनानि च प्रतिविम्बितानीति समुपलब्धुंयःसमर्थोभवति,स एव तदा निर्विकल्प-भगवत्स्वरूपं लभते।

**अभिनव-प्रणववादे नादतत्त्वम्**

समाधिं विना तत्त्वनिश्चयो न भवतीति श्रीओङ्कारनाथदेवमतम्। नादः सच्चिदानन्दघनज्योतिरिति। ओङ्कारस्य तृतीया मात्रा म-कार एव तस्य स्वरूपम्। अयं म-कार-पादः नादमयः। समाहितात्मनः ब्रह्मणः हृदाकाशे नादोऽयमाविर्बभूव। तस्माच्च ओङ्कारः आविर्बभूव। सोऽकामयत बहुस्यां प्रजायेयेति *तैत्तिरीयश्रुति*मवलम्ब्य श्रीओङ्कारनाथदेवः ज्ञापयति यत् शान्ते तस्मिन् महापारावारे महाकाशे प्रथमस्पन्दनमिदं शब्दब्रह्म ओङ्कारः। महाकाशे प्रणवस्पन्दनम् आकाशः वायुश्चेति। अनन्तरं यदा वायोः प्रधानः कारणांशः सूक्ष्मांशो वा घनीभूतमिष्यति तदा तस्य कार्यांशोऽपि घनीभूतोऽभवत्। आदितः स्तूलाभिव्यक्तिः तेजः। तेजः आलोकरूपेण विस्तृतोऽभवत् इत्यस्माद् तस्य कार्यांशोऽपि घनीभूत्वा जलरूपेण

परिणतोऽभवत्। जलस्य कारणांशः घनीभूतमैच्छत्। अतः तस्य कार्यांशोऽपि घनीभूत्वा मृत्तिकारूपेण सञ्जातः। अतः पाञ्चभौतिकं जगदिदमपि नादस्य घनीभूता मूर्तिरिति श्रीओङ्कारनाथदेवस्य मतिः।

तेनोच्यते - महाकाशे बहु स्यामितिअयंसङ्कल्पःसञ्जातः। तदा तस्याभिन्ना चेतनशक्तिः मणेरिव स्पन्दिता। शब्दं विना स्पन्दनं न भवति। तदादिः शब्द एव ओङ्कारः परप्रणवः। प्रत्येकानां भौतिकानां पदार्थानां मध्ये आकाशः, नादस्पन्दनं, वायुः, ज्योतिश्च विराजन्ते। नादरूपेण प्रणवस्पन्दनमेव भौतिकपदार्थान् यावान् सर्वान् धारयति। तस्य विश्लेषणमपि अभिनवत्वं प्रदर्शयति - जीवसकलस्य सुषुम्नामध्ये आकाशः, नादः तेजोमयी प्रणवरूपिणी कुण्डलिनी शक्तिश्च सूक्ष्मतया विराजन्ते, तस्मात् प्रणवस्पन्दनात् प्राणवायुः स्थूलीभूत्वा स्थूले देहे तं धारयति। हृदि प्राणः, गुह्ये अपानः, नाभौ समानः, कण्ठे उदानः. सर्वाङ्गे व्यानः तं धारयतीति। प्राणोऽयं ७२७२१०२०१ शिरायां प्रशिरायाञ्च शोणितं सञ्चालयति। प्राण एव इन्द्रियगोलके अर्थात् शरीरमध्ये इन्द्रियाणां प्रकाशस्थले वर्तते। तत्फलरूपेण दर्शनं, श्रवणमिति ज्ञानेन्द्रियाणां कर्मेन्द्रियाणाञ्च कार्याणि सम्पद्यन्ते। विपरीतं तु स्पन्दनरूपिणी महाशक्तिरियं अपरप्रणव एव आधिभौतिकविषयरूपेण परिणतो भूत्वा तेषां प्रणवनादस्पन्दनजातानाम् आध्यात्मिकानाम् इन्द्रियाणां भोग्यरूपेण वर्तते। अत्र जीवदेहस्थित श्रोत्रं, त्वक्, चक्षुः, जिह्वा, घ्राणं, वाक्, पाणिः, पादः, पायुः, उपस्थः, मनः, बुद्धिः, चित्तम्, अहंकारः - इमानि सर्वानि वाह्यानि आभ्यन्तराणि चेन्द्रियाणि 'आध्यात्मिकानि'इत्यभिधीयन्ते।एवं प्रणवनाद एव जगद्रूपेण क्रीडति। अपर-प्रणव-नाद-स्पन्दनमिदं परप्रणवस्य मात्रमेकपादे विद्यते। शास्त्रेषु उच्यते परप्रणवः चतुष्पाद इति। तच्चतुर्विधाः पादाः सन्ति - अविद्यापादः, विद्यापादः, आनन्दपादः, तुरीयपादश्चेति। एतेषां मध्ये केवलम् अविद्यापदे अनन्तकोटि-ब्रह्माण्डाः प्रकाशिताः। अतस्तेनोच्यते - जलं घनीभूत्वा यथा हिमशैलं भवति तथा मनुष्यादिः पशु-पक्षिणः, वृक्ष-लताः, सागर-भूधरः सर्वमेव ओङ्कारनादस्य घनीभूता मूर्तिरिति। सर्वमेतद् ओङ्कारनादे ओङ्कारस्पन्दने क्रीडन् विद्यते।[३०] यावन्नाद अवस्थितः तावत् संसार इति तस्य वक्तव्यम्। स्थिरीकृते प्रणवस्पन्दने संसारस्य कोऽपि लेशो न भविष्यति। उपनिषदः तात्पर्यालोचनकाले तेनोच्यते यत् परप्रणवः परब्रह्म इति। अपि च, प्राणः हिरण्यगर्भः, सूत्रात्मा इत्यादयः अपरप्रणवः। अपरप्रणवोऽयं नादः शब्दब्रह्म वेति। *विष्णुपुराणे* शब्दब्रह्मणः परब्रह्मणश्चाधिगम्यता उल्लिखितव्या।[३१] यतः शब्दब्रह्मणि कुशलो भूत्वा परब्रह्मणि एकीभवनं सम्भवति।

नाथसम्प्रदायसमादृतायां *शिवसंहिता*यामपि श्रीओङ्कारनाथदेवस्य नादतत्त्वस्य प्रसङ्गः समर्थितः। तत्र प्रकृत्याः प्रथमं स्पन्दनं शिवरूपो नादाङ्गीभूत अ-उ-म-रूप ओङ्कार इति उच्यते।[३२] *सारदातिलके*ऽपि उक्तं यत् प्रकाशिते शक्त्यवस्थारूपे प्रथमबिन्दौ केवलम् अव्यक्तात्मा-वर्णादिविशेषरहित अखण्डः नादः उत्पन्नः जातः। अपि च सृष्ट्युन्मुखस्य परमशिवस्य उल्लासः केवलमखण्ड अव्यक्तः नादबिन्दुमयः ब्रह्मात्मकः ओङ्कारः।[३३] आचार्येण शिवराम-किङ्कर-योगत्रयानन्देनापि उच्यते यत् आन्तरजगतःवाह्यजगतः उभयोः कारणं परा-पश्यन्ती-मध्यमा-वैखरी एते चतुर्विधाः शब्दाः। शब्द एव आन्तरजगत् तदेव च

बाह्यजगदाकारेण परिणमते।[३४] श्रीओङ्कारनाथदेवमतमपिएतत् समर्थयति। तेनोच्यते- जगदाकारधारणकाले परप्रणवः बिन्दुः, नादः, बीजञ्चैतत् त्रिविधरूपेण विभज्यते, अपि च पुरुषः प्रकृतिः कालश्चेति त्रिविधभावेन विवर्तते। बिन्दुः शिवात्मकः, बीजं शक्त्यात्मकं नादश्च चिदचिदात्मकश्चेति। आदिः शब्द एव ओङ्कारः। तस्य अ-कारः स्पन्दनम्, उ-कारः प्राणः, म-कारश्च शब्दः। एतत्त्रयं न भिन्नम्।[३५]

उल्लेखनीयं यद् दार्शनिकानां मध्ये शब्दाज् जगतः सृष्टिर्विज्ञानमिति मतं शाब्दिकैरपि स्वतन्त्रतया समुपस्थापितम्। एतद्विषयमुपजीव्य नागेश-भट्टः स्वकीये'*मञ्जुषा*' इति ग्रन्थे दीर्घतया वर्णयति। सारतया वक्तव्यं यत् प्रलयावस्थादनन्तरं त्रिया-प्रतिक्रियान्यायेन प्राणीनां सकामानि कर्माणि यदा फलोन्मुखानि भवन्ति तदा सर्वसाक्षिनः परमेश्वरस्य सिसृक्षात्मिका मायावृत्तिः सञ्जाता। तदनन्तरं बिन्दुरूपिनः त्रिगुणात्मकस्य अव्यक्तस्याविर्भावो भवति। शक्तितत्त्वमिदम्। बिन्दोरचिदंशः बीजमिति, चिदचिद्-मिश्रांशः नाद इति, चिदंशश्च बिन्दुरिति कथ्यते। 'अचित्' शब्देनात्र शब्दस्य अर्थस्य चोभयोः संस्काररूपा अविद्या बोद्धव्या। नागेशभट्टमते क्रियाप्रधानावस्था एव नादः। अस्य बिन्दुनादलक्षितस्य पदार्थस्यापरं नाम शब्दब्रह्म इति। श्रीओङ्कारनाथदेवस्य मतं शब्द एव आधिदैविकपदार्थसमूहः। नाद एव आधिभौतिकाः सूर्यचन्द्रग्रहादयः। नाद एव श्रोत्रादि - इन्द्रियाणि च। अपि च नाद एव पराप्रकृतिरूपेण सृष्टस्य जगतः अभ्यन्तरं प्रविश्य जगद् धारयति।[३६] तस्य मते चैतन्यं, शब्दब्रह्म, कुण्डलिनी प्रणवश्च एक एव। नाद एवाग्निः माया बीजञ्चैतत् भूवनत्रयम्। यतश्च नादादर्थाद् ओङ्कारादेव अक्षरसमूहानामुत्पत्तिः, अतः ह-कारोऽपि नादात् सृष्टः।ह-कार उत्पत्तिकारणमिति हेतुत्वात् नादब्रह्म-ओङ्कारः हरिरित्यभिधीयते। अपि च अस्मात् ह-कारात् हरत्वं सर्वात्मकत्वञ्च बोद्धव्यम्। अस्मिन् प्रसङ्गे *रुद्रयामले* प्राप्तमिदं तत्त्वमुल्लेखनीयम्। तत्रोच्यते- प्रणवात् 'हंस' समुत्पन्नः। अस्य हंसस्य वर्णानुक्रमः यदि विपरीतो भवेत् तर्हि सोऽहमिति वर्णक्रमः सञ्जातः। अस्यानुभवस्तु योगीनामपि दुर्लभः। स्वरूपतः ह पुरुष इति, चन्द्रस्वरूपेण च सः प्रकृतिरेव। सा प्रकृतिः भोग्या।श्रीओङ्कारनाथदेवः योगस्य नवपरिचयमुद्बोष्य तस्य च मूलाधारं यन्नादतत्त्वं तत्प्राञ्जलतया प्रदर्शयति। तत्सारमित्थम् - कश्चन यदा मनसः वाचः कथितुमिच्छति, तदा सः वक्ता तस्य अभिलषितार्थे तद्वाचकस्य शब्दस्य प्रयोजितुमिच्छति; तदिच्छायाः प्रयत्नं सञ्जातम्। तत्प्रयत्नादेव मूलाधारे प्राणवायोः परिस्पन्दः जायते। प्राणस्य तस्मात् परिस्पन्दात् सकलशब्दानां मूला कारणभूता निस्पन्दा सूक्ष्मा परावाक् आविर्भूता भवति। इयं परावाक् यदा मूलाधारात् नाभिदेशमागच्छति, तदा तस्मिन् किञ्चिज् ज्ञानस्फुरणं संघटते अतस्तदा सा पश्यन्तीति रूपेण चिह्निता। पश्यन्ती विवक्षितान् पदार्थान् पश्यति। अनन्तरं पश्यन्ती वाक् यदा हृदयदेशम् आगच्छति तदा सा 'मध्यमा'। मध्यमावस्थायां कस्यचनैकस्य विशेषार्थस्य निश्चयबुद्धिः सञ्जाता। मध्यमा वाक् यदा कण्ठताल्वादिस्थानेषु वर्णरूपेणाभिव्यक्ता भवति, तदा सा वैखरी इत्यभिधीयते। वैखरीवाक् वक्तुः श्रोतृसमीपे स्थुलतया गन्तुं शक्नोति। अपि च स्थूला इति वैखरीवाचि वक्तुरभिप्रेतार्थः निहितोऽस्ति। अतः स्थूलं वाचमिमम् आश्रित्य वक्ता स्वाभिप्रायस्यश्रोतृसमीपे आदानप्रदाने समर्थो भवति। तद् विपरीता तु या यात्रा अर्थाद् वैखरी-मध्यमा-पश्यन्ती-परा, सा प्रकृत्या

क्रमशः सूक्ष्मातिसूक्ष्मभूमौ उत्तरणम्। स्थूलात् सूक्ष्मे एतद् गमनमेव योग इति श्रीओङ्कारनाथदेवस्य मननम्। तस्याश्रुतपूर्वम् उन्मोचनम्- जगत् रसतमस्य शब्दब्रह्मणः ओङ्कारस्य घनीभूता मूर्तिरिति। नादब्रह्मसागरे जगद्रूपतरङ्गानि क्रीडति। ....विविधाकारेण परिदृष्टं विश्वमिदं नादब्रह्म भिन्नं न किमपि।[३७] तत्त्वमिदं नाथसम्प्रदायेऽपि समादृतम्, यतः *योगतत्त्ववारिधि*रिति ग्रन्थे उच्यते- कस्मिन्नपि शब्दकार्ये यदा प्रथमा चेष्टा कृता तदा हृदि अन्तःकरणे वा आदौ प्रणव ओङ्कारो वेति शब्द उत्थितः। यदा कोऽपि एकाक्षरः शब्द उच्चार्यते, तदा प्रणवोऽयं ध्वनितो भवति।[३८] कस्मिंश्चन सुरयन्त्रे आघातप्रदानेनैव प्रणवोऽयं ध्वनितो भवति। यावत् देहे प्राणो वर्तते तावत् देहमध्ये शब्दोऽयं ध्वनितो भवति। अनाहतनादश्रवणयोग्यतायामर्जितायां सर्वदा शब्दोऽयं ध्वनितो भवति। यतश्च वयं अपरेशब्दे नितरामाकृष्टाः, अतः शब्दोऽयं न श्रुत अस्माभिः। सृष्टेः प्रथमः शब्दः मन्त्रो वा प्रणवः।

श्रीओङ्कारनाथदेवः तत्तत्त्वस्य विश्लेषणे वदति- ब्रह्माण्डे ब्रह्मा, हिरण्यगर्भ वा समष्टि-महद्वा प्रथमं 'नाम' ततश्च 'रूपम्' इत्याकारेण जगद्रूपेण प्रकाशितो भवति। व्यक्तमिन्द्रियग्राह्यं जगदिदमेव रूपम् ; अस्यान्तराले अनन्त अव्यक्तः स्फोटः वर्तते।[३९] सकलजगदभिव्यक्तिकारणं शब्दब्रह्म स्फोट इति। नामसकलम् अर्थात् भावस्यअनन्त-समवायि-उपादान-स्वरूपम् अनन्तकोटि-स्फोट एव सा शक्तिः; यद्द्वारेण भगवान् प्रथमंआत्मानंस्फोटरूपेण परिणतमकरोत्। अनन्तरं स्थूल-परिदृश्यमान-जगद्रूपेण स्वं परिणतमकरोत्। अस्य स्फोटस्य वाचकः शब्दः केवलम् ॐ। न केनापि विश्लेषणेन वयं तु भावाच्छब्दस्य पृथकीकरणे शक्नुमः।अतः ओङ्काररूपादस्मात् पवित्रतमशब्दाज् जायते जगदिति।

अधुना प्रश्नस्यास्य सम्भावना जायते यत्—यदि श्रूयते नादस्तदा कथमयं नादः निर्गुणः ? तदुत्तरेण श्रीओङ्कारनाथदेवेनोक्तं— पुरुषेण उत्थितः यः शब्दः स सगुणमिति वक्तुं शक्यते; परन्तु यः अनाहतः ध्वनिः स्वतः उत्थितो भवति; यं निवारयितुं कोऽपि न समर्थो भवति, स न सगुणमिति। यः नादः, नादस्य श्रोता अपि सः। स एव नादरूपेण लीलां करोति, अपि च श्रोत्रस्य श्रोत्ररूपेण नादं शृणोति।[४०] अत्र तस्य युक्तिरियम्- परमात्मा यदा निर्गुणस्तदा तस्य नाम ओङ्कारोऽपि निर्गुणः। उल्लेखनीयं यत् नाथसम्प्रदायः यानि शास्त्राणि तेषां तत्त्वविश्लेषणप्रसङ्गे आकररूपेण मर्यादां प्रयच्छति तत्रापि अभिनवप्रणववादस्याचार्यस्य उन्मोचिततत्त्वस्य सौरभं परिलक्ष्यते। तद् यथा— 'नादः परः पुमानीशो निर्गुणो निष्क्रियः शिवः'[४१], 'नाद एव महद्-ब्रह्म परमात्मा परः पुमान्'[४२], 'नादः परमः पुरुषः।नादलिङ्गं शिवात्मकम्'[४३]विशेषतया *योगतारावली*ग्रन्थे उच्यते- 'ब्रह्मरन्ध्रगते वायौ गिरेः प्रस्रवणं भवेत्। शृणोति श्रवणातीतं नादं मुक्तिर्न संशयः॥'[४४]

नादस्य चतुर्विधाः भूमिका इति हठयोगिनः। ताश्च- (१) आरम्भः (२) घटः (३) परिचयः (४) निष्पत्तिरिति। श्रीओङ्कारनाथदेवः *प्रबोधसुधाकर*-ग्रन्थमाकलय्य कथयति यत् यावत् क्षणार्धकालं स्वरूपचिन्तनं क्रियते तावत् दक्षिणकर्णे श्रूयते अनाहतः शब्दः।

'यावत् क्षणं क्षणार्धं वा स्वरूपचिन्तनं क्रियते।
तावद् दक्षिणकर्णे संश्रूयते अनाहतः शब्दः॥'[४५]

तस्य मते सिद्धिः, आरम्भः, स्थिरता, विश्रामः, विश्वासश्चैतानि बीजशुद्धेरुपलक्षणानि एव मनसः परमो नादानुसन्धानः।

उपरते विषये चित्तं यदा शान्तं भवति; यदा किमपि चाञ्चल्यं नास्ति, तदा वेणुशब्दवत् दीर्घतरः अनाहतः शब्दः श्रूयते। नादाभ्यन्तरे यज्ज्योतिः वर्तते; यदि सा दीर्घकालं यावद् अनुभवे स्थायित्वमाप्नोति, चित्तञ्च यदि तस्मिन् विलीनं भवति, तर्हि संसारबन्धनं न पुनर्जायते। अपि च विविध'लय'प्रसङ्गसत्तेऽपि नादानुसन्धानादुत्पन्नः दीर्घस्थायि-परमानन्दानुभवः यः, तस्मिंश्च चित्तस्य यः लयः सएव श्रेष्ठः। सर्वे साधका एव नादज्योतिःमाध्यमेन तस्य स्वरूपं लभन्ते इति श्रीओङ्कारनाथदेवस्य मतिः।[४६]

अभिनवप्रणववादस्य कतिपयमौलिकग्रन्थानां सूत्रेण अवगम्यते यत्- अक्षर ओङ्कार एव जड-चेतनात्मकमिदं विश्वजगत्, 'यच्चान्यत् त्रिकालातीतं तदप्योङ्कार एव।' सकलद्वन्द्वनिरसनार्थं श्रीओङ्कारनाथदेव कथयति- हृदयकमलस्थितः पुरुष-नामधेय-तत्परमवस्तु रसतमम् ओङ्कारब्रह्मइति। नामजपेन यदा षोडशकला अपगता, तदा स अङ्गज्योतिर्द्वारा निखिलं तमः चिरं दूरीकृत्य विकशिते हृत्कमले अवस्थितो भूत्वा प्राणमनःविमोहनकारिणं रागरागिण्यालापं करोतीति। तदा आलोकेन, अमृतेन, अभयेन, आनन्देन च सर्वं पूर्णं भवति; अन्तरे बहिश्च तेन विना अन्यस्य कस्यापि अनुभूतिर्नास्ति।[४७]नाम्नः सूत्रेण नामिना अभिन्नताप्राप्तिर्वा एकीभवनस्य पन्था च प्राप्तिश्चोभयोरेव नादः, विशेषतया ओङ्कारलाभ इति अभिनवप्रणववादस्य राद्धान्तः।

**उत्ससूत्राणि-**

१. शारदातिलकतन्त्र, प्रथमपटल, ७।
२. नाभेरुर्ध्वं हृदिस्थानान्मरुतः प्राणसंज्ञकः। नदति ब्रह्मरन्ध्रान्ते तेन नादः प्रकीर्तितः।
३. आकाशाग्निमरुज्जातो नाभेरुर्ध्वं समुच्चरन्। मुखेऽभिव्यक्तिमायाति यः स नाद इतीरितः॥
४. रामायणमहाभारतादिविविधपुराणेषु।
५, 'आद्यं वर्णकारन्तु उकारञ्चोत्तरे ततः। मकारं मध्यतश्चैव नादान्तं तस्य चोमिति॥' - शिवपुराण, तृतीयाध्याय।
६. तदा सम्भवत्तत्र नादो वै शब्दलक्षणः। ओमोमिति सुरश्रेष्ठाः सुव्यक्तः प्लुतलक्षणः॥- लिङ्गपुराण, सप्तदशाध्याय।
७. आदिमध्यान्तरहितमानन्दस्यापि कारणम्। मात्रास्तिस्रस्त्वर्धमात्रं नादाख्यं ब्रह्म संज्ञितम्॥- तदेव।
८. 'स्वान-निर्घोष-निह्राद-नाद-निस्वान-निस्वनाः। अरवारावसंरावविरावाः....' अमरकोष, स्वर्गवर्ग।
९. य एवायं मुख्यः प्राणः तमुद्गीथमुपासीत, ओमिति हि एष स्वरन्नेति। - छान्दोग्य उपनिषद्, प्रथमपाठक, पञ्चमखण्ड

१०. बृहदारण्यक उपनिषद्, १. ३. १।

११. महानिर्वाणतन्त्र (जगन्मोहन-तर्कालङ्कारः), पृ. ६९, ८०६।

१२. चिन्तया रहितो रुद्रो वाचो यन्मनसा सह। अप्राप्य तं निवर्तन्ते वाच्यस्त्वेकाक्षरेण सः॥

१३. स नादेन विहरति ; प्राणौ वै नादस्तस्मात् प्राणो नदन् सर्वमश्नतीव।

१४. यद् ब्रह्म तज्ज्योतिर्ज्योतिः स आदित्यः, स वा एष ओमित्येतदात्मा।

१५. गतो वो बीजतामेष प्राणिष्वेव व्यवस्थितः। ब्रह्माण्डं ग्रस्तमेतेन व्याप्तं स्थावर-जङ्गमम्॥ नादं प्राणश्च जीवश्च घोषश्चेत्यादि कथ्यते॥ - प्रपञ्चसार, ४र्थ पटल।

१६. अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते, यदिदमद्यते, तस्यैव घोषो भवति, यमेतत् कर्णावपिधाय श्रृणोति, स यदोत्क्रमिष्यन् भवति नैनं घोषं श्रृणोति। - बृहदारण्यक उपनिषद्, ५म अ. ९म ब्राह्मण

१७. स्कन्दपुराण, नागरखण्ड, २६२अ. ७६श्लोक।

१८. 'नादवृद्धिपरा' –जैमिनिसूत्र, १. १. ७।

१९. मीमांसादर्शन, भूतनाथसप्ततीर्थेन सम्पादितः पृष्ठा - ५९।

२०. तेन यत् प्रार्थ्यते जातेस्तद्वर्णादेव लभ्यते। व्यक्तिलभ्यन्तु नादेभ्य इति गत्वादिधीर्वृथा॥ मीमांसा - श्लोकवार्त्तिक, स्फोटवादप्रकरण, श्लोक- २६।

२१. योगसूत्र, ३. १७, व्यासभाष्य

२२. नादस्य क्रमजातत्वान्न पूर्वो नापरश्च सः। अक्रमः क्रमरूपेण भेदवानिव लक्ष्यते॥ - तदेव, श्लोक- ४८
नादैराहितबीजायामन्त्येन ध्वनिना सह। आवृत्ति- परिपाकायां बुद्धौ शब्दोऽवधार्यते॥ - तदेव, श्लोक- ८५।
यः संयोग-विभागाभ्यां करुणैरुपजन्यते। स स्फोटः, शब्दजाः शब्दा ध्वनयोऽन्यैरुदाहृताः॥ - तदेव, श्लोक- १०३।

२३. 'योऽसौ नादात्मकः शब्दः सर्वप्राणिष्ववस्थितः।' तन्त्रालोक, ३य आह्निकः, श्लोक- ११३।

२४. 'शब्दो नादात्मा' - तदेव, जयराजकृता टीका।

२५. 'सच्चिदानन्दविभवात् सकलात् परमेश्वरात्। आसीच्छक्तिस्ततो नादो नादाद् बिन्दुसमुद्भवः॥' सारदातिलक, १.७

२६. सा तत्त्वसंज्ञा चिन्मात्रा ज्योतिषः सन्निधेस्तदा। विचिकीर्षुघनीभूता क्वचिदभ्येति बिन्दुनाम्॥ ४१॥
कालेन भिद्यमानस्तु स बिन्दुर्भवति त्रिधा। स्थूलसूक्ष्मपरत्वेन तस्य त्रैविध्यमिष्यते॥ ४२॥
स बिन्दुनादबीजत्वभेदेन च निगद्यते। तद् विस्तारप्रकारोऽयं यथा वक्ष्यामि साम्प्रतम्॥ ४३॥
बिन्दोस्तस्माद् भिद्यमानाद् रवोऽप्यक्तात्माको भवेत्। स रवः श्रुतिसम्पन्नैः शब्दब्रह्मेति कथ्यते॥ ४४॥ - प्रपञ्चसार, १म पटल।

२७. 'पराद् बिन्दोरित्यनेन शक्त्यवस्थारूपो यः प्रथमो बिन्दुस्तस्मादव्यक्तात्मा वर्णादिविशेषरहितोऽखण्डो नादमात्रं रव उत्पन्नः।' - पदार्थादर्श, १/११।

२८. 'बिन्दु शिवात्मकस्तत्र बीजं शक्त्यात्मकं स्मृतम्। तयोर्योगे भवेन्नादस्तेभ्यो जातास्त्रिशक्तयः॥' - त्रियसार।

२९. श्रीश्रीनादलीलामृतग्रन्थस्य गोपीनाथकविराजकृता भुमिका।

-----

३०. श्रीओङ्कारनाथ-रचनावली, १० म खण्ड. पृ ३-४ द्र. ।

३१. 'द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परञ्च यत्। शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति॥'

३२. कार्यं यत्र विभाव्यते किमपि तत्स्पन्देन सव्यापकं स्पन्दस्चापि तथा जगत् सुविदितः शब्दान्वयी सर्वदा।
सृष्टिश्चैव तथादिमा कृतिविशेषत्वादभूत् स्पन्दिनी शब्दश्चोदभवत्तथा प्रणव इत्योङ्काररूपः शिवः॥

३३. भिद्यमानान् पराद् बिन्दोरव्यक्तात्मा परोऽभवत्। शब्दब्रह्मेति तं प्राहुः सर्वागमविशारदाः॥

३४. शिवरात्रि ओ शिवपूजा ' इति ग्रन्थस्य उपक्रमणिका द्रष्टव्या।

३५. श्रीओङ्कारनाथ-रचनावली, १०म खण्ड, पृ. १०।

३६. तदेव, पृ. १३।

३७. तदेव, पृ. ४४।

३८. योगतत्त्ववारिधि, पृ. २८३-२८४।

३९. श्रीओङ्कारनाथ-रचनावली, १०म खण्ड, पृ., ४५।

४०. श्रीश्रीनादलीलामृत, पृ., १४४।

४१. शिवपुराणं द्रष्टव्यम्।

४२. लययोगसंहिता द्रष्टव्या।

४३. योगशिखोपनिषद् द्रष्टव्या।

४४. योगतारावली, ३०।

४५. प्रबोधसुधाकर, १४४।

४६. श्रीओङ्कारनाथ-रचनावली, १०म खण्ड, पृ.,१४७।

४७. क्षेपार-झुलि, पृ.,१८१।

## सहायक-ग्रन्थपञ्जी


- Bādarāyaṇa. *Brahma-sūtra*. with '*Oṃkārabhāṣya*' (1403 BS)Comm. Of Sītārāmadāsa Oṃkāranātha, published by RaghunāthaKāvya-vyākaraṇatīrtha, Hooghly.
- Banerjee, Muktārāma. (1983). *AdvaitavādasammataṃVākyārthajñānam*. Kolkata: Sanskrit PustakBhandar.
- Bhartṛhari. *Mahābhāṣyadīpikā*. (1988).(Āhnika-II). Ed. G. B. Palsule, Poona: BORI.
- *Vākyapadīya*. (1966).with Vṛṣabhadeva's*Paddhati* and *Vṛtti*. Ed. K. A. SubramaniaIyer, Poona: Deccan College Monograph Series.
- Bhaṭṭa, Kumārila. *Ślokavārttika*. (1978).Ed. Dwarikadas Shastri, Varanasi: Tara Publications.
- BhaṭṭojiDīkṣita. *Śabdakaustubha*. (1933).Ed. GopālaŚāstrī, Varanasi: Chowkhamba.

-----------------------------------------------------------------------------------------------------------------


- *Bṛhadāraṇyakopaniṣad.* (1364 BS).Trans. & Ed. DurgācaraṇaSāṃkhyavedāntatīrtha, Kolkata: Deva SāhityaKuṭīra.
- Chakrabarti,Sadānanda. *MahājīvanerĀlekhya.* (1397 BS).Burdwan: GourīĀśrama, Raniganj.
- *Nāmābhāsa.* (1961).Howrah: Kedāra Bhavana, Bally.
- *Our Master—Sri SriSitaramdasOmkarnath.* (2013).Published by Raj Supe.
- *Chāndogyopaniṣad.* (1333BS).Trans. & Ed. DurgācaraṇaSāṃkhyavedānta-tīrtha, Kolkata: Lotus Library.
- G. S. Rekha. *The Concept of Pranava in Indian Philosophy.* (2018).New Delhi: Kaveri Books.
- Gauḍapāda. *Māṇḍūkyakārikā.* (1984). Ed. DurgācaraṇaSāṃkhyavedānta-tīrtha, Kolkata.
- GaurinathŚāstri. *The Philosophy of Word and Meaning.* (1983).Calcutta (now Kolkata): Calcutta Sanskrit College Research Series.
- JagadīśaTarkālaṃkāra. *Śabdaśaktiprakāśikā*(1980).Vol. I. Ed. & Trans. MadhusūdanaBhaṭṭācārya, Calcutta (now Kolkata): Calcutta Sanskrit College Research Series no. XXCVII, Sanskrit College.
- Jaimini. *MīmāṃsāDarśana.* (1984).with KumārilaBhaṭṭa's*Tantravārttika* and Śabara's commentary. Ed. K. V. Abhyaṅkara and GaṇeśaŚāstrīJośī, Poona: Ānandāśrama.
- *Mīmāṃsāsūtra.* (1916).Ed. Laxman Shastri Dravid, Venares: Vidyavilas Press.
- Jha, Kāmadeva. *Bhartṛharidarśanam.* (2012).Kurukṣetra: Nirmal Book Agency.
- *Mīmāṃsāślokavārttika.* (1979).with Hindi illustration by Durgadhar Jha, Darbhanga: Kameswarasinha Darbhanga Sanskrit University.
- Lakṣmaṇadeśikendra. *Śāradātilakatantram.* (1389 BS).Ed. & Trans. PañcānanaŚāstri, Kolkata: Navabhārata Publishers.
- MaṇḍanaMiśra. *Sphoṭasiddhi.* (1966).K. A. SubramaniaIyer, Poona: Deccan College Building Centenary Series.
- NāgeśaBhaṭṭa. *Sphoṭavāda.* (1977).Ed. with Subodhinī by V. Krishnamacharya, Madras (now Chennai): The Adyar Library and Research Centre.
- NāgeśaBhaṭṭa. *Vaiyākaraṇasiddhāntaparamalaghumañjūṣā.* (1975). Ed. Kapil Deva Śāśtrī, Kurukṣetra: KurukṣetraViśvavidyālayaPrakāśana,
- *Sphoṭavāda.* (1946).Ed. V. Kṛṣṇamācārya, Adyar: Adyar Library.
- Oṃkāranātha, Sītārāmadāsa. *Brahmānusandhāna.* (1368 BS).published by PadmalochanMukhopadhyaya, Howrah, JaiguruKaryalaya, Bally.

- *ŚrīOṃkāranāthaRacanāvalī*[Part-18]. (2018).Publisher- KinkarSamananda, Kolkata: ŚrīguruPrakāśana, MahāmilanaMaṭha.
- *ŚrīOṃkāranāthaRacanāvalī*. [Vol. 18]. (2018).Kolkata: Śrī Guru Prakāśana.
- *ŚrīŚrīNādalīlāmṛta*. (1397 BS). Kolkata: Śrī Guru Prakāśana.
- *ŚrīŚrīPuruṣottama*. (1369 BS). published by RāmarañjanaKāvya-vyākaraṇatīrtha, Kolkata: ŚrīSītārāmaVaidikaMahāvidyālaya.
- *ŚrīŚrīPuruṣottamalīlā*. (1368 BS).published by Śyāmasaṃkara-Vidyābhūṣaṇa, Kolkata: ŚrīSatyadharma Pracārasaṃgraha.
- *Śrīśrīmahāmantrakalpataru*. (1383 BS). Kolkata: Mahamilan Math.
- *SudhārDhārā*. (1373 BS).Trans. in Sanskrit by Durgādāsa Gosvāmī, ŚrīSitārāmaVaidika Mahāvidyālaya, Kolkata.
- Patañjali. *Mahābhāṣyam*. [4 vols.]. (1987).Vārāṇasī: Vāṇīvilāsa Prakāśana.
- with *Pradīpa* of Kaiyaṭa and *Uddyota* of Nāgeśa. (1991). Ed. Bhargav Shastri, Delhi: Chowkhamba Sanskrit Pratisthan.
- *Pātañjala-yogadarśana*. (2002).Ed. HariharānandaĀraṇya, Dharmamegha Āraṇya & Yajñeśvara Ghoṣa, Kolkata: West Bengal State Book Board.
- *Yogadarśana*. with *Tattvavaiśāradī* of Vācaspati Miśraand *Yogavārttika* of Vijñānabhikṣu. (1971). Ed. NārāyaṇaMiśra, Varanasi: Bharatiya Vidya Prakashan.
- Pathak, Ranganath. *Sphoṭa Darśana*. (1967).Patna: Bihar Rāṣtrabhāṣa Pariṣad.
- *Praṇavakalpa*. (1998).Ed. Dhuṇḍhirāja Śāstrī.
- Śārṅgadeva. *Saṃgītaratnākara*. [2 Vols.]. (1978-89). with Eng. Trans., Ed. R. K. Shringi, New Delhi: MLBD.
- *Śrīmadbhagavadgītā*. (2006).Ed. Nalīnikānta Brahma, Kolkata: Navabhārata Publishers.
- with the commentary '*Praṇavapremapīyuṣa*' of Sītārāmadāsa Oṃkāranātha, Vol. I- (1403 BS) & Vol. II –(1392 BS).Kolkata : Śrī Guru Prakāśana.
- *Taittirīya-āraṇyaka*. (1985).Ed. A. M. Shastri & K. Rangacharya, Delhi : MLBD.
- *Vācaspatyam*. Vol. VI. (2006).Comp. by Taranath Tarkavachaspati, New Delhi : Sanskrit Sansthan, Janakpuri.
- Vedavyāsa. *Vedāntadarśana*. (1341 BS). Trans. & Ed. Nalininath Roy & Satishchandra Mukhopadhyay, Kolkata :Vasumati Sahitya Mandir.
- *Viṣṇupurāṇa*. (1372 BS).Trans. Śrījiva Nyāyatīrtha, Kolkata :Āryaśāstra Saṃskaraṇa.


~~~~~~~~~~~
~~~~~~~~~~~

वर्षम्-०४ अङ्कः-०४ शोधज्योतिः
जनवरी-दिसम्बर, २०२२ ISSN-2350-0700

# भारतीयसमाजरचनायां संस्कृतवाङ्मयस्य भूमिका

सञ्जयकुमारः के. ब्रह्मभट्टः[१]

संस्कृतवाङ्ग्यम् अत्यन्तं विशालम् अस्ति। संस्कृतवाङ्ग्यं सद्गुणानां भाण्डागारमस्ति। मानवमूल्यानां महासागरः अस्ति। नीतिमत्तायाः नीधिः अस्ति। भारातीयसमाजस्य निर्माणे संस्कृतवाङ्ग्यस्य भूमिका अद्वितीया असामान्या विरला च अस्ति। समाजरचनायां संस्कृतवाङ्ग्यस्य भूमिका अविस्मरणीया अस्ति। समग्रविश्वे अहिंसा सदाचारः परोपकारः करुणा धैर्यम् इत्यादीनां सद्गुणानां प्रचारप्रसारः संस्कृतवाङ्ग्यस्य योगदानेन एव अस्ति। संस्कृतवाङ्ग्येन प्रदर्शिता प्रसारिता च सद्गुणाः एव सुसभ्य एवं सुसंस्कृतसमाजस्य रचनायाः स्तम्भाः सन्ति।

समाजे जनानां कर्तव्यं किं भवेत् ? का च तेषां भूमिका ? एतत् सर्वं संस्कृतग्रन्थेषु वर्णितम् अस्ति। साहित्यस्य एवं सामाजिकजीवनस्य परस्परं सामीप्यं भवति। अतः आङ्गलभाषायाम् एका उक्तिः दृश्यते। “Literature is a mirror of life”. सुसंस्कृतसमाजनिर्माणं सुसंस्कृतजनानाम् एवं सुशिक्षितजनानां सत्पुरुषाणां च आधारेण भवति। तादृशानां जनानां वर्णनं वयं सुंस्कृतवाङ्मये भर्तृहरेः नीतिशतके पश्यामः

**"दाक्षिण्यं स्वजने दया परिजने शाठ्य सदा दुर्जने**
**प्रीतिः साधुजने नयो नृपजने विद्वज्जने चार्जवम्।**
**शौर्यं शत्रुजने क्षमा गुरुजने कान्ताजने धृष्टता**
**ये चैवं पुरुषाः कलासु कुशलास्तेष्वेव लोकस्थितिः॥”**

संस्कृतवाङ्ग्यस्य एकैकं सुभाषितं समाजरचनायाः इष्टिकारूपेण वर्तते। Sanskrit literature has helped human being live ethically and virtuously in the society. संस्कृतवाङ्ग्ये वर्णितं रामस्य जीवनचरित्रं दृष्ट्वा एव समाजे रामराज्यस्य कल्पना आगता अस्ति। भारतीयसमाजरचनायां षोडशसंस्काराः वर्णव्यवस्था आश्रमव्यवस्था च संस्कृतवाङ्ग्यस्य भूमिकायाः उत्तमानि उदाहरणानि सन्ति। संस्कृतवाङ्ग्येन प्रदत्ता धर्मार्थकाममोक्षाणां च विचारधारा भारतीयसमाजस्य

[१] *ब्रह्मर्षिसंस्कृतमहाविद्यालयः, नडियादः, मो. 9427854374*

आधारस्तम्भ इव अस्ति। भारतीयसमाजरचनायां मनुस्मृत्याः महत्त्वम् अधिकम् अस्ति। भारतीयसमाजे मनुस्मृत्याः प्रभावः विशेषः अस्ति। संस्कृतवाङ्मयेन प्रादुर्भूता आचारग्रन्थाः भारतीयसमाजनिर्माणस्य मूलम् अस्ति।

संस्कृतवाङ्मयस्य ग्रन्थानाम् अध्ययनेन वयं सच्छिक्षणं सद्विचारं सद्वर्तनं सद्‌गुणं च प्राप्नुमः। समाजे एतानि आदर्शमूल्यानि आवश्यकानि सन्ति। " True education makes a man physically healthy, mentally peaceful, emotionally balanced and spiritually matured."

सुसंस्कृतसमाजस्य आधारः समाजस्य शिक्षणव्यवस्थाया उपरि अस्ति। True education is a backbone of a cultured society and that true education can be derived from Sanskrit Literature. शिक्षणक्षेत्रे संस्कृतवाङ्मयस्य प्रदानं प्रशंसनीयं गौरवपूर्णं च अस्ति।

भारतीयसंस्कृत्याः मूलं तु वेदाः सन्ति। वेदाः संस्कृतभाषायां सन्ति। बहवः संस्कृतग्रन्थाः यथा रामायणं महाभारतं पुराणानि इत्यादयः समाजे कथं वर्तितव्यम् इति शिक्षयन्ति। अतः एका उक्तिः प्रसिद्धा अस्ति। “रामादिवत् वर्तितव्यम्। न रावणादिवत्” इति। समाजे संस्कृतवाङ्मयस्य सर्वेषु क्षेत्रेषु योगदानम् अस्ति। भारतीयसंस्कृत्याः प्रभावः भारतीयसमाजे प्रबलरूपेण अस्ति। एवं च भारतीयसंस्कृत्याः मूलं संस्कृतम् अस्ति। अतः कथ्यते- 'A language is a vehicle of the civilization.' मातृदेवो भव। पितृदेवो भव। आचार्यदेवो भव। जननी जन्मभूमिश्च स्वर्गादपि गरीयसी। यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः। एताः सूक्तयः सुसंस्कृतसमाजं निर्मातुं प्रेरयन्ति। तथा च मूल्यरूपेण प्रस्थापिताः भवन्ति।

सद्वर्तनं सच्चरितं सदाचारं च सामाजरचनायाः आवश्यकानि अङ्गानि सन्ति। अतः महाभारते "आचारः प्रथमो धर्मः”। संस्कृतवाङ्मये धर्मः इत्युक्तेः अस्माकं नैतिककर्तव्यम्। अस्माभिः समाजे कथं वर्तितव्यम् इति सद्ग्रन्थाः प्रदर्शयन्ति। अतः समाजरचनायां तेषां महद्योगदानम् अस्ति।

संस्कृतवाङ्मयस्य धर्मग्रन्थेषु काव्येषु नाटकेषु नीतिकाव्येषु महाकाव्येषु दशर्नशास्त्रेषु भिन्नभिन्नरीत्या समाजे साफल्यपूर्णं धर्मयुक्तं च जीवनं कथं यापनीयम् इति सुष्ठु प्रर्दशितम् अस्ति। यथा रामचरितमानसे तुलसीदासेन लिखितम् अस्ति।

**परहित सरिस धरम नाहि भाई।**
**परपीडा सम नहि अधमाई॥**

वेदव्यासेनापि उक्तम्

**अष्टादशपुराणेषु व्यासस्य वचनद्वयम्।**
**परोपकारः पुण्याय पापाय परपीडनम्॥**

अत्र परोपकारः समाजे एकमूल्यरूपेण तैः प्रस्थापितः। राष्ट्रनिमार्णस्य समाजनिमार्णस्य च प्रक्रियायां रामायणं महाभारतं च मुख्यौ आधारौ स्तः। रामायणे यानि यानि पात्राणि निरूपितानि तानि समाजे आदर्शरूपाणि सन्ति।

अस्माकं राष्ट्रस्य इतिहासं, संस्कृतिं, धर्मं, परंपरां च ज्ञातुं आधारभूतं वैदिकवाङ्मयम् अस्ति। वेदानां विचाराः समग्रमानवजातिम् उन्नत्याः मार्गे नयन्ति। यथा एकं सद्विप्राः बहुधा वदन्ति। सत्यं वद। धर्मं चर। सुचारुसमाजव्यवस्थायाः चरित्रचित्रणं संस्कृतवाङ्मयेन सम्यक् प्रदर्शितम् अस्ति। अतः वयं कथयितुं शक्नुमः यत् संस्कृतवाङ्मयस्य भूमिका राष्ट्रनिमार्णे समाजनिर्माणे च अविस्मरणीया अनूपमा अद्वितीया च अस्ति।

अन्ते एका पंक्तिः मम मनसि आगच्छति।

**“भारतभूषा संस्कृतभाषा विलसतु हृदये हृदये।**
**संस्कृतिरक्षा राष्ट्रसमृद्धिर्भवतु हि भारतदेशे॥"**

~~~~~~~~~~~
~~~~~~~~~~~

वर्षम्-०४ अङ्कः-०४ शोधज्योतिः
जनवरी-दिसम्बर, २०२२ ISSN-2350-0700

# पञ्चाङ्गस्य सैद्धान्तिकस्वरूपम्

डॉ. नित्यानन्द ओझा[१]

अस्माभिरवगम्यते यत् आकाशस्थानां नक्षत्रग्रहपिण्डानां प्रभावं मानवजीवनोपरि प्रत्यक्षाप्रत्यक्षरूपेण भवत्येव। एतस्य प्रभावस्य निरूपणं यस्मिन् शास्त्रेऽस्ति तज्ज्योतिषशास्त्रमिति उच्यते। अस्य शास्त्रस्य प्रणयनं ब्रह्मणा वेदविहित-कार्याणां सम्पादनार्थं कृतमिति। वेदे तु जगतः सर्वेऽपि विषयाः सन्निविष्टाः। नात्र कश्चिदपि विषयोऽनुपलभ्यो यथातथ्येनान्वेषयतां विदुषाम्, परन्तु सामान्यतया वेदस्य मुख्यप्रयोजनं यज्ञसम्पादनं, यागाश्च वेदवाक्यांशैरेव कालाधीनाः सिद्ध्यन्ति अर्थात् कालविशेष एवायोजिता यागाः साफल्यमाप्नुवन्ति। अत एव परम्परायामस्य वेदाङ्गत्वेन वर्णनमुपलभ्यते। यथाह भास्करः -

वेदास्तावद्यज्ञकर्मप्रवृत्ताः यज्ञाः प्रोक्तास्ते तु कालाश्रयेण।
शास्त्रादस्मात् कालबोधो यतः स्याद्वेदाङ्गत्वं ज्योतिषस्योक्तमस्मात्॥[२]

सकलेऽस्मिन् ब्रह्माण्डगोले सृष्टेर्मूलमन्त्रस्य भगवतो वेदस्य व्याकरणादीनि वैधकर्मणि विधीयमानसहायकानि षडङ्गानि सन्ति। तेषु षट्ष्वङ्गेष्वपि प्रधानभूतं नेत्रस्वरूपं ज्योतिषं मूर्ध्नि संस्थितम्-

यथा शिखा मयूराणां नागानां मणयो यथा।
तद्वद्वेदाङ्गशास्त्राणां ज्योतिषं मूर्ध्नि संस्थितम्॥[३]

न केवलं वेदविहिता यज्ञादयः अपितु वेदातिरिक्ताः अन्ये व्यवहारिकपक्षा अपि कालाधीनाः भवन्ति। यथा आजन्ममृत्युपर्यन्तसंस्काराणां, लौकिकव्यवहारे धर्मकृत्य-पर्व-स्नान-दान-व्रतादि-सहितानां सर्वेषां संस्काराणां निर्धारणं नियतेनैव कालेन अयन-मास-पक्ष-तिथि-वार-नक्षत्र-करण-योग-राशि-लग्नादिवशाद् भवति अर्थात् एतानि व्यवहारिककार्याणि पञ्चाङ्गशुद्धिकालद्वारा एव अनुष्ठीयन्ते। एतेषु विशेषकार्यसम्पादनार्थं कालनिर्धारणभूतावयवेषु मुख्यानि तिथि-वार-नक्षत्र-योग-करणानीति यत्र शाकल्येन प्रतिपादितानि भवन्ति तदेव पञ्चाङ्गम्। अर्थात् एतस्मिन् वेदस्य चक्षूरूपात्मके कालविधायक-ज्योतिषशास्त्रे तिथि-वार-नक्षत्र-योग-करणानां समाहारः पञ्चाङ्गसँज्ञया व्यवह्रियते

---

*[१] सहायकाचार्यः, ज्योतिष विभागः, श्रीसोमनाथसंस्कृतविश्वविद्यालयः, वेरावलम्*

*[२] सिद्धान्तशिरोमणिः अ.१ श्लोकसं.९ व्याख्याकार- पं गिरिजा प्रसाद द्विवेदी, प्रकाशक- चौखम्भा विद्याभवन, संस्करण-२००७*

*[३] वेदाङ्गज्योतिषम् श्लो.सं. ४ व्याख्याकारः- शिवराज आचार्यः कौण्डिन्न्यायनः प्रकाशक- चौखम्भा विद्याभवन वाराणसी संस्करण-२००५*

एतस्य महत्त्वमस्माभिः प्रायशः सर्वत्र दरीदृश्यते तद्यथा-

तिथिर्वारनक्षत्रे योगः करणमेव च।
पञ्चाङ्गस्य फलं श्रुत्वा गंगास्नानफलं लभेत्॥
जानाति काले पञ्चाङ्गं तस्य पापं न विद्यते।
तिथेस्तु श्रियमाप्नोति वारादायुष्यवर्द्धनम्॥
नक्षत्राद्धरते पापं योगाद्रोगनिवारणम्।
करणात्कार्यसिद्धिः स्यात् पञ्चाङ्गफलमुच्यते॥

अतो पञ्चाङ्गसाधनोपयोगत्वात् तदानयनस्य ज्योतिषसिद्धान्तपक्षः समीक्ष्यते। प्रायः सर्वेषु पञ्चाङ्गेषु तिथिनक्षत्रयोगानां साधनं करणपक्षीयगणेशदैवज्ञकृतग्रहलाघवेन कृतो दरीदृश्यते, प्रस्तूयते रविचन्द्रस्पष्टाधिकारोक्तं पञ्चाङ्गसाधनम्, यथा-

**''भक्ता व्यर्कविधोर्लवा यमकुभिर्याता तिथिः स्यात् फलं**
**शेषं यातमिदं हरात् प्रपतितं भोग्यं विलिप्तास्तयोः।**
**भुक्त्योरन्तरभाजिताश्च घटिका यातैष्यकाः स्युः क्रमात्**
**पूर्वार्द्धे करणं बवाद्गततिथिर्द्विघ्न्यद्रितष्टा भवेत्॥**
**तत्सैकं त्वपरे दलेऽथ शकुनेः स्युः कृष्णभूतोत्तरा-**
**दर्धाच्चाऽथ विधोश्च सार्कसितगोर्लिप्ताः खखाष्टोद्धृताः।**
**याते स्तो भयुती क्रमाद्गगनषण्णिघ्ने गतैष्यै तयो-**
**रिन्दोर्भुक्तिहृते जवैक्यविहृते यातैष्यनाड्यः क्रमात्॥''[४]**

जगतप्रसिद्धमिदं पञ्चाङ्गसाधनार्थसूत्रम्, प्रसङ्गात् सूर्यसिद्धान्तस्य प्रस्तूयतेऽत्र मूलपाठः-

**''भभोगोऽष्टशतीलिप्ताः खाश्विशैलास्तथा तिथेः।**
**ग्रहलिप्ता भभोगाप्ता भानि भुक्त्या दिनादिकम्॥**
**रवीन्दुयोगलिप्ताश्च योगा भभोगभाजिताः।**
**गतगम्याश्च षष्टिघ्न्यो भुक्तियोगाप्तनाडिकाः॥**
**अर्कोनचन्द्रलिप्तास्तु तिथयो भोगभाजिताः।**
**गता गम्याश्च षष्टिघ्न्यो नाड्यो भुक्त्यन्तरोद्धृताः॥''[५]**

---

[४] *ग्रहलाघवम् करणम्, रविचन्द्रस्पष्टाधिकारः श्लो.स.८-९ व्याख्याकार- प्रो. रामचन्द्र पाण्डेय, प्रकाशक- चौखम्भा संस्कृत सीरीज आफिस वाराणसी, संस्करण-१९९४*

[५] *सूर्यसिद्धान्तः स्पष्टाधिकारः श्लो. सं.६४-६६ व्याख्याकार- डॉ.सत्येन्द्र मिश्र प्रकाशक- चौखम्भा संस्कृत भवन वाराणसी संस्करण-२००८*

इदानीं अनेन सिद्धान्तेन क्रमेण पञ्चाङ्गस्य अङ्गानां परिचयपुरस्सरं सैद्धान्तिकस्वरूपमुपस्थाप्यते-

**तिथिसाधनम्-**

तनोतीति तिथिः अर्थात् विस्तारयति चद्रकलामिति तिथिः,तन्यते चन्द्रकलयेति वा।

३६० अंशात्मिकायां ग्रहकक्षायां भ्रमणवशाद्यदि सूर्यचन्द्रमसोर्गत्यन्तरं द्वादशांशतुल्यं भवति तर्हि एका तिथिरुत्पद्यते। अनेन ३६०°÷१२°= ३० तिथयः एकस्मिन् मासे भवन्ति। एवमेव एकस्मिन् चन्द्रमासे तिथयस्त्रिंशत् शुक्लकृष्णपक्षयोः क्रमेण प्रतिपदातः पूर्णिमान्तममान्तं यावच्च भवति यथा-

प्रतिपच्च द्वितीया च तृतीया तदनन्तरम्।
चतुर्थी पञ्चमी षष्ठी सप्तमी चाष्टमी तथा॥
नवमी दशमी चैवैकादशी द्वादशी ततः।
त्रयोदशी ततो ज्ञेया ततः प्रोक्ता चतुर्दशी।
पौर्णिमा शुक्लपक्षे तु कृष्णपक्षे त्वमा स्मृता॥[६]

वस्तुतस्तु अमावस्यायां तिथौ सूर्यचन्द्रमसोः स्थितिः एकस्मिन्नेव बिन्दौ भवति- "तुल्यराश्यादिभिः स्यातामामावस्यान्तकालिकौ"[७] इति वचनात् अमान्तकालिकौ रविचन्द्रौ राशिचक्रे राश्यादिभिः तुल्यौ स्याताम्। अतो अमावस्यातिथितः चान्द्रमासस्य प्रवृत्तिः भवति। अनेन अमान्तादमान्तं ३० तिथयः ३६० अंशाश्च भवन्ति। अत एव एकस्याः तिथेः अंशात्मकमानं $\frac{३६०}{३०}$ = १२अंशाः। अतोऽत्र-

∵१अंशः =६०कलाः

∴१२अंशाः╳ ६० कलाः = ७२० कलाः = १ तिथिः।

तिथेः साधनक्रमे स्पष्टचन्द्रात् स्पष्टसूर्यं विशोधनात् याः शेषकलाः भवन्ति तासु तिथेः कलात्मकमानैः भागं कार्यं तदा या लब्धिः आगच्छेत् सा गततिथेः संख्या भवेत्। तत्र यत् शेषमानं प्राप्तं तत् वर्तमानतिथेः गतकलानां मानं ज्ञेयम्। अनन्तरं तिथेः कलात्मकमानेन(७२० कलाभिः) वर्तमानतिथेः गतकलात्मकमानं विशोधनेन वर्तमानतिथेः ऐष्यमानं भवेत्। ततः यातैष्यमानयोः योजनेन तिथेः पूर्णमानं भवेदिति। अत्र सूत्रात्मकरूपेण एतस्याः ज्ञानं कर्तुं शक्यते यथा-

तिथिसाधनार्थं सूर्यान्तरितचन्द्रमसः कलाः तिथिभोगः720 कलया भक्ता लब्धिः गततिथिः स्यादिति। यतोहि तिथिनाम चान्द्रदिवसम्। तत्तु रविचन्द्रयोः प्रतिद्वादशांशान्तरेण तुल्यं भवति।

---

[६] *मुहूर्तगणपतिः तिथिप्रकरणम् श्लो.सं. १-२-१/२ व्याख्याकारः –मुरलीधर चतुर्वेदी प्रकाशन- मोतीलाल वनारसी दास संस्करण वर्षम्- १९८८*

यतश्चन्द्रार्कयोः संगमकालादन्यसंगमकालं यावद्धांशमितास्त्रिंशतिथिभुक्ता भवन्ति, अतो युक्तियुक्तमेवोक्तं भास्करेण-

**''रवीन्द्वोर्युते संयुतिर्यावदन्या विधोर्मासः''[८]**

अतोऽमान्तादग्रे शीघ्रगत्याचन्द्रचलनात्तयोः 12 भागांतरांशं यावत् शुक्लप्रतिपत्तिथिः, 24 अंशान्तरतुल्ये द्वितीया एवञ्च क्रमेण यदा 180 भागान्तरांशास्तदा पूर्णिमा, 180 तः 192 भागं यावत्प्रतिपत्कृष्णा। अतो स्पष्टमेवास्ति 12 भागाः = 720 कला इति। गततिथिलब्धिः स्यात् यदा यच्छेषं 60 गुणितं रविचन्द्रगत्यन्तरेण भाजिते सति वर्त्तमानतिथेः गतगम्यमानं भवति। अर्थात् चन्द्रार्कयोः राश्यादिमानान्तरितफलं कलादिकं कृत्वा 720 कलाभिर्भक्ता लब्धिगततिथिसंख्या शेषश्च वर्तमानतिथेः गतकला भवति। गतकलाः 720 कलाभिर्विशोधिता शेषम् ऐष्यकला भवति, गतकलाः 60 भिर्गुणिता रविचन्द्रगत्यन्तरकलाभिर्भाजिता गतमानं भवति तथा च ऐष्यकलाः 60 भिर्गुणिता रविचन्द्रगत्यन्तरेण भाजिता ऐष्यमानं भवति। द्रष्टव्यमत्र सूत्ररूपेण-

$$\text{स्पष्टचन्द्रः - स्पष्टसूर्यः} = \frac{\text{शेषकला}}{720} = \text{लब्धिगतिथिः।}$$

शेषं वर्त्तमानतिथिकलाः।

720-शेषकलाः = ऐष्यकलाः।

$$\frac{\text{शेषगतकलाः x60}}{\text{चन्द्रगतिः}-\text{सूर्यगतिः}} = \text{गतघट्यादिमानम्।}$$

$$\frac{\text{ऐष्यकलाः x60}}{\text{चन्द्रगतिः}-\text{सूर्यगतिः}} = \text{ऐष्यघट्यादिमानम्।}$$

एकस्मिन् चान्द्रमासे त्रिंशत्तिथयो भवन्ति। चान्द्रमासं हि अमान्तादमान्तं भवति। अतोऽनुपातः क्रियते-

30 तिथिषु 21600 चक्रकलास्तदा एकस्यां तिथौ कियत्यः? इति।

$$\frac{21600 \text{ x } 1}{30} = 720 \text{ कलाः एकतिथेर्मानं लब्धम्।}$$

**भुक्तभोग्यज्ञानार्थमनुपातः -** यदि 720 कलाभिरेकातिथिस्तदा सूर्यचन्द्रान्तरकलाभिः किमिति?

$$\frac{1\,x\ (\text{स्पष्टचन्द्रकलाः}-\text{स्पष्टसूर्यकलाः})}{720} = \text{लब्धिः गततिथिः।}$$

शेषं वर्त्तमानतिथेः भुक्तकलाः। 720 - भुक्तकला = भोग्यकलाः।

---

[८] *सिद्धान्तशिरोमणिः अ.१ श्लोकसं.१९ व्याख्याकार- पं गिरिजा प्रसाद द्विवेदी, प्रकाशक- चौखम्भा विद्याभवन, संस्करण-२००७*

**पुनरनुपातः -** यदि सूर्यचन्द्रगत्यन्तरकलाभिः 60 घटिकास्तदाभुक्त-भोग्यकलाभिः किमिति? तदा-

$$\frac{60\text{x}\text{भुक्तकलाः}/\text{भोग्यकलाः}}{\text{स्पष्टचन्द्रगतिः}-\text{स्पष्टसूर्यगतिः}}$$ = भुक्तभोग्यमाने, इतिसिद्धम्।

सूर्यचन्द्रयोरन्तरमानेन तिथीनां ज्ञानं अधोनिर्मितेन चक्रेण सम्यक्तया ज्ञातुं शक्यते-

| सूर्यस्य अंशाः | चन्द्रस्य अंशाः | सूर्यचन्द्रयोः अंशान्तरम् | तिथयः |
|---|---|---|---|
| १° | १३° | १२° | प्रतिपदा |
| २° | २६° | २४° | द्वितीया |
| ३° | ३९° | ३६° | तृतीया |
| ४° | ५२° | ४८° | चतुर्थी |
| ५° | ६५° | ६०° | पञ्चमी |
| ६° | ७८° | ७२° | षष्ठी |
| ७° | ९१° | ८४° | सप्तमी |
| ८° | १०४° | ९६° | अष्टमी |
| ९° | ११७° | १०८° | नवमी |
| १०° | १३०° | १२०° | दशमी |
| ११° | १४३° | १३२° | एकादशी |
| १२° | १५६° | १४४° | द्वादशी |
| १३° | १६९° | १५६° | त्रयोदशी |
| १४° | १८२° | १६८° | चतुर्दशी |
| १५° | १९५° | १८०° | पूर्णिमा |
| ३०° | ३९०° | ३६०° | अमावस्या |

**नक्षत्रसाधनम्**

न क्षरति चलतीति नक्षत्रमिति।अर्थात् यस्य क्षरणं ह्रासं वा न भवति। ज्योतिषशास्त्रे ग्रहनक्षत्ररूपाङ्गयोः गतिद्वयमेव वर्तते- स्थिरत्वं चलत्वञ्च। तत्र ग्रहाः चलत्वेन नक्षत्राणि च स्थिरत्वेन अवगम्यन्ते। अतोऽत्र नक्षत्राणां स्थिरतायाः ह्रासः क्षरणं वा न भवति, न च उत्पद्यते।

वस्तुतस्तु आकाशे वर्तमानानां तारकाणां समूहः नक्षत्रमिति। सूर्यभ्रमणवृत्तस्य (राशि-मण्डलस्य) तुल्याः द्वादशविभागाः क्रियन्ते। ते एव' १२ राशयः भवन्ति। अस्य राशि-मण्डलस्य एव तुल्याः सप्तविंशतिः

विभागाः सप्तविंशतिः नक्षत्राणि इति उच्यन्ते। एतेषु सप्तविंशत्यां विभागेषु प्रतिविभागं यावन्तः तारकाः आयान्ति तेषां समूहः एव नक्षत्रम् इति उच्यते। एतेषां तारकाणां रेखाभिः योजनेन या आकृतिः उत्पद्यते तदनुसारेण तस्य नक्षत्रस्य नाम आचार्यैः निर्धारितम्।

किन्तु क्वचित् अष्टाविंशतिसंख्यात्मकानां नक्षत्राणामपि उल्लेखः क्रियते। अत्र ध्यातव्यमस्ति यत् नक्षत्राणि तु सप्तविंशतिः एव भवन्ति किन्तु कुत्रचित् प्रयोजनवशात् यथा अष्टोत्तरीदशादिसाधने अष्टाविंशतिः नक्षत्राणां गणना क्रियते। नक्षत्राणाम् अष्टाविंशतिसंख्याग्रहणे कारणमेतत् वक्तुं शक्यते यत् क्रान्तिवृत्तस्य सप्तविंशतिभागं तथा तस्मिन् भागे स्थितान् तारकान् च अधिकृत्य नक्षत्रमिति नामकरणं महर्षिभिः कृतमिति प्रतीयते। क्रमेऽस्मिन् यदा उत्तराषाढाश्रवणेतिनक्षत्रद्वयम् अवलोक्यते, तत्र उत्तराषाढानक्षत्रस्य भागे द्वौ तारकौ कथितौ, श्रवणस्य च भागे त्रयः तारकाः उल्लिखिताः वर्तन्ते।

अनयोः उत्तराषाढाश्रवणयोः सन्धिस्थलेऽपि अतिरिक्ताः त्रयः तारकाः उल्लिखिताः सन्ति। एतेन अनुमीयते यत् उत्तराषाढाश्रवणनक्षत्रयोः तारकान् अतिरिच्य तयोः सन्धिक्षेत्रे एव नक्षत्रवत् तारकाणां समूहस्य दर्शनात् तत्स्थलमपि नक्षत्ररूपेण ग्रहणीयं किन्तु नक्षत्रस्य कृते क्रान्तिवृत्तीयस्य सप्तविंशतिभागस्य प्राधान्यात् तत्र तावन्मितभागस्य अभावात् तत्सन्धिस्थलं नक्षत्रसंज्ञया न व्यहृतम्। किन्तु योगतारकाणां संख्या नक्षत्रसमानत्वात् नक्षत्रवच्च तस्य निश्चयेन प्रभावोत्पादकं मत्वा विबुधैः कुत्रचित् तदपि अष्टाविंशतितमं नक्षत्ररूपेण स्वीकृतमिति। एवं प्रकारेण क्रान्तिवृत्तस्य सप्तविंशतितमस्य भागस्य नक्षत्रसंज्ञा सर्वत्र प्रमाणिकरूपेण स्वीक्रियते, अतः नक्षत्राणां संख्या सप्तविंशतिः एव अस्ति।

नक्षत्राणां नामानि इत्थं सन्ति –

| | | | |
|---|---|---|---|
| १. अश्विनी | ८. पुष्यम् | १५. स्वाती | २२. श्रवणः |
| २. भरणी | ९. आश्लेषा | १६. विशाखा | २३. धनिष्ठा |
| ३. कृत्तिका | १०. मघा | १७. अनुराधा | २४. शतभिषक् |
| ४. रोहिणी | ११. पूर्वा-फाल्गुनी | १८. ज्येष्ठा | २५. पूर्वा-भाद्रपद् |
| ५. मृगशिरा | १२. उत्तरा- फाल्गुनी | १९. मूलम् | २६. उत्तरा- भाद्रपद् |
| ६. आर्द्रा | १३. हस्तः | २०. पूर्वा-षाढा | २७. रेवती |
| ७. पुनर्वसु | १४. चित्रा | २१. उत्तरा-षाढा | |

नक्षत्रसाधनक्रमे नक्षत्रस्य सकला भोगकलाः 800 कलाः भवति; यतो हि सप्तविंशतिविभागात्मकस्य क्रान्तिवृत्तस्य 21600 कलाः भवन्ति अत एव 21600÷27=800 तथा च तिथिरेका भोगकलाः 720 कलाः भवति। स्फुटग्रहस्य राश्यादिमानकलाः नक्षत्र-भोग 800कलाभिः भाजिता लब्धिः गतनक्षत्रं भवति। अत्र शेषो यल्लब्धं तद्वर्त्तमाननक्षत्रभुक्तकलया ग्रहगत्या वा

गतगम्यदिनादिसाध्यम् अर्थाच्छेषं ग्रहगत्याभाजितं साम्प्रतिकनक्षत्रस्य भुक्तदिनादिमानं भवति शेषकला 800 भिर्विशोधिता शेषे ग्रहगतिभक्ता भोग्यदिनादिमानं भवति।

नक्षत्रसाधनम्-

$\frac{\text{स्फुटग्रहकलाः}}{800}$ = लब्धिः = गतनक्षत्रसंख्या।

शेषं वर्त्तमाननक्षत्रस्य गतमानम्।

800 - शेषं = ऐष्यमानम्।

$\frac{\text{गतमानम्}}{\text{ग्रहगतिकलाः}}$ = वर्त्तमाननक्षत्रस्य गतघट्यादिमानम्।

$\frac{\text{ऐष्यकलाः}}{\text{ग्रहगतिकलाः}}$ = वर्त्तमाननक्षत्रस्य ऐष्यघट्यादिमानम्। इति।

**नक्षत्रसाधनोपपत्तिः-** एकस्मिन् भचक्रे 27 नक्षत्राणि भवन्ति, अतोऽत्रानुपातेनैकनक्षत्रकलामानज्ञानार्थम्-

यदि 27 नक्षत्रेषु 21600 चक्रकलास्तदा एकनक्षत्रे कियत्यः?

= $\frac{21600 \times 1}{27}$ = 800 = एकनक्षत्रसम्बन्धितकलाः।

**एवं प्रकारेण ग्रहाणां गतगम्यादिज्ञानार्थमनुपातः-**

यदि 800 भभोगकलाभिरेकं नक्षत्रं तदाऽभीष्टग्रहकलाभिर्कियत्यः?

= $\frac{1\text{x}\text{अभीष्टग्रहकलाः}}{800}$ = गतनक्षत्रसंख्या। शेषं वर्तमाननक्षत्रगतकलाः।

= 800-गतकलाः = भोग्यकलाः।

**गतगम्यादिज्ञानार्थमनुपातः-** यदि ग्रहगतिकलाभिरेकं दिनं तदा नक्षत्रस्य गतकलाभिः गम्यकलाभिः किमिति?

= $\frac{1\text{x}\text{गतकलाः/गम्यकलाः}}{\text{ग्रहगतिकलाः}}$ = लब्धिः वर्त्तमाननक्षत्रभुक्तभोग्यमानेइति सिद्धम्।

**योगः-**

सूर्यचन्द्रयोः गत्योः योगः योग इति उच्यते। अनयोः सूर्यचन्द्रयोः गतियोगेन २७ योगाः उत्पद्यन्ते-

**विष्कम्भः प्रीतिरायुष्मान् सौभायं शोभनाभिधः।**
**अतिगण्डः सुकर्माख्यौ धृतिः शूलाभिधानकः॥**
**गण्डो वृद्धिर्ध्रुवश्चाथ व्याघातो हर्षणाभिधः।**
**वज्रं सिद्धिर्व्यतीपातो वरीयान् परिघः शिवः॥**
**सिद्धः साध्यः शुभः शुक्लो ब्रह्मा चैन्द्रोऽथ वैधृतिः।**
**योगानां ज्ञेयमेतेषां स्वनामसदृशं फलम्॥**[१]

---

[१] *मुहूर्तगणपतिः योगप्रकरणम् श्लो.सं.१-३ व्याख्याकारः – मुरलीधर चतुर्वेदी प्रकाशन- मोतीलाल वनारसी दास संस्करण वर्षम् १९८८*

योगसाधनार्थं रविचन्द्रकलानां योगः योगसंज्ञया ज्ञायते, अतो रविचन्द्रकलाः भभोगेन 800 कलाभिर्भक्ता यल्लब्धिः तद्विष्कुंभादिगतयोगो भवति। यच्छेषमवशिष्टं 60 भिरभ्यस्तं रविचन्द्रगतियोगेन भक्तं तद्वर्त्तमानयोगस्य गतगम्यकालः भवति। एवं वक्तुं शक्यते यद्-

क. शेषकलाः 60 भिर्गुणिता रविचन्द्रगतियोगभक्ता गतकला इति।

ख. शेषकलाः 800 कलयाशोधिताऽवशिष्टकलास्ताः 60 भिर्गुणिता रविचन्द्रगतियोगभक्ता तद्वर्त्तमानयोगगम्यकला इति।

योगसाधनम्-

$$\frac{\text{स्पष्टचन्द्रः + स्पष्टसूर्यः}}{800} = \text{लब्धिः} = \text{गतयोगसंख्या}$$

शेषं वर्त्तमानयोगस्य गतकलाः।

800 - शेषं = वर्त्तमानयोगस्य ऐष्यकलाः।

$$\frac{\text{ऐष्यकलाः} \times 60}{\text{सूर्यगतिः + चन्द्रगतिः}} = \text{ऐष्यघट्यादिमानम्।}$$

$$\frac{\text{गतकलाः} \times 60}{\text{सूर्यगतिः + चन्द्रगतिः}} = \text{गतघट्यादिकलाः इति।}$$

योगसाधनोपपत्तिः- स्पष्टरविचन्द्रयोर्योगो योग इति। योगास्तु 27 सप्तविंशतिः विष्कुंभादयः। अर्थात्स्पष्टमेव नक्षत्रवन्मानं योगानाम्। 800 कलातुल्यमेव, अतो-

$$\frac{\text{स्पष्टसूर्य + स्पष्टचन्द्र}}{800} = \text{लब्धिः गतयोगः।}$$

शेषं वर्त्तमानयोगगतकलाः। 800 - शेषं = भोग्यकलाः।

पुनश्चानुपातः- यदि रविचन्द्रगतियोगकलाभिः 60 घटिकास्तदा भुक्तभोग्यकलाभिः किमिति?

$$\frac{60 \times \text{भुक्तकलाः/भोग्यकलाः}}{\text{सूर्यगतिकलाः + चन्द्रगतिकलाः}} =$$

= वर्त्तमानयोगस्य भुक्तभोग्यमाने, इतिसिद्धिम्।

**वासरः**

सप्तवाराः भवन्ति- सूर्यवारः, सोमवारः, मंगलवारः, बुधवारः, गुरुवारः, शुक्रवारः, शनिवारः –

आदित्यश्चन्द्रमा भौमो बुधाश्चाथ वृहस्पतिः।
शुक्रः शनैश्चरश्चैव वासराः परिकीर्तिताः॥[१०]

वस्तुतस्तु वासराणां प्रयोगः प्रायशः सर्वेषु कार्येषु दरीदृश्यते। एतेषां वासराणां क्रमस्य सैद्धान्तिक कारणं सर्वेषु सिद्धान्तग्रन्थेषु आचार्यैः लिखितं वर्तते। वयं जानीमः यत् ग्रहाणां संख्या भौतिकरूपेण सप्त अस्ति। ते च सूर्यचन्द्रमंगलबुधगुरुशुक्रशनयः। उपरोक्तदिनानां क्रम एतदाधारितः। दिनानां नामकरणे महर्षिभिः काचित् युक्तिःआविष्कृता।

---

*[१०] मुहूर्तगणपतिः वारप्रकरणम् श्लो.सं.१ व्याख्याकारः –मुरलीधर चतुर्वेदी प्रकाशन- मोतीलाल वनारसी दास संस्करण वर्षम्- १९८८*

---

यथा

- दिनारम्भे प्रथमहोराया अधिपतिः वाराधिपतिः भवति।
- यो ग्रहः प्रथमहोराधिपतिः (दिनारम्भे प्रथमघण्टाधिपतिः) स एव तस्य दिनस्याधिपतिः भवति। अतः तस्यैव नाम्ना दिनस्य नाम भविष्यति। उदाहरणार्थं – रविवारस्य नामकरणे प्रयोजनं एतदस्ति यत् रविवारस्य प्रथमहोराया अधिपतिः सूर्यः

  परञ्च दिनानां नामकरणसम्बन्धे शास्त्रोक्तरीतिग्रहकक्षाक्रमः ज्ञातव्यः। तदाधारेण वयं दिनानां नामकरणप्रयोजनं ज्ञातुं शक्नोति।

**ग्रहकक्षाक्रमः**




एषः क्रमः शनिग्रहाद् अधः क्रमेण भूमिपर्यन्तं विद्यते।

अत्र शनिः = १, गुरु = २, मंगलः = ३, सूर्यः = ४, शुक्रः = ५ बुधः = ६ चन्द्रः = ७ इति

अथ यदि प्रथमहोरायाः अधिपतिः शनिः तर्हि अधः क्रमेण गणना भवति।

१, शनिः = प्रथमहोराधिपतिः   २, गुरुः = द्वितीयहोराधिपतिः

३, मंगलः = तृतीयहोराधिपतिः  ३, सूर्यः = चतुर्थहोराधिपतिः

४, शुक्रः = पञ्चमहोराधिपतिः   ५, बुधः = षष्ठहोराधिपतिः

६, चन्द्रः = सप्तमहोराधिपतिः

अनेन क्रमेण पुनः अनुवर्तनं भविष्यति। तर्हि अष्टमहोराधिपतिः शनिः नवमहोराधिपतिः गुरुः इति।

अत्र पूर्वमुक्तं यत् दिनारम्भे प्रथमहोराधिपतिः यो ग्रहः तस्य दिनस्य नामकरणं तदाधारेणैव भवति। अतः कल्प्यते दिनारंभे शनिः प्रथमहोराधिपतिः शनिः तर्हि सः वारः शनिवारः इति उच्यते। शानिवासरे द्वितीयहोराधिपतिः गुरुः तृतीयहोराधिपतिः मंगलः चतुर्थहोराधिपतिः सूर्यः इति। तर्हि अनेनैव क्रमेण शनिवासरे द्वाविंशः (२२) होराधिपतिः शनिः त्रयोविंशः होराधिपतिः गुरुः चतुर्विंशः होराधिपतिः मंगलः पञ्चविंशः होराधिपतिः सूर्यः।

पञ्चविंशतितमा होरा अग्रिमदिनस्य प्रथमा होरा अतः शनिवासरादनन्तरम् अग्रिमदिने प्रथमहोराया अधिपतिः सूर्यः। अतः तस्य दिनस्य नाम रविवासरः इति। पुनश्च रविवासरात् अधः क्रमेण गणनां कुर्मः चेत् पञ्चविंशतितमा होरा चन्द्रस्य भवति। अनेन क्रमेण सप्तदिनानां गणना कक्षाक्रमेण क्रियते। तेन सप्तदिनानां संबंधः सप्तग्रहैर्विद्यत इति

वस्तुतस्तु सृष्ट्यादौ प्रथमसूर्योदयात् वारगणना क्रमः आरब्धः तेन प्रथमवासरः रविवासरः।

"लङ्कानगर्यांमुदयाच्चभानोस्तस्यैव वारे प्रथमं बभूव।
मधोः सितादेर्दिनमासवर्षयुगादिकानां युगपत् प्रवृत्तिः॥"[११]

रविवासरादारभ्य अधः क्रमेण गणना कृते सति पञ्चविंशतितमा होरा चन्द्रस्य। तेन अग्रिमदिनाधिपतिश्चन्द्रः। वासरोऽपि चन्द्रवासरः एव।

एकं अहोरात्रं चतुर्विंशतिहोरात्मकं भवति अतः चतुर्विंशतितमा होरा यदा समाप्यते अग्रिमदिनारम्भो भवति। अत्र एकस्मिन् अहोरात्रे सप्तग्रहाणां वारगणना क्रमे आवृत्तित्रयं भवति अतः -

ग्रहाः = ७

१ अहोरात्रे आवृत्तित्रयं = ७×३ = २१होराः (घण्टा)

१ अहोरात्रम् = २४ होराः

---

[११] *सिद्धान्तशिरोमणिःमध्यमाधिकारे कालमानाध्यायः श्लो सं.१५ व्याख्याकार- पं गिरिजा प्रसाद द्विवेदी, प्रकाशक- चौखम्भा विद्याभवन, संस्करण-२००७*

अतः एकस्मिन् अहोरात्रे (२४ घण्टा) ग्रहाणां आवृत्तित्रयं (२१) जातम्। अवशिष्टं घण्टात्रयम्। घण्टात्रयानन्तरं (होरात्रयम्) चतुर्थहोरायां अग्रिमदिनारम्भः अतः चतुर्थहोरा अग्रिमदिनस्य प्रथमा होरा। अतः यो ग्रहः चतुर्थहोराधिपः स एव अग्रिमदिनाधिपः भवति। एषः प्रसङ्गः सूर्यसिद्धान्तेऽपि दरीदृश्यते –

**"मन्दादधः क्रमेण स्युश्चतुर्था दिवसाधिपाः..."**[१२]

**करणसाधनम्**

करणज्ञानार्थं तिथ्यर्द्धं करणमिति प्रसिद्धमेव। अर्थात् एकस्यां तिथौ करणद्वयं सम्पद्यते, तत्र यावती घटिका तिथेर्मानं जायते, तस्यार्धकालं यावदेकं एवञ्च तिथेः अन्तिमं मानं यावत् अपरकरणं भवति।तत्राद्यानि चरकरणानि येषां संख्या सप्त भवन्ति। ते बवबालवादिनाम्ना ख्याता, एवमेव चत्वारि स्थिरकरणानि सन्ति। करणप्रसङ्गे सिद्धान्तफलितग्रन्थयोः वर्णनं विद्यते। तद्यथा- चरकरणानि-

**करणानि चराख्यानि बवबालवकौलवम्।**
**तैतिलं गरवाणिज्ये विष्टिरेतानि सप्त च॥** [१३]

इत्यादिना- 1. बवकरणम् 2. बालवकरणम्। 3. कौलवकरणम्। 4. तैतिलकरणम्।

5. गरकरणम् 6. वणिजकरणम्। 7. विष्टि/भद्राकरणम्।

स्थिरकरणानि- तद्यथा-

**परे कृष्णचतुर्दश्यां दले च शकुनिर्भवेत्।**
**दर्शे चतुष्पदं नागं पूर्वापरविभागयोः॥**
**शुक्ले प्रतिपदः पूर्वे दले किंस्तुघ्नसंज्ञकम्।**
**एतेषां करणानां हि चतुष्कं स्थिरसंज्ञकम्॥**[१४]

1. कृष्णपक्षीयचतुर्दश्यामुत्तरार्द्धे शकुनिः।

2. अमावास्यायां पूर्वार्द्धे चतुष्पदः।

---

[१२] *सूर्यसिद्धान्तः, भूगोलाध्यायःश्लोसं.७८व्याख्याकार- डॉ.सत्येन्द्र मिश्र प्रकाशक- चौखम्भा संस्कृत भवन वाराणसी संस्करण-२००८*
[१३] *मुहूर्तगणपतिः करणप्रकरणम् श्लो.सं-०१ व्याख्याकारः –मुरलीधर चतुर्वेदी प्रकाशन- मोतीलाल वनारसी दास संस्करण वर्षम्- १९८८*
[१४] *मुहूर्तगणपतिः करणप्रकरणम् श्लो.सं-३-४ व्याख्याकारः –मुरलीधर चतुर्वेदी प्रकाशन- मोतीलाल वनारसी दास संस्करण वर्षम्- १९८८*

3. अमावास्यायामुत्तरार्द्धेनागः।

4. शुक्लपक्षीयप्रतिपत्पूर्वार्द्धे किंस्तुघ्नः।

वस्तुतस्तु मूलपाठः सूर्यसिद्धान्तानुसारेण कृष्णपक्षीयचतुर्दश्यामुत्तरार्द्धमारभ्य क्रमेण शकुनिचतुष्पदनागकिंस्तुघ्नादयो स्थिरकरणानिभवन्ति तदनन्तरं क्रमेण बवादिसप्तकरणानि भवन्ति। एकस्मिन् चान्द्रमासे एतानि बवादिकरणानि अष्टावृत्त्या भवन्ति। प्रत्येककरणस्य भोगमानं तिथ्यर्द्धतुल्यञ्च भवति, अर्थादेकस्यां तिथौ द्वे करणे भवतः। एवमपि एकस्मिन् चान्द्रमासे 60 षष्टिकरणानि भवन्ति।

प्रस्तूयतेऽत्र सूर्यसिद्धान्तीयमूलपाठः-

**''ध्रुवाणि शकुनिर्नागं तृतीयं तु चतुष्पदम्।**
**किंस्तुघ्नं तु चतुर्दश्याः कृष्णायाश्चापरार्द्धतः॥**
**बवादीनि ततः सप्त चराख्यकरणानि च।**
**मासेऽष्टकृत्व एकैकं करणानां प्रवर्त्तते॥**
**तिथ्यर्धभोगं सर्वेषां करणानां प्रकल्पयेत्।**
**एषा स्फुटगतिः प्रोक्ता सूर्यादीनां खचारिणाम्॥''**[१५]

**करणोपपत्तिः-**'तिथ्यर्द्धभोगं सर्वेषां करणानां प्रकल्पयेदिति' सूत्रानुसारेण तिथेरर्द्धमितप्रमाणमेकं करणमानं भवति। अतो एकस्मिन् चान्द्रमासे 30 त्रिंशत्तिथयो भवन्ति। अतोऽत्र द्विगुणितानि 30 x 2 = 60 प्रमितानि तिथ्यर्द्धानि तत्र शकुन्यादयो चत्वारि करणानि कृष्णपक्षीयचतुर्दशीत आरभ्य शुक्लपक्षीयपूर्वार्द्धं यावच्चत्वारि स्थिरकरणानि भवन्ति। अतो 60-4 = 56 तिथ्यर्द्धानि। एषु 7 सप्तचलकरणानि अतः 56 ÷7 = 8 अष्टावृत्तयो चलकरणानामित्युपपन्नम्। द्रष्टव्यमग्रे स्पष्टार्थचक्रम्-

| शुक्लपक्षः | | | कृष्णपक्षः | | |
|---|---|---|---|---|---|
| **तिथयः** | **पूर्वार्द्धे** | **उत्तरार्द्धे** | **तिथयः** | **पूर्वार्द्धे** | **उत्तरार्द्धे** |
| 1 | किंस्तुघ्नः | बवः | 1 | बालवः | कौलवः |
| 2 | बालवः | कौलवः | 2 | तैतिलः | गरः |
| 3 | तैतिलः | गरः | 3 | वणिजः | विष्टिः |
| 4 | वणिजः | विष्टिः | 4 | बवः | बालवः |

[१५] *सूर्यसिद्धान्तः स्पष्टाधिकारः श्लो. सं. ६७-६९ व्याख्याकार- डॉ.सत्येन्द्र मिश्र प्रकाशक- चौखम्भा संस्कृत भवन वाराणसी संस्करण-२००८*

| | | | | | |
|---|---|---|---|---|---|
| 5 | बवः | बालवः | 5 | कौलवः | तैतिलः |
| 6 | कौलवः | तैतिलः | 6 | गरः | वणिजः |
| 7 | गरः | वणिजः | 7 | विष्टिः | बवः |
| 8 | विष्टिः | बवः | 8 | बालवः | कौलवः |
| 9 | बालवः | कौलवः | 9 | तैतिलः | गरः |
| 10 | तैतिलः | गरः | 10 | वणिजः | विष्टिः |
| 11 | वणिजः | विष्टिः | 11 | बवः | बालवः |
| 12 | बवः | बालवः | 12 | कौलवः | तैतिलः |
| 13 | कौलवः | तैतिलः | 13 | गरः | वणिजः |
| 14 | गरः | वणिजः | 14 | विष्टिः | शकुनिः |
| 15 | विष्टिः | बवः | 15 | चतुष्पदः | नागः |

पञ्चाङ्गसाधनप्रसङ्गे आचार्यभास्करेणापि उक्तमस्ति तद्यथा-

रविरसैः विरवीन्दुलवा हृताः फलमितास्तिथयः करणानि च।
कुरहितानि च तानि बवादितः शकुनितोऽसितभूतदलादनु॥
ग्रहकलाः सरवीन्दुकला हृताः खखगजैश्च भयोगमिति क्रमात्।
अथ हृताः स्वगतैष्यविलिप्तिकाः स्वगतिभिश्च गतागतनाडिका॥[१६]

~~~~~~~~~~~

[१६] *सिद्धान्तशिरोमणिः स्पष्टा. श्लो. ६६-६७ व्याख्याकार- पं गिरिजा प्रसाद द्विवेदी, प्रकाशक- चौखम्भा विद्याभवन, संस्करण-२००७*
~~~~~~~~~~~

वर्षम्-०४ अङ्कः-०४ शोधज्योतिः
जनवरी-दिसम्बर, २०२२ ISSN-2350-0700

# सर्वादीनि सर्वनामानि सूत्रस्य भाष्यदृशा विमर्शः

डॉ॰ विदुषी बोल्ला[१]

*(शोधसारः – अष्टाध्याय्याः प्रथमाध्यायस्य प्रथमपादस्य सूत्रमिदं व्याकरणशास्त्रे महत्स्थानं भजति। अस्य सूत्रस्य व्याख्यानमपि प्रायः सर्वेषु अपि व्याख्याग्रन्थेषु दरीदृश्यत एव। किन्तु साकल्येन यद्व्याख्यानं महाभाष्येऽस्ति, तन्नान्यत्र। एवञ्च सूत्रमिदं सर्वनामसञ्ज्ञासम्बद्धत्वात् अवश्यं विमृष्टव्यम्। अत एव सूत्रमिदं महाभाष्यानुसारं विमृश्य सूत्रस्य विशुद्धार्थः प्रदर्शितः शोधपत्रेऽस्मिन्। अस्य सूत्रस्यादौ समान्यार्थं प्रतिपाद्य तदन्तस्यापि सर्वनामसञ्ज्ञाविधानम्, सूत्रघटिते सर्वादीनि इत्यस्मिन् पदे बहुव्रीहिसमासप्रकारः, सर्वनामपदे अणत्वस्य साधुत्वम्, सञ्ज्ञोपसर्जनप्रतिषेधः इति वार्त्तिकस्य प्रतिपादनम्, उभशब्दपाठस्य खण्डनम्, भवतुशब्दपाठस्य प्रयोजनमित्यादिविषयाः भाष्यानुगुणं प्रत्यपादिषत।)*

वैज्ञानिकेऽस्मिन् युगे सर्वत्र पुनर्नवतां जायमानायामपि स्वप्राचीनां अवस्थां सुदृढतया परिरक्ष्य देदीप्यते आम्नायाभिधं पाणिनीयं व्याकरणशास्त्रम्। अत्र प्रधानहेतुः वर्त्तते – भाष्यकृद्भिः व्याख्यानं महाभाष्यमेव। साकल्येन व्याख्यानेन व्याप्त्यव्याप्त्यसम्भवरूपदोषान् निरस्य सार्वकालिकीं विशुद्धताञ्च प्राप्य आधुनिकैः भाषाविद्भिः अपि पूज्यते इदं शास्त्रम्। तथाविधशास्त्रेऽस्मिन् प्रमुखं सूत्रमस्ति– **सर्वादीनि सर्वनामानि**[२] इति सञ्ज्ञासूत्रम्। सूत्रस्यास्यार्थो भवति - सर्वादीनि शब्दस्वरूपाणि सर्वनामसञ्ज्ञानि स्युः इति। अनेन सर्वादिगणे पठिताः विश्व-इत्यादयः शब्दाः सर्वनामसञ्ज्ञकाः भवन्ति। अत्र सर्वादिगणपठिताः शब्दाः सन्ति- सर्व-विश्व-उभ-उभय-डतर[३]-डतम[४]-अन्य-अन्यतर-इतर-त्वत्-त्व-नेम-सम-सिम-पूर्व-पर-अवर-दक्षिण-उत्तर-अपर-अधर-स्व-अन्तर-त्यद्-तद्-यद्-एतद्-इदम्-अदस्-एक-द्वि-युष्मद्-अस्मद्-भवतु-किम् इति शब्दाः। सूत्रस्यास्य आमूलचूलं व्याख्यानं प्रश्नोत्तरशैल्या महाभाष्ये सर्वविधसन्देहानां निवारणाय सूत्रवैशिष्ट्यस्य च प्रतिपादनाय च समर्थम्। ईदृग्व्याख्याने प्रकृतसूत्रस्य विमृष्टांशाः सन्ति -

1. तदन्तस्यापि सर्वनामसञ्ज्ञाविधानम्, तत्प्रमाणानि च।
2. सर्वादीनि इत्यत्र बहुव्रीहिसमासे अन्यपदार्थः समुदायः।

---

*[१] सहायकाचार्या, व्याकरणविभागः, श्रीसोमनाथसंस्कृतविश्वविद्यालयः, वेरावलम्, गुजरातम्, 362266, मो॰-9819118024, ई-मेलसङ्केतः- vidushisssu@gmail.com*

*[२] अष्टाध्याय्याम् सूत्रसङ्ख्या 1/1/26, पृष्ठसङ्ख्या 02*

*[३] डतरस्य शब्दाः भवन्ति –यतर-ततर-कतर-एकतर-इत्यादयः।*

*[४] डतमस्य शब्दाः भवन्ति - यतम, ततम, कतम, एकतम-इत्यादयः।*

3. बहुव्रीहिसमासस्य प्रकारद्वयम्।
4. सर्वनामघटकनत्वस्य साधुता।
5. बाधकान्येव निपातनानि।
6. सञ्ज्ञोपसर्जनप्रतिषेधः इति वार्त्तिकस्य प्रयोजनम्, तत्खण्डनञ्च।
7. सर्वादिगणे उभशब्दपाठस्य खण्डनम्।
8. सर्वादिगणे भवतुशब्दपाठस्य प्रयोजनम्।
9. उपसंहारः।

1. **तदन्तस्यापि सर्वनामसञ्ज्ञाविधानम्, प्रमाणानि च-** सर्वादिगणपठितशब्दाः येषाम् अन्ते भवन्ति तत्सम्पूर्णसमुदायस्यापि सर्वनामसञ्ज्ञा भवति, यथा- परमसर्वत्र, परमभवकान् चेति। परमसर्वत्र इत्यत्र **सप्तम्यास्त्रल्**[५] इत्यनेन त्रल्-प्रत्ययः सर्वनामसञ्ज्ञकेभ्यः एव भवति। एवञ्च परमभवकः इत्यत्र **अव्ययसर्वनाम्नामकच्प्राक्टेः**[६] इत्यनेन अकच्-प्रत्ययः अपि सर्वनामसञ्ज्ञकेभ्यः एव भवति। उभयत्रापि परम इति शब्दः सर्वादिगणे नास्ति अत एव सर्वनामसञ्ज्ञायाः अभावे त्रल्-अकच्-प्रत्ययौ न स्तः।

तदन्तस्यापि सर्वनामसञ्ज्ञा विधीयते इत्यत्र तु प्रमाणं वर्त्तते- **द्वन्द्वे च**[७] इति सूत्रम्। अनेन सूत्रेण द्वन्द्वसमासे सर्वनामसञ्ज्ञायाः निषेधः क्रियते। समासे तु समुदायः (सर्वशब्दानाम्, तदितरशब्दानां वा) एव भवति। समुदायस्य तु सर्वादिगणे पाठाभावात् सर्वनामसञ्ज्ञायाः अप्राप्तौ कथं निषेधः **प्राप्तौ सत्यामेव निषेधः** इति अभियुक्तत्वात्।अनेन ज्ञायते तदन्तस्य सर्वादिगणपठितान्तस्य समुदायस्य **सर्वादीनि सर्वनामानि** इत्यनेनैव सर्वनामसञ्ज्ञा विधीयते, तस्यैव निषेधः अनेन **द्वन्द्वे च** इत्यनेन क्रियते। तथा च तदन्तस्यापि सर्वनामसञ्ज्ञायां **द्वन्द्वे च** इति सूत्रमेव प्रमाणम्।

2. **सर्वादीनि इत्यस्य बहुव्रीहिसमासत्वम्।**

   1. **समासविषयकप्रश्नोत्पत्तिशङ्काविचारः** –सर्वादीनि इत्यत्र समासद्वयस्य सम्भावनास्ति – तत्पुरुषस्य (कर्मधारयस्य), बहुव्रीहेश्च। विग्रहस्तु तत्पुरुषे – सर्वश्चासौ आदिः इति, बहुव्रीहौ च – सर्वः आदिः येषां तानि इमानि इति भवति। अत्र उभयत्र तत्पुरुष-बहुव्रीहिसमासयोः कतरः समासः इति प्रश्नः समुदेति।

   किन्तु सर्वादीनि इत्यत्र अन्तशब्दः वर्त्तते – आदि इति शब्दः। स च आदिशब्दः नित्यपुँल्लिङ्गवाची अस्ति।तथा च प्रसिद्धमिदं सूत्रम् –**परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः**[८] इति। यद्यत्र

---

[५] *अष्टाध्याय्याम् सूत्रसङ्ख्या 5/3/10, पृष्ठसङ्ख्या 49*

[६] *अष्टाध्याय्याम् सूत्रसङ्ख्या 5/3/71, पृष्ठसङ्ख्या 50*

[७] *अष्टाध्याय्याम् सूत्रसङ्ख्या 1/1/30, पृष्ठसङ्ख्या 02*

[८] *अष्टाध्याय्याम् सूत्रसङ्ख्या 2/4/26, पृष्ठसङ्ख्या 14*

तत्पुरुषसमासः (कर्मधारयः) भवेत् चेत्, सर्वादयः इति पुँल्लिङ्गनिर्देशः एव भवेत्। किन्तु तथा नास्ति, अत्र तु क्लीबप्रयोगः वर्त्तते। अनेन ज्ञायते अत्र बहुव्रीहिसमासः एवास्ति, यतोहि अन्यपदार्थस्यैव लिङ्गमत्र आगच्छति, अन्यपदार्थो वर्त्तते – शब्दस्वरूपाणि इति।

तथापि सर्वज्ञो हि महाभाष्यकारः शङ्कामुद्भावयति – कः अत्र समासः इति। अत्र किं कारणम्? इति जिज्ञासायां तत्रैव उद्योतकारेणोक्तम् – छन्दोवत् सूत्राणि भवन्ति इत्यभियुक्त्या सूत्रेषु क्वचित् लिङ्गव्यत्यासः भवत्येव, तदर्थं प्रश्नोऽयं समुदेति।

2. **बहुव्रीहिसमासे सति आपद्यदोषः, तत्समाधानञ्च –**अन्यपदार्थत्वं बहुव्रीहित्वम्। अत्र अन्यः समासवर्त्तिपदार्थेभ्यः भवति। यथा – चित्राः गावः सन्ति यस्य इति चित्रगुः अर्थात् चित्रगवां स्वामी। अत्र समासवर्त्तिपदार्थौ चित्रगावौ, ताभ्यामन्यः स्वामी इति चित्रगुमानय इत्यनेन तेषां स्वामिनम् आनयति, न तु चित्रगाः। तथैव सर्वादीनि इत्यत्र सर्वः आदिर्येषां तानि सर्वादीनि इति बहुव्रीहौ समासवर्त्तिपदार्थेभ्यः सर्वादिभ्यः अन्यः विश्व-उभ-उभय इत्यादीनामेव ग्रहणात् एते एव सर्वादीनि इत्यनेन बुध्यन्ते। तथा च एतेषामेव विश्व-उभ-उभय इत्येषामेव सर्वनामसञ्ज्ञापि विधीयते। अत्र सर्व इत्यस्य सर्वनामसञ्ज्ञा न प्राप्नोति इति दोषः समुद्भवति।

**समाधानम्-** सर्वः आदिः यस्य समुदायस्य इति समासे अन्यपदार्थो भवति- सर्वशब्दघटितसमुदायः। एवञ्च सर्वशब्दस्य स्वरूपतया समासवर्त्तिपदार्थता समुदायघटकत्वेन सर्वशब्दस्य अन्यपदार्थता च सिद्ध्यति। एवञ्च सर्वशब्दस्य समासवर्त्तिपदार्थत्वात् सर्वनामसञ्ज्ञाविरहे तु समुदाये प्रवर्त्तमाना सर्वनामसञ्ज्ञा क्वचित् एकदेशे अप्रयुज्यमाने सति **समुदायस्य युगपल्लक्ष्ये प्रयोगाभावात् आनर्थक्यात् तदङ्गेषु** इति न्यायेन अवयवेषु सर्व-विश्व इत्येतेषु समेषु अवतरन्तीयं सञ्ज्ञा अविशेषेण सर्वशब्दे अपि भवति।

**दोषः-** अत्र समासार्थः सर्वशब्दघटितसमुदायः भवति चेत् समुदायस्य एकत्वात् बहुवचनस्यानुपपत्तिः स्यादिति दोषः।

**समाधानम्-** अत्र समासार्थः सर्वशब्दघटितः उद्भूतावयवसङ्ख्याविवक्षितश्च समुदायः। अत्र समुदायघटकानाम् अवयवानां सङ्ख्यायाः विवक्षितत्वात् तेषाञ्च बहुत्वात् अत्र सर्वादीनि इति बहुवचनमुत्पद्यते।

4. **बहुव्रीहिसमासस्य प्रकारद्वयम् –**बहुव्रीहिसमासस्य प्रकारद्वयमत्र भाष्ये प्रतिपादितम्। तत्र प्रथमन्तु तद्गुणसंविज्ञानम्, द्वितीयम् अतद्गुणसंविज्ञानमिति। **तद्गुणसंविज्ञानम् –** तस्य गुणाः इति तद्गुणाः, तेषां संविज्ञानम् तद्गुणसंविज्ञानम्। अर्थात् तस्य **अन्यपदार्थस्य** गुणानां **विशेषणानां** कार्ये संविज्ञानम् इति भावः।प्रकृते तस्य अन्यपदार्थस्य समुदायस्य गुणानां सर्वादीनां कार्ये सर्वनामसञ्ज्ञायां संविज्ञानं भवति। अर्थात् सर्वस्यापि सर्वनामसञ्ज्ञा अनेन विधीयते। अत्र **हलि**

**सर्वेषाम्**[९] इति सूत्रमपि प्रमाणमेव। सर्व इत्यस्य सर्वनामसञ्ज्ञाभावे तत्प्रयुज्यसुडागमोऽपि न भवेत्।

द्वितीयं भवति – **अतद्गुणसंविज्ञानम् इति।** अर्थात् अन्यपदार्थस्य गुणानां कार्ये संविज्ञानं न भवति। यथा – चित्रगुमानय इत्यत्र अन्यपदार्थस्य स्वामिनः गुणानां चित्रगवां कार्ये आनयने संविज्ञानं न भवति।

5. **सर्वनामघटकनत्वस्य साधुता –** सर्वनाम इत्यस्य यौगिकत्वात् सर्वेषां नाम इति विग्रहे सति उत्तरपदसत्वात् **पूर्वपदात्सञ्ज्ञायामगः**[१०] इत्यनेन पूर्वपदस्थात् निमित्तात् परस्य नस्य णः स्यात् इत्यर्थकेन पूर्वपद-सर्व इत्यत्र स्थितात् रेफात् परस्य नाम इत्यत्र नकारस्य णत्वं प्राप्नोति। अस्य णत्वस्य वारणं प्रतिपाद्यते – **सर्वनामसञ्ज्ञायां निपातनाण्णत्वाभावः**[११] इत्यनेन वार्त्तिकेन। सञ्ज्ञावाचिनः अणत्वघटितसर्वनामशब्दस्य सूत्रे पठितत्वात् निपातनात् एव णत्वाभावः अवगम्यते। तदेवोक्तं उद्योतकारेण - अनादिनियुक्तसञ्ज्ञास्थले यथाविनियुक्तानामेव साधुत्वं भवति यथा – रघुनाथः इत्यत्र णत्वाभावः।
6. **बाधकान्येव निपातनानि –**निपातनमपि प्रतिषेधकमेव भवति। अर्थात् सामान्यरूपेण किमपि विधाय पुनः विशेषेण सूत्रेण प्रतिषेधः क्रियते। यथा –**ष्टुना ष्टुः**[१२] इत्यनेन टवर्गस्य योगे सकारतवर्गयोः स्थाने षकारटवर्गौ विधीयेते। किन्तु **न पदान्ताट्टोरनाम्**[१३] इत्यनेन पदान्तस्थितस्य टवर्गस्य योगे सकारतवर्गयोः स्थाने षकारटवर्गौ न भवतः इति प्रतिषेधो विधीयते। तथैव प्रकृतेऽपि सामान्यसूत्रेण **पूर्वपदात्सञ्ज्ञायामगः** इत्यनेन णत्वं सर्वत्र क्रियते, किन्तु **सर्वादीनि सर्वनामानि** इत्यत्र सर्वनाम इति अणत्वघटितपठितत्वात् निपातनात् णत्वं वार्यते। निपातनानि प्रतिषेधजातीयकानि भवन्तीति सिद्धान्तः।

निपातनं प्रतिषेधत्वेन अस्वीकृत्य केवलं साधुत्वोपपादकत्वेनैव स्वीक्रियते चेत् केचन दोषाः सम्भवन्ति। अर्थात् यथाप्राप्तं णत्वमपि **पूर्वपदात्सञ्ज्ञायामगः** इत्यनेन भवति, प्रकृतसूत्रेण नत्वस्य निपातनेन नत्वयुक्तस्यापि साधुत्वमुपपद्यते इति स्वीक्रियते चेत् सञ्जनिष्यमाणाः कतिपय दोषाः प्रदर्शिताः, तत्समाधानञ्च प्रदर्शितम्–

*[९] अष्टाध्याय्याम् सूत्रसङ्ख्या 8/3/22, पृष्ठसङ्ख्या 85*

*[१०] अष्टाध्याय्याम् सूत्रसङ्ख्या 8/4/03, पृष्ठसङ्ख्या 87*

*[११] महाभाष्ये पृष्ठसङ्ख्या 724*

*[१२] अष्टाध्याय्याम् सूत्रसङ्ख्या 8/4/40, पृष्ठसङ्ख्या 88*

*[१३] अष्टाध्याय्याम् सूत्रसङ्ख्या 8/4/41, पृष्ठसङ्ख्या 88*

1. सुध्युपास्यः इत्यत्र सुधी उपास्यः इत्यवस्थायाम् **इको यणचि**[१४] इत्यनेन यणः एव विधानम्, न तु इकः निवृत्तिः अत एव क्वचित् यण्विधिः क्वचिच्च यथा प्राप्तः इक् अपि श्रूयेत। अर्थात् **इको यणचि** इत्यनेन सूत्रेण यणः साधुत्वमेव प्रतिपाद्यते न तु इकः असाधुत्वम् इति इग्-घटितमपि क्वचित् स्यात् इति दोषः।

   **समाधानम् –**पूर्वोक्तदोषः नास्ति। **इको यणचि** इत्यत्र इकः इति षष्ठ्यन्तं पदमस्ति। षष्ठ्या निर्दिष्टेन स्थानिनः निवारणात् इग्-घटितम् क्वचिन्न भवति।

2. दीव्यति इत्यत्र **कर्त्तरि शप्** इत्यनेन विहितशप्-प्रत्ययस्य स्थाने **दिवादिभ्यः श्यन्**[१५] इत्यनेन श्यन्-विकरणे सति दीव्यति इति सिद्ध्यति। किन्तु अत्र वैकल्पिकत्वं प्राप्नोति। एकदा शप्-विकरणस्य रूपम्, पुनः श्यन्-विकरणस्य च रूपं भवतीति दोषः समागच्छति।

   **समाधानम् –** श्यन्-विकरणस्य आदेशत्वेन स्वीकारेणदोषोऽयं निवार्यते। अर्थात् शप्-विकरणस्य स्थाने **दिवादिभ्यः श्यन्** इत्यनेन श्यन्-आदेशः विधीयते। अनेन वैकल्पिकापत्तिः न भवति।

   **पुनः दोषः –** श्यन्-विकरणस्य आदेशत्वेन स्वीकारे **स्थानिवदादेशोऽनल्विधौ**[१६] इत्यनेन करोति इत्यत्र शप्-स्थानिकस्य उ-आदेशस्य पित्त्वे सति **अनुदात्तौ सुप्पितौ**[१७] इत्यनेन अनुदात्तत्वं प्राप्नोतीति दोषः समुद्भवति।

   **समाधानम् –** श्यन्-आदेशस्य शित्करणमेव अत्र स्थानिवद्भावाप्रवृत्तौ ज्ञापकम्। शप्-विकरणस्य स्थानिवद्भावात् श्यन्-आदेशे अपि शित्त्वं स्यात्, तथापि पुनः शित्करणं ज्ञापयति – शपः स्थाने प्राप्तादेशानां स्थानिवद्भावो न भवतीति। अनेनैव अनुदात्तत्त्वदोषः निवार्यते।

   तथा च **दिवादिभ्यः श्यन्** इत्यस्मिन् सूत्रे पूर्वस्मात् **कर्त्तरि शप्**[१८]इत्यस्मात् शप् इत्यस्यानुवृत्तिर्भवति। तथा च दिवादिभ्यः इत्यस्य पञ्चम्यन्तत्वात् शप् इत्यस्य षष्ठी प्रकल्प्यते। तथा चार्थः दिवादिभ्यः धातुभ्यः परस्य शपः स्थाने श्यन्-आदेशः भवतीति। न च प्रत्ययविधौ पञ्चमीविभक्तिः न प्रकल्पिता भवतीति वक्तव्यम्, अत्र प्रत्ययस्तु शप् इति विहितः एव अयं तु आदेशोऽस्ति।

---

[१४] *अष्टाध्याय्याम् सूत्रसङ्ख्या 6/1/74, पृष्ठसङ्ख्या 56*

[१५] *अष्टाध्याय्याम् सूत्रसङ्ख्या 3/1/69, पृष्ठसङ्ख्या 17*

[१६] *अष्टाध्याय्याम् सूत्रसङ्ख्या 1/1/55, पृष्ठसङ्ख्या 02*

[१७] *अष्टाध्याय्याम् सूत्रसङ्ख्या 3/1/4, पृष्ठसङ्ख्या 14*

[१८] *अष्टाध्याय्याम् सूत्रसङ्ख्या 3/1/68, पृष्ठसङ्ख्या 17*

3. उच्चकैः, नीचकैः इत्यादौ **अव्ययसर्वनाम्नामकच् प्राक्टेः** इत्यनेन सूत्रेण अव्ययसर्वनाम्नां टेः प्राक्अकच्प्रत्ययो विधीयते एवञ्च यथाप्राप्तं **प्रागिवात्कः**[१९] इत्यस्मिन् अधिकारे **अज्ञाते**[२०] इत्यनेन सूत्रेण कप्रत्ययोऽपि स्यात् इति दोषः समुद्भवति।

**समाधानम् –**क-अकच्-प्रत्यययोः वैकल्पिकत्वं न भवति यतो हि **येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति**[२१] इति परिभाषया कप्रत्ययस्य अवश्यप्राप्तौ आरभ्यमाणो विधिः अकच्-प्रत्ययः, एषः अकच्-प्रत्ययः कप्रत्ययस्य बाधको भवति।अनया परिभाषया कप्रत्ययस्य बाधनं भवतीति न दोषः।

एवञ्च निपातनमपि बाधकत्वेनैव कार्यं करोति। नाप्राप्ते णत्वे निपातनमारब्धम् अत एव णत्वस्य बाधको भविष्यति। अर्थात् सर्वनामानि इत्यत्र प्रकृतसूत्रेण णत्वाभावस्य निपातनात् पुनः **पूर्वपदात्सञ्ज्ञायामगः** इत्यनेन सूत्रेण णत्वप्राप्तिः न भवति। एवं रूपेण निपातनात् अणत्वं यथाप्राप्तञ्च णत्वम् इति शङ्का निवारिता भगवत्पादैः।

7. **सञ्ज्ञोपसर्जनप्रतिषेधः इति वार्त्तिकस्य प्रयोजनम्, तत्खण्डनञ्च–**सर्वादीनां सर्वनामसञ्ज्ञा सञ्ज्ञाभूतभिन्नानाम् उपसर्जनभिन्नानामेव भवतीति **सञ्ज्ञोपसर्जनप्रतिषेधः**[२२] इति वार्त्तिकं प्रवर्त्तनीयम्। अनेन वार्त्तिकेन सञ्ज्ञाभूतसर्वादीनाम् उपसर्जनभूतसर्वादीनाञ्च सर्वनामसञ्ज्ञा निषिध्यते। अनेन सर्वाय देहि इति सिद्ध्यति अर्थात् सर्वः इति कस्यचित् पुरुषस्य नाम, तस्मै देहि इति अर्थे सर्वस्मै देहि इति अनर्थकरूपं न भवति। तथैव उपसर्जनस्य सर्वशब्दस्य अतिसर्वाय देहि इत्यपि च रूपं सम्भवति।

एषः प्रतिषेधः विशेषेण अविशेषेण च सर्वनामसञ्ज्ञायाः यत् कार्यं विधीयते तत्र सर्वत्र अन्वेति। अर्थात् विशेषेण कार्यम्– सर्वादित्वव्याप्यत्यदादित्वधर्मावच्छिन्नो-द्देश्यताककार्यम्, अपि च अविशेषेण कार्यम्– सर्वादित्वधर्मावच्छिन्नोद्देश्यताककार्यम् इति उभयत्र सर्वनामसञ्ज्ञायाः प्रतिषेधो भवति।

- विशेषेण कार्यम् इत्यस्योदाहरणमस्ति– अतितत् इति। अत्र **त्यदादिविधौ**[२३] च इति वार्त्तिकम् उद्धृतं पतञ्जलिमहर्षिभिः। अत्र तच्छब्दस्य प्रथमैकवचने सः इति रूपं सिद्ध्यति।तत् सुँ इत्यत्र **त्यदादीनामः**[२४] इत्यनेन अत्वम्, त अ स् इति स्थिते **अतो गुणे**[२५] इत्यनेन पररूपे च कृते त स्

---

*[१९] अष्टाध्याय्याम् सूत्रसङ्ख्या 5/3/70, पृष्ठसङ्ख्या 50*

*[२०] अष्टाध्याय्याम् सूत्रसङ्ख्या 5/3/73, पृष्ठसङ्ख्या 50*

*[२१] परिभाषेन्दुशेखरे परिभाषासङ्ख्या - 50*

*[२२] महाभाष्ये पृष्ठसङ्ख्या 732*

*[२३] महाभाष्ये पृष्ठसङ्ख्या 737*

*[२४] अष्टाध्याय्याम् सूत्रसङ्ख्या 7/2/102, पृष्ठसङ्ख्या 75*

*[२५] अष्टाध्याय्याम् सूत्रसङ्ख्या 6/1/94, पृष्ठसङ्ख्या 57*

इत्यवस्थायां **तदोः सः सावनन्त्ययोः**[२६] इत्यनेन तकारस्य सकारादेशः एवञ्चावसानसञ्ज्ञायां रुत्वविसर्गौ च विधाय सः इति रूपं सिद्ध्यति।

एवञ्च तम् अतिक्रान्तः इति विग्रहे अतितद् इति रूपम्। अत्र **अत्यादयः क्रान्ताद्यर्थे द्वितीयया** इत्यनेन सूत्रेण तत्पुरुषसमासे सति अतितद् रूपं सिद्ध्यति।अतितद् सुइत्यवस्थायां **त्यदादीनामः** इत्यनेन अत्वं प्राप्नोति। किन्तु तद्-शब्दः उपसर्जनीभूतो वर्त्तते।अत एव **सञ्ज्ञोपसर्जनप्रतिषेधः** इत्यनेन उपसर्जनत्वात् न सर्वनामसञ्ज्ञा। अर्थात् सर्वादित्वव्याप्यत्यदादित्वधर्मोवच्छिन्नोद्देश्यताककार्यम् अस्ति अत्वकार्यं तद्विधाने अपि उपसर्जनीभूतस्य सर्वनामसञ्ज्ञा न भवति। अत एव अत्वमपि न प्राप्यते। अत्वाभावे सति **हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्**[२७] इत्यनेन सुलोपे अतितत् इति रूपं सिद्ध्यति।

- अविशेषेण कार्यम् अर्थात् सर्वादीनाम् आनन्तर्येण यत् कार्यमुच्यते तत् सञ्ज्ञोपसर्जनीभूतानां न भवति यथा– सर्वाय, अतिसर्वाय देहि इत्यत्र सर्वनामसञ्ज्ञायाः कार्यमस्ति स्मैविधानं तन्न भवति सञ्ज्ञोपसर्जनप्रतिषेधत्वात्।

☞ **सञ्ज्ञोपसर्जनप्रतिषेधः इति वार्त्तिकस्य खण्डनम् –**सञ्ज्ञोपसर्जनप्रतिषेधः इत्यस्मिन् वार्त्तिके खण्डद्वयमस्ति- सञ्ज्ञायाः सर्वनामसञ्ज्ञाप्रतिषेधः, उपसर्जनस्य सर्वनामसञ्ज्ञा प्रतिषेधः इति। उभयोः सञ्ज्ञायाः उपसर्जनस्य च सर्वनामसञ्ज्ञाप्रतिषेधाय वार्त्तिकस्य आवश्यकता नास्ति।

- **सञ्ज्ञाप्रतिषेधाय वार्त्तिकस्य आवश्यकता नास्ति-** सर्वादिगणे पठितं सूत्रमस्ति- पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसञ्ज्ञायाम्। अस्य सूत्रस्य विभागः क्रियते। एवञ्च (1) प्रथमं सूत्रं भवति **– पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायाम्** इति। अस्यार्थो वर्त्तते– पूर्वपरादिशब्दानां व्यवस्थायामर्थे सर्वनामसञ्ज्ञा भवति। तथा च (2) द्वितीयं सूत्रं भवति– **असञ्ज्ञायाम्** इति। अस्यार्थोऽस्ति- सर्वादीनि शब्दरूपाणि असञ्ज्ञायां सर्वनामसञ्ज्ञकानि भवन्ति। अनेन गणसूत्रस्य योगविभागेनैव सञ्ज्ञायाः प्रतिषेधः सम्भवः तदर्थं वार्त्तिकस्योपदेशः अनावश्यकः एव।
- **उपसर्जनप्रतिषेधाय वार्त्तिकस्य आवश्यकता नास्ति-** उपसर्जनीभूतानां सर्वादीनां सर्वनामसञ्ज्ञायाः वारणाय अपि वार्त्तिकस्य आवश्यकता नास्ति। स्त्रीप्रत्ययप्रकरणस्थम् **अनुपसर्जनात्**[२८] इति सूत्रं प्रत्याख्यायते। तत् सूत्रं स्त्रीप्रत्ययप्रकरणे अनुपयुज्यमाने सति कार्यान्तरार्थम् अस्मिन् प्रतिषिद्धप्रकरणे परिभाषारूपेण उपयुज्यते। तस्य सूत्रस्य व्याख्यानमित्थं भवति– अनुपसर्जनस्य अ अत् इत्यनेन विच्छेदः। तथा च **सुपां**

---

[२६] *अष्टाध्याय्याम् सूत्रसङ्ख्या 7/2/106, पृष्ठसङ्ख्या 75*

[२७] *अष्टाध्याय्याम् सूत्रसङ्ख्या 6/1/66, पृष्ठसङ्ख्या 56*

[२८] *अष्टाध्याय्याम् सूत्रसङ्ख्या 4/1/14, पृष्ठसङ्ख्या 28*

**सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः**[२९] इत्यनेन सूत्रेण षष्ठ्याः लुकि सवर्णदीर्घे च सति अनुपसर्जनात् इति भवति। तथा च अकार-अत्कारौ अनुपसर्जनस्य एव भवतः इत्यर्थः गम्यते। अनेन अतितत् इत्यत्र **त्यदादीनामः** इत्यनेन अकारादेशः उपसर्जनत्वात् न प्राप्नोति। एवञ्च कतरम् अतिक्रान्तं कुलम् इत्यत्रापि अतिकतरम् इत्यत्र उपसर्जनत्वात् **अद्डुतरादिभ्यः पञ्चभ्यः**[३०] इत्यनेन अद्डादेशः न भवति।

**पुनः दोषः –**अनुपसर्जनात् इति स्वीकृत्य अकार-अत्कारौ अनुपसर्जनस्य न इति व्याख्याने अतियुष्मत्, अत्यस्मत् इत्यत्र अद्डानुपपत्तिरूपः दोषो जायते। अत्रापि युष्मान् अतिक्रान्तेभ्यः इत्यर्थे **अत्यादयः क्रान्ताद्यर्थे द्वितीयया** इत्यनेन तत्पुरुषसमासे कृते अतियुष्मद् भ्यस् इत्यवस्थायां **पञ्चम्या अत्**[३१] इत्यनेन सूत्रेण भ्यस्-विभक्तेः अत्-आदेशो न प्राप्नोति उपसर्जनत्वात् **अनुपसर्जनात्** इत्यनेन प्रतिषिद्धत्वात्।

**समाधानम् –**अनुपसर्जनात् इत्यत्र प्रश्लेषः वर्त्तते – अनुपसर्ज अ अ अत् इति। अनेन अकारात् परौ यौ अकार-अत्कारौ तौ अनुपसर्जनस्य एव भवति इत्यर्थः अनुमीयते। अनेन युष्मत्-अस्मत्-शब्दाभ्यां अत्-आदेशे न हानिः। अकारपरकविधाने सत्येव अत्कारः अनुपसर्जनात् भवति अत्र तु अकारपरकविधानमेव नास्ति इति न प्रतिषेधस्य प्राप्तिः।

एवं रीत्या सर्वनामसञ्ज्ञायां सर्वादिसञ्ज्ञाभूतानां प्रतिषेधस्तु पूर्वपरावर० इत्यस्य गणसूत्रस्य योगविभागेन सिद्ध्यति। एवञ्च सर्वादीनाम् उपसर्जनीभूतानां प्रतिषेधस्तु अनुपसर्जनात् इत्यस्य परिभाषारूपेण स्वीकारात् सिद्ध्यति। अतः **सञ्ज्ञोपसर्जनप्रतिषेधः** इति वार्त्तिकस्य आवश्यकता नास्ति।

☞ **सञ्ज्ञोपसर्जनीभूतानां सर्वनामत्वनिषेधाय उपायान्तरम् –**अतितत्, अतिकतरम् इत्यत्र अत्वम्, अद्डादेशञ्च वारयितुं उपायान्तरमुच्यते भाष्यकारैः –**अथवा अङ्गाधिकारे यदुच्यते, गृह्यमाणविभक्तेस्तद्भवतीति।** अर्थात् **अङ्गस्य**[३२] इत्यधिकारे यत्कार्यं विधीयते तत् गृह्यमाणविभक्तेः एव भवति। एवञ्च **त्यदादीनामः, अद्डुतरादिभ्यः पञ्चभ्यः** इति सूत्रद्वयस्य **अङ्गस्य** इत्यधिकारे पठितत्वात् गृह्यमाणानां त्यदादिभिः डतरादिभिश्च सम्बद्धा या विभक्तिः तस्याः एव तत् कार्यं अत्वम् अद्ड्त्वञ्च भवति। अतितत्, अतिकतरम् उभयत्र गृह्यमाणविभक्तिः नास्ति यतो हि अतितत्-प्रातिपदिकात् अतिकतरप्रातिपदिकात् च सुँ-विभक्तिः अत्र विहिता। अतः गृह्यमाणविभक्तेः अभावे अकार-अत्कारौ न भवतः।

---

[२९] *अष्टाध्याय्याम् सूत्रसङ्ख्या 7/1/39, पृष्ठसङ्ख्या 71*

[३०] *अष्टाध्याय्याम् सूत्रसङ्ख्या 7/1/25, पृष्ठसङ्ख्या 70*

[३१] *अष्टाध्याय्याम् सूत्रसङ्ख्या 7/1/31, पृष्ठसङ्ख्या 70*

[३२] *अष्टाध्याय्याम् सूत्रसङ्ख्या 6/4/1, पृष्ठसङ्ख्या 67*

☞ **सञ्ज्ञोपसर्जनीभूतानां सर्वनामसञ्ज्ञावारणाय अन्तिमम् उपायम् –**सञ्ज्ञोपसर्जनप्रतिषेधाय उपयान्तरमस्ति – सर्वनाम इत्यस्य अन्वर्थसञ्ज्ञाकरणम्। अर्थात् लघ्वर्थं हि सञ्ज्ञाकरणम्, सञ्ज्ञा च नाम यतो न लघीयः। पुनः सूत्रेऽस्मिन् महत्याः सर्वनाम इति सञ्ज्ञायाः विधाने इदमेव प्रयोजनम् – अन्वर्थसञ्ज्ञाकरणम्। अर्थात् सर्वेषां यत् नाम तत् सर्वनाम इति अन्वर्थसञ्ज्ञा विज्ञास्यते। तथा च सर्वेषां यानि नामानि तानि सर्वादीनि भवन्ति। यथा सर्वः विश्वः उभः इत्यादिशब्दाः। सञ्ज्ञायाम् उपसर्जने च विशेषस्य एव भवन्ति, सर्वेषां न प्राप्नुवन्ति। अत एव अन्वर्थसञ्ज्ञात्वात् सञ्ज्ञायाम् उपसर्जने च सर्वनामसञ्ज्ञा न प्राप्यते। तदर्थं वार्त्तिकस्य आवश्यकता नास्ति। एवञ्च प्रकृतसूत्रे तन्त्रं (अर्थद्वयबोधनेच्छया एकस्य सकृत् उच्चारणम्) वर्त्तते – सर्वादीनि च सर्वादीनि च सर्वादीनि, सर्वनामानि च सर्वनामानि च सर्वनामानि इति। तथा चार्थो भवति –सर्वेषां यानि नामानि तानि सर्वादीनि सर्वनामसञ्ज्ञकानि भवन्ति।

8. **सर्वादिगणे उभशब्दपाठस्य खण्डनम्–**सर्वादिगणे उभशब्दः अपि पठितो वर्त्तते। तेन उभशब्दस्यापि प्रकृतसूत्रेण सर्वनामसञ्ज्ञा भवति। तस्मात् सर्वादिकार्याणि स्मै-स्मात्-स्मिन्-इत्यादयः आदेशाः अपि प्राप्नुवन्ति। किन्तु उभशब्दस्य नित्यद्विवचनान्तत्वात् एतेषाम् अप्रसक्तिः। एवञ्च द्विवचने तु सर्वनामसञ्ज्ञोद्देश्यककार्याणि अपि न भवन्ति। पुनः किमर्थम् उभशब्दस्य सर्वादिगणे पाठः इति प्रश्नः समुद्भवति।

**समाधानम् –उभस्य सर्वनामत्वेऽकजर्थः**[३३] इति वार्त्तिकेन उभशब्दस्य सर्वनामसञ्ज्ञायां प्रयोजनं प्रदर्शयति – अकच्-प्रत्ययविधानमेव प्रयोजनमिति। अर्थात् **अज्ञाते** इत्यनेन सूत्रेण कप्रत्ययः विधीयते। किन्तु **अव्ययसर्वनाम्नामकच्प्राक्टेः** इत्यनेन सर्वनामसञ्ज्ञकात् अकच्-प्रत्ययो भवति, कप्रत्ययं बाधित्वा। उभशब्दस्य अपि सर्वनामत्वात् अकच्-प्रत्यये सति उभकौ इति रूपं सिद्ध्यति।

**पुनः प्रश्नः –**उभशब्दात् अकच्प्रत्यये सति यद्रूपं तदेव उभकौ इति कप्रत्यये सत्यपि सिद्ध्यति, पुनः कः विशेषः क-अकच्प्रत्यययोः?

**समाधानम् –**कप्रत्यये सति द्विवचनान्तता न स्यात् उभशब्दस्य। अर्थात् उभशब्दात् कप्रत्यये सति **उभ क औ** इत्यवस्थायां उभशब्दस्य द्विवचनविषयत्वात् अव्यवहितपरे औविभक्तिः नास्ति अपितु कप्रत्ययस्य व्यवधानं विद्यते। किन्तु अकच्-प्रत्यये सति न तद्दोषः। **उभ् अक् अ औ** इति अकच्-प्रत्ययः टेः पूर्वं तिष्ठति। तस्मात् **तन्मध्यपतितस्तद्ग्रहणेन गृह्यते**[३४] इति परिभाषया अकच्-इत्यस्य ग्रहणं उभशब्दात् एव भवति। अत एव उभशब्दस्य द्विवचनान्तत्वात् उभकस्यापि तद्विद्यमानत्वात् औविभक्तौ नास्ति बाधः। एषः एव विशेषो वर्त्तते काकचोः।

---

[३३] *महाभाष्ये पृष्ठसङ्ख्या 754*

[३४] *परिभाषेन्दुशेखरे – 90 परिभाषा*

**खण्डनम् –** उपर्युक्तं न साधु, उच्यतेऽत्र **अवचनादापि तत्परविज्ञानम्**[३५] इति समाधानवार्त्तिकम्। अर्थात् टाप्-प्रत्यये सति यथा उभा इति शब्दात् द्विवचनान्तत्वं न विनष्टि तथैव कप्रत्यये सत्यपि न। यतो हि **स्वार्थिकाः प्रत्ययाः प्रकृतितः अविशिष्टाः भवन्ति** इत्युक्त्या स्वार्थिककप्रत्ययः प्रकृतितः उभशब्दात् न भिद्यते। अर्थात् उभशब्दस्य यत् द्विवचनान्तत्वं तदेव उभकस्यापि भवति। एवञ्च अकच्-प्रत्ययविधानस्य नान्तरीयत्वात् सर्वादिगणे पाठः व्यर्थः एव। सत्याम् आवश्यकतायाम् **उभाव्ययसर्वनाम्नामकच्प्राक्टेः** इत्यवं सूत्रं स्यात् इति रीत्या उभशब्दस्य सर्वादिगणे पाठः प्रत्याख्यातः इति महाभाष्यकारैः।

9. **सर्वादिगणे भवतुशब्दपाठस्य प्रयोजनम् –** सर्वनामसञ्ज्ञायाः विभक्तौ यत् कार्यं भवति तत् प्रायः अदन्तत्वात् एव दृश्यते, यथा – **सर्वनाम्नः स्मै**[३६]**, आमि सर्वनाम्नः सुट्**[३७] इत्यादयः। अत्र सर्वादिगणे भवतुशब्दस्य पाठः वर्त्तते। अत्र उँकारस्य **उपदेशेऽजनुनासिक इत्**[३८] इत्यनेन इत्सञ्ज्ञायां लोपे[३९] च सति भवत् शब्दः अवशिष्यते। एषः तकारान्तत्वात् अदन्तत्वाभावात् सर्वनामप्रयुज्यकार्याणाम् अप्रसक्तेः पुनः सर्वादिगणे अस्य पाठः किमर्थः इति प्रश्नः समुदेति।

**समाधानम् –**महाभाष्यकृद्भिः समाधीयते प्रश्नोऽयम् अनेन वार्त्तिकेन –**भवतोऽकच्छेषात्वानि प्रयोजनानि**[४०] इति। अर्थात् भवच्छब्दस्य सर्वनामत्वे अकच्प्रत्ययविधानम्, एकशेषः, आत्वञ्चेति त्रीणि प्रयोजनानि सन्ति। एतानि व्यतिरिच्यापि अन्यानि अपि प्रयोजनानि वर्त्तन्ते, यथा –**सर्वनाम्नस्तृतीया च**[४१]इत्यनेन भवता हेतुना, भवतः हेतोः इति वाक्यसिद्धिः। अपि च भवतः अपत्यम् इत्यस्मिन्नर्थे **त्यदादीनि च**[४२] इत्यनेन सूत्रेण वृद्धसञ्ज्ञाविधानात् **उदीचां वृद्धादगोत्रात्**[४३]इति फिञ्प्रत्यये सति भावतायनिः इति रूपसिद्धिः, भवन्तम् अञ्चति इत्यस्मिन्नर्थे सर्वनामत्वे **विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये**[४४]इत्यनेन अद्रि-आदेशे सति भवद्र्यङ् इत्यस्य रूपसिद्धिः, भवान् मित्रं यस्य सः इत्यस्मिन्नर्थे सर्वनामत्त्वे **बहुव्रीहौ सर्वनामसङ्ख्ययोरुपसङ्ख्यानम्** इत्यनेन वार्त्तिकेन भवच्छब्दस्य

---

*[३५] महाभाष्ये पृष्ठसङ्ख्या 759*
*[३६] अष्टाध्याय्याम् सूत्रसङ्ख्या 7/1/14, पृष्ठसङ्ख्या 70*
*[३७] अष्टाध्याय्याम् सूत्रसङ्ख्या 7/1/52, पृष्ठसङ्ख्या 72*
*[३८] अष्टाध्याय्याम् सूत्रसङ्ख्या 1/3/2, पृष्ठसङ्ख्या 04*
*[३९] तस्य लोपः, अदर्शनं लोपः इति सूत्राभ्यां लोपः।*
*[४०] महाभाष्ये पृष्ठसङ्ख्या 763*
*[४१] अष्टाध्याय्याम् सूत्रसङ्ख्या 2/3/27, पृष्ठसङ्ख्या 12*
*[४२] अष्टाध्याय्याम् सूत्रसङ्ख्या 1/1/73, पृष्ठसङ्ख्या 03*
*[४३] अष्टाध्याय्याम् सूत्रसङ्ख्या 4/1/157, पृष्ठसङ्ख्या 32*
*[४४] अष्टाध्याय्याम् सूत्रसङ्ख्या 6/3/91, पृष्ठसङ्ख्या 66*

पूर्वनिपातश्चेतीत्यादीनि बहूनि प्रयोजनानि सन्ति। अत एव **भवतोऽकच्छेषात्वानि प्रयोजनानि** इति वात्तिकम् उदाहरणमात्रं वर्त्तते, न तु परिगणनपरम्।

1. **अकच्प्रत्ययः** –सर्वादिगणे पठितत्त्वात् **सर्वादीनि सर्वनामानि** इत्यनेन सर्वनामसञ्ज्ञायाम् **अव्ययसर्वनाम्नामकच्प्राक्टेः** इत्यनेन टिभागात् पूर्वम् अकच्प्रत्ययो भवति। **भव् अकच् अत्** इति जाते मेलने **भवकत्**-शब्दात् सुविभक्तौ **उगिदचां सर्वनामस्थानेऽधातोः**[४५] इत्यनेन नुमागमे सति **भवकन् त् स्** इति स्थितौ **हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्**[४६] इत्यनेन सूत्रेण हलन्तात् परे सुलोपे सति **संयोगान्तस्य लोपः**[४७] इत्यनेन संयोगान्तस्य तकारस्य लोपे कृते **भवकन्** इत्यवस्थायां **सर्वनामस्थानेऽसम्बुद्धौ**[४८] इत्यनेन उपधायाः दीर्घे कृते भवकान् इति इष्टं रूपं सिद्ध्यति। सर्वादिगणे न पठ्यते चेत् कप्रत्यये सति भवकान् इति न स्यात्। अतः अकच्-प्रत्ययविधानार्थं सर्वनामसञ्ज्ञायाः कारणत्वे सर्वादिगणे पाठः अपि आवश्यकः।
2. **एकशेषः** –सर्वैः सहोक्तौ त्यदादीनि नित्यं शिष्यन्ते इत्यर्थसूत्रेण **त्यदादीनि सर्वैर्नित्यम्**[४९] इत्यनेन एकशेषार्थं भवच्छब्दग्रहणं सर्वादिगणे आवश्यकम्। स च भवान् च इति लौकिकविग्रहे **तद् स्भवत् स्** इत्यवस्थायाम् उभयोः तद्-भवत्-शब्दयोः त्यदादित्वात् **त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते** इति वार्त्तिकेन परत्वात् भवच्छब्दः शिष्यते, भवन्तौ इति रूपं सिद्ध्यति। क्वचित् तौ इत्यपि भवति भाष्ये **पूर्वशेषोऽपि दृश्यते** इत्युक्तत्वात्। त्यदादित्वात् एकशेषार्थं सर्वादिगणे भवच्छब्दपाठः आवश्यकः एव।
3. **आत्वम्** –भवान् इव अयं पश्यति इत्यर्थे त्यदादिषु उपपदेषु अज्ञानार्थकदृश्-धातोः कञ्प्रत्ययः क्विन्प्रत्ययश्च भवतः इत्यर्थकेण **त्यदादिषु दृशोऽनालोचने कञ् च**[५०] इति सूत्रेण भवतुशब्दस्यापि सर्वादिगणे पठितत्त्वात् त्यदादित्वात् क्विन्प्रत्यये सति सर्वापहारलोपः **भवत् दृश्** इत्यवस्थायाम् **आ सर्वनाम्नः**[५१] इत्यनेन सूत्रेण तकारस्य आकारादेशे सवर्णदीर्घे[५२] सति सुबुत्पत्तिं कृत्वा भवादृक् इति रूपं सिद्ध्यति। त्यदादित्वात् विधीयमानक्विन्प्रत्ययार्थम्, तेन च दृश्परकसर्वनामसञ्ज्ञकस्य आत्वविधानार्थमयं पाठः आवश्यकः।

---

[४५] *अष्टाध्याय्याम् सूत्रसङ्ख्या 7/1/70, पृष्ठसङ्ख्या 72*
[४६] *अष्टाध्याय्याम् सूत्रसङ्ख्या 6/1/66, पृष्ठसङ्ख्या 53*
[४७] *अष्टाध्याय्याम् सूत्रसङ्ख्या 8/2/23, पृष्ठसङ्ख्या 82*
[४८] *अष्टाध्याय्याम् सूत्रसङ्ख्या 6/4/8, पृष्ठसङ्ख्या 67*
[४९] *अष्टाध्याय्याम् सूत्रसङ्ख्या 1/2/72, पृष्ठसङ्ख्या 04*
[५०] *अष्टाध्याय्याम् सूत्रसङ्ख्या 3/2/60, पृष्ठसङ्ख्या 20*
[५१] *अष्टाध्याय्याम् सूत्रसङ्ख्या 6/3/91, पृष्ठसङ्ख्या 66*
[५२] *अकः सवर्णे दीर्घः इत्यनेन सवर्णदीर्घः।*

**10. उपसंहारः –** भाषायां सर्वनामशब्दानां प्रयोगः विपुलतया दृश्यते, तथैव संस्कृतभाषायामपि। संस्कृतभाषायां समेषां सर्वनामशब्दानाम् एकत्र सर्वादिगणे पाठः कृतः। तथा च **सर्वादीनि सर्वनामानि** इति सर्वनामसञ्ज्ञां विधाय तत्सञ्ज्ञाप्रयुक्तानि बहूनि कार्याणि क्रियन्ते। सूत्रेऽस्मिन् भाष्यकारैः समन्तत्वात् स्वविचारैः स्वभाष्येण च सूत्रमिदं व्याख्यायि। अत्र प्रश्नसमाधानशैल्या सूत्रविषयकान् सर्वान् अपि सन्देहान् दूरीकृत्य विशुद्धं सूत्रार्थं प्रस्तावीत् भगवत्पादः पतञ्जलिः। **उत्तरोत्तरं मुनीनां प्रामाण्यम्** इत्यभियुक्त्या प्रदीपोद्योतसहितस्य महाभाष्यस्य आलोडनं वैयाकरणैः अवश्यं करणीयम्।

## सन्दर्भ-सहायक-ग्रन्थसूची


1. व्याकरणमहाभाष्यम् (6-9 आह्निकानि), प्रो॰ जयशङ्करलाल त्रिपाठी, चौखम्बा कृष्णदास अकादमी, वाराणसी, द्वितीयसंस्करणम्, 2013.
2. पाणिनीयः अष्टाध्यायीसूत्रपाठः, सम्पादकः – श्री प॰ ब्रह्मदत्तजिज्ञासु, रामलाल कपूर ट्रस्ट, सोनीपत, तृतीयं संस्करणम्, 2018
3. व्याकरणमहाभाष्यम्, सम्पादकः – श्रीगुरुप्रसादशास्त्री, प्रतिभाप्रकाशनम्, देहली, प्रथमसंस्करणम्, 1938
4. परिभाषेन्दुशेखरः, हिन्दीव्याख्याकारः – आचार्यविश्वनाथमिश्रः, चौखम्बासुरभारतीप्रकाशनम्, वाराणसी, प्रथमसंस्करणम्, 2014
5. परमलघुमञ्जूषा, सम्पादको व्याख्याकारश्च – प्रो॰ बोधकुमारझाः, हंसाप्रकाशनम्, जयपुर, संस्करणम्, 2018
6. लघुशब्देन्दुशेखरः, सम्पादकः – प्रो॰ बालशास्त्री, चौखम्बासुरभारतीप्रकाशनम्, वाराणसी, संस्करणम्, 2013
7. तत्त्वबोधिनीसमाख्यव्याख्यासंवलितासिद्धान्तकौमुदी, चौखम्बासंस्कृतप्रतिष्ठानम्, देहली, संस्करणम्, 2010
8. वैयाकरणभूषणसारः प्रभादर्पणव्याख्याद्वयोपेतः, सम्पादकः – श्रीबालकृष्णपञ्चोली, चौखम्बा-संस्कृतसंस्थानम्, संस्करणम्, वि॰सं॰ 2068, ई॰ 2012
9. परमलघुमञ्जूषा, भावप्रकाशिका, बालबोधिनी संस्कृतहिन्दीव्याख्योपेता, व्याख्योपेता, व्यख्याकारः सम्पादकश्च – डा॰ जयशङ्करलालत्रिपाठी, चौखम्बाकृष्णदासअकादमी, वाराणसी, चतुर्थसंस्करणम्, 2011


~~~~~~~~~~~
~~~~~~~~~~~

वर्षम्-०४ अङ्कः-०४ शोधज्योतिः
जनवरी-दिसम्बर, २०२२ ISSN-2350-0700

# भारतीयज्योतिषशास्त्रे कालगणनापद्धतिः

सुश्री अपूर्वा अग्रवाल[१]

**प्रस्तावना-**

**ज्योतिषां ग्रहनक्षत्राणां गतिमधिकृत्य कृतं शास्त्रं ज्यौतिषमुच्यते।**[२] वेदपुरुषस्य षड्ङ्गेषु[३] नेत्रस्वरूपं[४] ज्योतिषशास्त्रं कालविधानशास्त्रं वर्तते। अस्य शास्त्रस्य वेदाङ्गत्वं कालविधायकत्वादेव-

**वेदास्तावद्यज्ञकर्मप्रवृत्ता यज्ञाः प्रोक्तास्ते तु कालाश्रयेण।**
**शास्त्रादस्मात् कालबोधो यतः स्याद्वेदाङ्गत्वं ज्यौतिषस्योक्तमस्मात्॥**[५]

अर्थाद्वेदस्य यज्ञकर्मणि प्रवृत्तिर्भवति,यज्ञाश्च कालाश्रिताः यतोहि शुभकाले विहितेन यज्ञेनेप्सितफलस्य प्राप्तिर्जायते अनुचितकाले च यज्ञानुष्ठानं विफलं भवति। निर्णीयते च शुभाशुभकालं कालज्ञापकेन ज्योतिषशास्त्रेण तदर्थमेतस्य शास्त्रस्याङ्गीकृतं वर्तते वेदाङ्गत्वम्।

स्वसंहितायां नारदमुनिना ज्योतिषशास्त्रस्य मुख्यं प्रयोजनं कालविनिर्णयमिति प्रोक्तम्-

**यज्ञाध्ययनसंक्रान्तिग्रहषोडशकर्मणाम्।**
**प्रयोजनं च विज्ञेयं तत्तत्कालविनिर्णयात्॥**[६]

तथैव ऋग्वेदभाष्यभूमिकायामपि ज्योतिषशास्त्रस्य प्रयोजनं **'यज्ञकालार्थं सिद्धये'** इति पदेन निगदितम्।

भारतीयकालगणनापद्धतिरतिप्राचीना ज्योतिषशास्त्राधारिता च वर्तते। सम्प्रति सर्वे जना आधुनिककालगणनानुसारं स्वदिनचर्यां चालयन्ति। कालस्य ज्ञानार्थम् आधुनिककालगणनाया आधारेण घटिका-चलदूरवाण्यादियन्त्राण्यप्याविष्कृतानि। तथापि अद्यावधि जनानां सर्वविध-सामाजिक-धार्मिक-सांस्कृतिककार्याणि सम्पद्यन्ते भारतीयज्योतिषकालगणनामाश्रित्य। यथा संक्रान्तेः पुण्यकालज्ञानं,

---

[१] *सहायिकाचार्या, ज्योतिषविभाग, श्रीसोमनाथसंस्कृतयुनिवर्सिटी, वेरावल, गीर-सोमनाथ, गुजरात, चलदूरवाणी-8770064783, e-mail- apoorvaag0211@gmail.com*

[२] *ज्योतिष प्रबन्धमणिमाला, पृ.32*

[३] *शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। मुण्डकोपनिषद् 1/1/5*

[४] *ज्योतिषामयनं चक्षुः। पाणिनीय शिक्षा 41*

[५] *सिद्धान्तशिरोमणिः, मध्यमाधिकारः, कालामानाध्यायः, श्लोकः-9*

[६] *नारदसंहिता 1/6*

षोडशसंस्काराणां कृते मुहूर्त्तनिर्धारणं, सूर्यचन्द्रमसोः ग्रहणकालसाधनं, विविधव्रत-पर्व-उपवास-यज्ञ-पूजनादीनां कृते उचिततिथि-वार-नक्षत्र-मासादीनां निर्णयः, अधिमास-क्षयमासयोरानयनमित्यादयो विषयाः भारतीयज्योतिषकालगणनाश्रिताः। अनेन वर्तमानसमयेऽपि भारतीयज्योतिषीय-कालगणनायाः ज्ञानमत्यावश्यकमिति धिया शोधपत्रेऽस्मिन् भारतीयज्योतिषशास्त्रे कालगणनापद्धतिः संक्षेपेण विमृश्यते।

**'कल्-संख्याने'** इति धातोः कर्त्रर्थे घञि कालोऽयं शब्दः निष्पद्यते। श्रीमदन्नम्भट्टः स्वीये तर्कसंग्रहे कालस्य लक्षणमिदं प्रोक्तम्-

**अतीतादिव्यवहारहेतुः कालः। स चैको विभुर्नित्यश्च।**[७]

अर्थात्सत्यपि विभुत्वे अतीतवर्तमानभविष्यद्व्यवहारस्य निमित्तकारणत्वं कालत्वम्। स एको विभुर्नित्यश्च कालो लोके व्यवहर्तुं, विविधानि कार्याणि च सम्पादयितुम् अतीतवर्तमानभविष्यद्रूपेण दृश्यते।

**कालविभागः**

**लोकानामन्तकृत् कालः कालोऽन्यः कलनात्मकः।**
**स द्विधा स्थूलसूक्ष्मत्वान्मूर्तश्चामूर्त उच्यते॥**[८]

वस्तुतस्तु कालो द्विप्रकारकः। एकः समस्तचराचरजगतामन्तकृत्[९] द्वितीयश्च कलनात्मको नाम गणनात्मकः। तस्य च कलनात्मककालस्य पुनः स्थूलसूक्ष्मरूपेण भेदद्वयं वर्तते। स्थूलकालस्य व्यवहारे उपयोगवशान्मूर्त्तसंज्ञा, सूक्ष्मकालस्य च व्यवहारे अनुपयोगिताकारणादमूर्त्तसंज्ञा भवति –




**सूक्ष्मकालः-** सूक्ष्मकालस्य मानमतिन्यूनं वर्तते तदर्थं कालोऽयममूर्त्ताख्यः। व्यवहारे कालगणनायां सूक्ष्मकालस्योपयोगो न भवति तथाप्येतस्य परित्यागो नैव कर्तुं शक्यते। यतोहि सूक्ष्मान्तरं कालान्तरे गणनायां स्थूलतामुत्पादयति तदर्थं सूक्ष्मकालस्य ज्ञानमत्यावश्यम्। सूक्ष्मकालस्य न्यूनतमा इकाई त्रुटिः

---

[७] *तर्कसंग्रहः, द्रव्यलक्षणप्रकरणम्, पृ.13*

[८] *सूर्यसिद्धान्तः 1/10*

[९] *कालोऽस्मि लोकक्षयकृत्प्रवृद्धो लोकान्समाहर्तुमिह प्रवृत्तः। श्रीमद्भगवद्गीता 11/32*

भवति। यथोक्तं सूर्यसिद्धान्ते **'त्रुट्याद्योऽमूर्तसंज्ञकः'**[१०]। सूचीद्वारा पद्मपत्रस्य भेदनार्थं यावत्कालोऽपेक्षते तावत्परिमाणसमैकत्रुटिर्भवति। सूक्ष्मकालस्य विवरणमित्थं वर्तते-

**सूच्या भिन्ने पद्मपत्रे त्रुटिरित्यभिधीयते।**
**तत्षष्ट्या रेणुरित्युक्तो रेणुषष्ट्या लवः स्मृतः।**
**तत्षष्ट्या लीक्षकं प्रोक्तं तत्षष्ट्या प्राण उच्यते॥**[११]

अर्थात् 1 त्रुटिः =सूच्या पद्मपत्रस्य भेदनकालः
60 त्रुटयः = 1 रेणुः
60 रेणवः = 1 लवः
60 लवाः = 1 लीक्षकम्
60 लीक्षकाणि = 1 प्राणः = 4 सेकेण्ड

**स्थूलकालः-** लोकव्यवहारे स्थूलकालेन कालस्य गणना क्रियते। स्थूलकालो मूर्त्तसंज्ञको भवति। एतस्य न्यूनतमा इकाई प्राणो वर्तते। एकः स्वस्थपुरुषः यावता कालेन एकवारं श्वासोच्छवासक्रिया सम्पादयति तत्तुल्यकालोऽथवा अव्याहतदशदीर्घाक्षराणामुच्चारणतुल्यकालः प्राण इति। पाश्चात्यकालगणनानुसारमेकस्य प्राणस्य मानं 4 सेकेण्ड इति परिमाणतुल्यं वर्तते। सूर्यसिद्धान्ते स्थूलकालस्य विभाग एवं प्राप्यते-

**प्राणादिः कथितो मूर्तः..................................।**
**षड्भिः प्राणैर्विनाडी स्यात् तत्षष्ट्या नाडिका स्मृता॥**
**नाडीषष्ट्या तु नाक्षत्रमहोरात्रं प्रकीर्तितम्।**
**तत्त्रिंशता भवेन्मासः ......................॥**[१२]

अर्थात् 1 प्राणः/असुः = अव्याहतदशगुर्वक्षराणामुच्चारणकालः =4 सेकेण्ड
6 प्राणाः= 1 पलम् = 60 विपलानि = 24 सेकेण्ड (1 सेकण्ड = $2\frac{1}{2}$ विपलानि)
60 पलानि = 1 घटी = 24 मिनट (1 मिनट = $2\frac{1}{2}$ पलानि)
60 घट्यः = 1 नाक्षत्रमहोरात्रम् = 24 घण्टा (1 घण्टा = $2\frac{1}{2}$ घट्यः)
30 अहोरात्राणि = 1 मासः
12 मासाः = 1 वर्षम्

[१०] *सूर्यसिद्धान्तः 1/11*
[११] *सूर्यसिद्धान्तः, तत्त्वामृतभाष्यम् 1/11-12*
[१२] *सूर्यसिद्धान्तः 1/11-12*

श्रीब्रह्मगुप्ताचार्यः स्वब्राह्मस्फुटसिद्धान्ताख्ये ग्रन्थे उपरोक्तप्रकारेण स्थूलकालस्य विभागमुक्त्वा कालक्षेत्रविभागयोर्मध्ये तुल्यतां प्रदर्शयति। यथा प्राप्यते ग्रन्थे-

**"विकला लिप्तांश-राशि-भगणान्तः।**
**क्षेत्रविभागस्तुल्यः कालेन विनाडिकाद्येन॥"**[१३]

सिद्धान्तशिरोमणौ श्रीभास्कराचार्यः प्रकारद्वयेन स्थूलकालं विभाजयति। एकं तु पूर्वोक्तसमं द्वितीयञ्चेत्थम्-

**"निमेषैर्धृतिभिश्च काष्ठा तत्त्रिंशता सद्गणकैः कलोक्ता॥**
**त्रिंशत्कलाऽऽर्क्षी घटिका क्षणः स्यान्नाडीद्वयं तैः खगुणैर्दिनं च।**
**............ खरामैर्मासो दिनैस्तैर्द्विकुभिश्च वर्षम्।"**[१४]

अर्थात् 18 निमेषः=1 काष्ठा
30 काष्ठाः =1 कला
30 कलाः =1 नाक्षत्रघटी
2 नाक्षत्रघट्यौ =1 क्षणः/मुहूर्त्तः
30 क्षणाः =1 दिनम्/अहोरात्रम्
30 अहोरात्राणि =1 मासः
12 मासाः =1 वर्षम्

अतः त्रुट्येति सूक्ष्मकालत आरभ्य वर्षेति स्थूलकालपर्यन्तं भारतीयज्योतिषशास्त्रानुसारं कालविभागोऽनेन प्रकारेण क्रियते।

एतदतिरिच्य लोकव्यवहारार्थं कालगणनायाः स्वरूपमित्थं प्राप्यते-

15 अहोरात्राणि =1 पक्षः
2 पक्षौ =1 मासः
2 मासौ =1 ऋतुः[१५]
3 ऋतवः =1 अयनम्[१६]

---

[१३] *ब्रह्मस्फुटसिद्धान्तः 1/6*

[१४] *सिद्धान्तशिरोमणिः, मध्यमाधिकारः, कालामानाध्यायः श्लोकाः- 16-18*

[१५] *द्वौ द्वौ राशी मकराद्दतवः षट् सूर्यगतिवशाद् भाज्यः। शिशिरवसन्तग्रीष्मा वर्षाशरदः सहेमन्ताः॥ ब्रह्मस्फुटसिद्धान्तः, मानाध्यायः, श्लोकः- 7*

[१६] *1. भानोर्मकरसङ्क्रान्तेः षण्मासा उत्तरायणम्। कर्क्कादिस्तु तथैव स्यात् षण्मासा दक्षिणायनम्॥ सूर्यसिद्धान्तः 14/9*
*2. साम्प्रतमयनं सवितुः कर्कटकाद्यं मृगादितश्चान्यत्॥ बृहत्संहिता 3/2*

2 अयने =1 सौरवर्षम् (2 अयने – उत्तरायणं दक्षिणायनञ्च)

**महायुगस्य व्यवस्था**

यत्सौरवर्षं तदेव दिव्यदिनं नाम देवानां दैत्यानाञ्चैकमहोरात्रम्। तथा च मानुषमानवत् 360 दिव्यदिनैरेकं दिव्यवर्षमुच्यते। तद्द्वादशसहस्रैर्दिव्यवर्षैः स्वसन्ध्या-सन्ध्यांशपरिमाणसहितं कृत-त्रेता-द्वापर-कल्येति चतुर्युगमानं महायुगमिति नाम्ना ज्ञायते। एवमेकं महायुगं सौरमानेन विंशतिसहस्राधिकत्रिचत्वारिंशल्लक्षमितवर्षैः समं वर्तते-

**तद्द्वादशसहस्राणि चतुर्युगमुदाहृतम्।**
**सूर्याब्दसङ्ख्यया द्वित्रिसागरैरयुताहतैः॥**
**सन्ध्यासन्ध्यांशसहितं विज्ञेयं तच्चतुर्युगम्।**[१७]

अर्थात् 1 सौरवर्षम् =1 दिव्यमहोरात्रम् (देवासुराणामेकं दिनम्)

360 दिव्यमहोरात्रम् =1 दिव्यवर्षम्

12,000 दिव्यवर्षाणि =1 चतुर्युगम् = 1 महायुगम्

अतः 12,000 दिव्यवर्षाणि $\times$ 360 = 43,20,000 सौरवर्षाणि

पुनः महायुगान्तर्गतं धर्मपादव्यवस्थया ससन्ध्या-कृतादियुगानां मानं निगद्यते। यथा-

**कृतादीनां व्यवस्थेयं धर्मपादव्यवस्थया॥**
**युगस्य दशमो भागश्चतुस्त्रिद्व्येकसङ्गुणः।**
**क्रमात् कृतयुगादीनां षष्ठांशः सन्ध्ययोः स्वकः॥**[१८]

अर्थात् 12000 दिव्यवर्षाणि / 10= 1200 दिव्यवर्षाणि

अत्र सारिणीद्वारा ससन्ध्या-कृतादियुगानां मानं प्रस्तूयते-

| कृतादि-युगानि | सम्पूर्णमानम् | सन्ध्ययोः मानम् | आदौ सन्ध्यामानम् | अन्ते सन्ध्यामानम् |
|---|---|---|---|---|
| कृतयुगम् | 1200$\times$ 4 = 4800 | 4800/6= 800 | 800/2= 400 | 400 |
| त्रेतायुगम् | 1200$\times$ 3 = 3600 | 3600/6=600 | 600/2= 300 | 300 |

---

[१७] *सूर्यसिद्धान्तः 1/15-16*

[१८] *सूर्यसिद्धान्तः 1/16-17*

| | | | | |
|---|---|---|---|---|
| द्वापरयुगम् | 1200× 2 = 2400 | 2400/6=400 | 400/2= 200 | 200 |
| कलियुगम् | 1200× 1 = 1200 | 1200/6=200 | 200/2= 100 | 100 |

**नवविधकालमानम्**

भारतीयज्योतिषशास्त्रीयग्रन्थेषु स्थूलकालस्य ब्राह्मं, दिव्यं, पैत्र्यं, प्राजापत्यं, गौरवं, सौरं, सावनं, चान्द्रं, नाक्षत्रञ्चैतानि नवविधानि मानानि वर्णितानि सन्ति। यथोक्तं सिद्धान्ततत्त्वविवेके-

**ब्राह्मं दिव्यं तथा पैत्रं प्राजापत्यं गुरोस्तथा।**
**सौरं च सावनं चान्द्रमार्क्षं मानानि वै नव॥**[१९]

तान्यत्र क्रमेण विवेच्यन्ते-

1. **नाक्षत्रमानम् आर्क्षमानं वा–** प्रतिदिनं प्रवहवायुगत्या[२०] नक्षत्रमण्डलस्यैकवारं परिभ्रमणकालो नाक्षत्रदिनं प्रकीर्तितम्। प्रवहवायुना प्रेरितस्य कस्यापि नक्षत्रस्योदयद्वयान्तर्वती कालो नाक्षत्रदिनमुच्यते। एवञ्च यस्मिन् चान्द्रमासे पूर्णिमान्ते यन्नक्षत्रस्य योगो भवति तन्नक्षत्रनाम्ना तच्चान्द्रमासो व्यवहृयते यथा निर्दिष्टं ज्योतिषग्रन्थेषु-

**भचक्रभ्रमणं नित्यं नाक्षत्रं दिनमुच्यते।**
**नक्षत्रनाम्ना मासास्तु ज्ञेयाः पर्वान्तयोगतः॥**[२१]
**दिनमार्क्षं च भचक्रपर्ययः।**[२२]

2. **सावनमानम् –**सूर्यस्योदयादव्यवहितान्योदयं यावत्काल एकं सावनं दिनं वर्तते। तदेव सावनं दिनं मेदिनीदिनाख्यं कुदिनाख्यं वा भवति। यथोक्तम्-

**“इनोदयद्वयान्तरं तदर्कसावनं दिनम्।**
**तदेव मेदिनीदिनं”**[२३]
**उदयादुदयं यावत् सावनाहः प्रकीर्तितः॥**[२४]

---

[१९] *सिद्धान्ततत्त्वविवेकः, मानाध्यायः श्लोकः-13*

[२०] *भूवायुरावह इह प्रवहस्तदूर्ध्वः स्यादुद्वहस्तदनु संवहसंज्ञकश्च। अन्यस्ततोऽपि सुवहः परिपूर्वकोऽस्माद्बाह्यः परावह इमे पवनाः प्रसिद्धाः॥ भूमेर्बहिर्द्वादशयोजनानि भूवायुरत्राम्बुदविद्युदाद्यम्। तदूर्ध्वगो यः प्रवहः स नित्यं प्रत्यग्गतिस्तस्य तु मध्यसंस्था॥ नक्षत्रकक्षाखचरैः समेतो यस्मादतस्तेन समाहतोऽयम्। भपञ्जरः खेचरचक्रयुक्तो भ्रमत्यजस्रं प्रवहानिलेन॥ सिद्धान्तशिरोमणिः, गोलाध्याये मध्यगतिवासना श्लोकाः 1-3*

[२१] *सूर्यसिद्धान्तः 14/15*

[२२] *सिद्धान्तशेखरः 1/44*

[२३] *सिद्धान्तशिरोमणिः, मध्यमाधिकारः, कालामानाध्यायः श्लोकः-20*

[२४] *सिद्धान्ततत्त्वविवेकः 1/21*

अर्थात् सूर्योदयद्वयान्तर्गतः कालः= 1 सावनदिनम्

पुनः त्रिंशत्सावनदिनैरेकः सावनमासः, द्वादशभिः सावनमासैश्चैकं सावनवर्षं सम्पद्यते।

3. **चान्द्रमानम् –** सूर्यचन्द्रयोः संयुतेरन्ययुतिर्यावत्कालश्चान्द्रमासः। अमान्ते सूर्येन्द्वोर्युतिर्भवति। किञ्च चन्द्रस्याधिकगतिवशात् प्रतिदिनं सूर्येन्द्वोः गत्यन्तरं द्वादशांशमितं भवति। तद्द्वादशांशतुल्यैः गत्यन्तरैरेका तिथिः प्राप्यते। सा च तिथिरेकं चान्द्रदिनमुच्यते। एवं ज्ञायते यत् शुक्लपक्षप्रतिपदमारभ्यामान्तावधी सूर्येन्द्वोर्भगणांशतुल्यगत्यन्तरांशैः ($360^0$) त्रिंशत्तिथयो भवन्ति। तत्त्रिंशत्तिथिभिश्चैत्रादिचान्द्रमासो ज्ञायते। तद्यथा-

**अमान्तादमान्तं तु यावत् स चान्द्रो।**[२५]

**अर्काद् विनिस्सृतः प्राचीं यद्यात्यहरहः शशी।**

**तच्चान्द्रमानमंशैस्तु ज्ञेया द्वादशभिस्तिथिः॥**[२६]

अर्थात् रविचन्द्रयोर्गत्यन्तरम् = 12 अंशाः = 1 तिथिः = 1 चान्द्रदिनम्

रविचन्द्रयोर्गत्यन्तरम् = 360 अंशाः = 30 तिथयः = 1 चान्द्रमासः

पुनश्च स एव चान्द्रमासः स्पष्टसूर्यसंक्रान्तिं विना अधिमास एवञ्च स्पष्टसूर्यस्य द्विसंक्रान्तियुतेन क्षयमास इत्युच्यते।[२७]

4. **पित्र्यमानम् –**चान्द्रमास एव चन्द्रस्थानां पितृणामहोरात्रम्।[२८] एकस्मिन् चान्द्रमासे शुक्लकृष्णाख्यौ द्वौ पक्षौ भवतः। शुक्लपक्षस्य सार्धसप्तम्यां पितृणां 'रात्र्यारम्भः', शुक्लपक्षान्ते (पूर्णिमान्ते) 'रात्र्यर्धकालः', कृष्णपक्षसार्धसप्तम्यां 'दिनारम्भः', कृष्णपक्षान्ते (अमान्ते) च तेषां 'दिनार्धकालः' भवति-

**त्रिंशता तिथिभिर्मासश्चान्द्रः पित्र्यमहः स्मृतम्।**

**निशा च मासपक्षान्तौ तयोर्मध्ये विभागतः॥**[२९]

अर्थात् 30 तिथयः = 1 चान्द्रमासः = पितृणामहोरात्रम्

पुनश्च पूर्ववत् पित्र्यमानेन मासवर्षादयः गणयन्ते।

5. **गौरवमानम् –**गुरोः मध्यमगत्यैकराशिभोगकालो गौरववर्षं भवति। प्रोक्तं यथा-

**बृहस्पतेर्मध्यमराशिभोगात् संवत्सरं सांहितिका वदन्ति।**[३०]

---

[२५] *सिद्धान्ततत्त्वविवेकः 1/23*

[२६] *सूर्यसिद्धान्तः 14/12*

[२७] *स्पष्टार्कसङ्क्रान्तिविहीन उक्तो मासोऽधिमासः क्षयमासकस्तु। द्विसङ्क्रमस्तत्र विभागयोः स्तस्तिथेर्हि मासौ प्रथमान्त्यसञ्ज्ञौ॥ मुहूर्त्तचिन्तामणिः, 3/20*

[२८] *विधोर्मसि एतच्च पैत्रं द्युरात्रम्। सिद्धान्तशिरोमणिः, मध्यमाधिकारः, कालामानाध्यायः श्लोकः-19*

[२९] *सूर्यसिद्धान्तः 14/14*

[३०] *सिद्धान्तशिरोमणिः, मध्यमाधिकारः, कालामानाध्यायः श्लोकः-30*

अनेनैव विजयादयः षष्टिः संवत्सराः सिद्ध्यन्ति।

6. **सौरमानम् –** सूर्यबिम्बकेन्द्रस्य राशिप्रवेशकालः संक्रान्तिरिति। संक्रान्तिद्वयान्तर्वर्त्ती कालो[३१] नाम सूर्यस्यैकराशिभोगकालः[३२] सौरमास इत्युच्यते। तथैव सूर्यस्य पूर्वगत्या मेषराशिमारभ्य मीनराश्यन्तं भचक्रस्य भ्रमणकालः सौरवर्षाख्यो भवति- **"रवेश्चक्रभोगोऽर्कवर्षं प्रदिष्टम्"**[३३]

एवञ्च सूर्यसिद्धान्ते यथोक्तम्-

**रथे विश्वमये चक्रं कृत्वा सँव्वत्सरात्मकम्।**
**छन्दांस्यश्वांस्तत्र युक्त्वा पर्यटत्येष सर्वदा॥**[३४]

अनेन सूर्यस्य क्रान्तिवृत्तस्य[३५] एकाशंभोगकालेन सौरदिनं जायते।

7. **दिव्यमानम् –**

**"संक्रान्त्या सौर उच्यते।**
**मासैर्द्वादशभिर्वर्षं दिव्यं तदह उच्यते॥**
**सुरासुराणामन्योन्यमहोरात्रं विपर्ययात्।**
**तत्षष्टिः षड्गुणा दिव्यं वर्षमासुरमेव च॥"**[३६]

आशयोऽयं यत्सौरवर्षतुल्यं देवासुराणां दिव्यदिनाख्यमहोरात्रं विपर्ययाद्भवति। मेषप्रभृति कन्यान्तं यावत् षड्सु राशिषु (उत्तरगोले) सूर्यस्य सञ्चरणाद्देवानां दिनं दैत्यानाञ्च रात्रिः एवञ्च तुलादिमारभ्य मीनान्तं यावत् राशिषट्के (दक्षिणगोले) सूर्यस्य भ्रमणाद्दैत्यानामहः देवानाञ्च निशा भवति।[३७] तदेव 360 देवासुरद्युरात्रैरेकं दिव्यं वर्षमुच्यते-

अर्थात् 12 सौरमासाः = 1 दिव्यदिनम् (देवदानवयोः विपर्ययात्)
30 दिव्यदिनानि = 1 दिव्यमासः
12 दिव्यमासाः = 1 दिव्यवर्षम्

---

[३१] *भवेत् संक्रमात् सौरसंज्ञोऽत्र मासः। सिद्धान्ततत्त्वविवेकः 1/23*

[३२] *मेषादयो द्वादशैते मासास्तैरेव वत्सरः। सूर्यसिद्धान्तः, 14/10*

[३३] *सिद्धान्तशिरोमणिः, मध्यमाधिकारः, कालामानाध्यायः श्लोकः-19*

[३४] *सूर्यसिद्धान्तः 12/19*

[३५] *यत् कदम्बान्नवत्यंशैर्वृत्तं तत् क्रान्तिमण्डलम्। भवृत्तं च तदेवाऽत्र भ्रमत्यर्को निरन्तरम्॥ पं. श्रीसीतारामशर्मणा विरचिता गोलपरिभाषा, श्लोकः-29*

[३६] *सूर्यसिद्धान्तः 1/13-14*

[३७] *मेषादौ देवभागस्थे देवानां याति दर्शनम्। असुराणां तुलादौ तु सूर्यस्तद्भागसञ्चरः॥ मेरौ मेषादिचक्रार्धे देवाः पश्यन्ति भास्करम्। सकृदेवोदितं तद्वदसुराश्च तुलादिगम्॥ सूर्यसिद्धान्तः 12/45,67*

8. **प्राजापत्यमानम् –**पूर्वं महायुगमुक्तम्। तैः एकसप्ततिमितैः महायुगैरेकं मन्वन्तरमुच्यते। तदेव प्राजापत्यमानमिति संज्ञयाभिज्ञायते। प्राजापत्यमानेऽस्मिन् अन्यवद्द्युरात्रिविभागो न विद्यते। यथा प्राप्यते सूर्यसिद्धान्ते-

**युगानां सप्ततिः सैका मन्वन्तरमिहोच्यते।**[३८]
**"मन्वन्तरव्यवस्था च प्राजापत्यमुदाहृतम्।**
**न तत्र द्युनिशोर्भेदो"**[३९]

अर्थात् 71 महायुगानि = 1 मन्वन्तरम् = प्राजापत्यमानम्

9. **ब्राह्ममानम् –**उपर्युक्तैश्चतुर्दशभिर्मनुभिरेकः कल्पो वर्तते। कल्पे कृतयुगमानतुल्यं पञ्चदशसन्धयः भवन्ति, येन कल्पमानं सहस्रमहायुगात्मकं जायते। तत्कल्पो ब्रह्मणोऽहः तावत् प्रमाणिका च तस्य रात्रिर्वर्तते। अतः द्विसहस्रमहायुगसमं कल्पद्वयं ब्रह्मणोऽहोरात्रमिति। तद्यथा-

**मनुः क्षमानगैर्युगैर्युगेन्दुभिश्च तैर्भवेत्।**
**दिनं सरोजजन्मनो निशा च तत्प्रमाणिका॥**
**सन्धयः स्युर्मनूनां कृताब्दैः समा आदिमध्यावसानेषु तैर्मिश्रितैः।**
**स्याद्युगानां सहस्रं दिनं वेधसः सोऽपि कल्पो द्युरात्रं तु कल्पद्वयम्॥**[४०]

अर्थात् 14 मनवः + 15 सन्धयः = 1000 महायुगानि= 1 कल्पः= ब्रह्मणोऽहः
2 कल्पौ = ब्रह्मणोऽहोरात्रम्

पुनश्च ब्रह्मणोऽहोरात्रमानेन पूर्ववन्मासं वर्षञ्च मन्यते। अनेन स्वद्युरात्रसंख्यया वर्षशतं ब्रह्मणः परमायुर्मानं वर्तते। यथोच्यते सूर्यसिद्धान्ते –

**परमायुः शतं तस्य तयाऽहोरात्रसङ्ख्यया।**[४१]

श्रीमद्भगवद्गीतायामप्यनेनैव प्रकारेण ब्राह्ममानं निरूपितम्-

**सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः।**
**रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः॥**
**अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे।**
**रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसञ्ज्ञके॥**[४२]

---

[३८] *सूर्यसिद्धान्तः 1/18*
[३९] *सूर्यसिद्धान्तः 14/21*
[४०] *सिद्धान्तशिरोमणिः, मध्यमाधिकारः, कालामानाध्यायः श्लोकाः-23-24*
[४१] *सूर्यसिद्धान्तः 1/21*
[४२] *श्रीमद्भगवद्गीता 8/17-18*

पूर्वोक्तेषु नवविधकालमानेषु लोकव्यवहारे विविधप्रयोजनमनुदिश्य कालगणनार्थं चतुर्विधमानान्येव प्रयुज्यन्ते यथा- सौरमानम्, चान्द्रमानम्, नाक्षत्रमानम्, सावनमानञ्च–

**चतुर्भिर्व्यवहारोऽत्र सौरचान्द्रार्क्षसावनैः ।**[४३]

तर्हि व्यवहारप्रसङ्गे केन मानेन किं ग्राह्यमित्युच्यते स्वसिद्धान्तशिरोमणौ श्रीभास्कराचार्येण-

**वर्षायनर्तुयुगपूर्वकमत्र सौरान् मासास्तथा च तिथयस्तुहिनांशुमानात् ।**
**यत् कृच्छ्रसूतकचिकित्सितवासराद्यं तत् सावनाच्च घटिकादिकमार्क्षमानात् ॥**[४४]

अर्थाद् वर्ष-अयन-ऋतु-संक्रान्ति-ग्रहणादिज्ञानं, तत्सम्बन्धितञ्च सर्वं कार्यं सौरमानेन ग्राह्यते। वासरनिर्णयः, चिकित्सा, स्त्रीगर्भसम्बन्धिविधिः, यज्ञकालविधिः, सूतकं तस्य परिच्छेदज्ञानं, दिनमासवर्षेशाश्च सावनमानेन बोद्धव्यः। घटिकादिकं नाक्षत्रमानेन ग्राह्यं किञ्च चान्द्रमानेन मासाः, तिथयः, यात्रा, विवाहः, व्रतपर्वोपवासादयः, क्षौरादिक्रियाः ग्राह्याः।

विषयोऽयं श्रीब्रह्मगुप्ताचार्येण इत्थं व्याख्यायते-

**सौरेणाब्दा मासास्तिथयश्चान्द्रेण सावनैर्दिवसाः ।**
**दिनमासाब्दपमध्या न तद्विनाऽर्केन्दुमानाभ्याम् ॥**[४५]

अर्थात् वर्षाणि सौरमानेन, मासाः, तिथयश्च चान्द्रमानेन, दिनानि, दिनेशः, मासेशः, वर्षेशः, मध्यमग्रहाश्च सावनमानेन गृह्यन्ते।

**कालप्रवृत्तिः**

वस्तुतस्तु सृष्ट्यादौ कालस्य प्रवृत्तिविषये सांवत्सरेषु मतद्वयं प्रचलितम्। केषाञ्चनाचार्याणां (भास्कराचार्यादीनां) मते कल्पादिकालस्सृष्ट्यादिकालश्च सममेव भवति किञ्च केचनाचार्याः (सौरमतानुयायिनः) कल्पाद्यन्तरं समेषां चराचराणां सृष्टिं मन्यन्ते।

सिद्धान्तशिरोमणौ भास्कराचार्येण ब्रह्मदिनारम्भान्नाम कल्पादितः सृष्ट्यारम्भः, ब्रह्मदिनान्ते च सृष्ट्यन्तमुक्तं। तन्मतानुसारं रविवासरे चैत्रशुक्लप्रतिपदादितः लङ्कानगर्यां सूर्योदयकालाद्दिन-मासवर्षयुगादिकालावयवानां सममेव प्रवृत्तिर्भवति। यथोक्तम्-

**लङ्कानगर्यामुदयाच्च भानोस्तस्यैव वारे प्रथमं बभूव ।**
**मधोः सितादेर्दिनमासवर्षयुगादिकानां युगपत् प्रवृत्तिः ॥**[४६]

---

[४३] *सूर्यसिद्धान्तः 14/2*

[४४] *सिद्धान्तशिरोमणिः, मध्यमाधिकारः, कालामानाध्यायः श्लोकः-31*

[४५] *ब्राह्मस्फुटसिद्धान्तः, मानाध्यायः श्लोकः-1*

[४६] *सिद्धान्तशिरोमणिः, मध्यमाधिकारः, कालामानाध्यायः श्लोकः-15*

मतमिदं ब्रह्मगुप्तोऽपि वर्तते-

**चैत्रसितादेरुदयाद् भानोर्दिनमासवर्षयुगकल्पाः।**
**सृष्ट्यादौ लङ्कायां समं प्रवृत्ता दिनेऽर्कस्य॥**[४७]

परन्तु सूर्यसिद्धान्ते ब्रह्मणः दिनारम्भाच्चतुःशताधिकसप्तचत्वारिंशत्सहस्र 47400 दिव्यवर्षात्परं (47400x 360 = 17064000 सौरवर्षानन्तरं) सृष्ट्यारम्भः कल्पितः-

**ग्रहर्क्ष-देव-दैत्यादि सृजतोऽस्य चराचरम्।**
**कृताद्रिवेदा दिव्याब्दाः शतघ्ना वेधसो गताः॥**[४८]

दृश्यतेऽपि मतवैभिन्यं, कालप्रवृत्तिविषयकगणना तु तुल्यैव। यतोहि कल्पादि-सृष्ट्यादिकालयोर्मध्ये यदन्तरं तत्तुल्यमेवान्तरं कल्पान्त-सृष्ट्यन्तकालयोर्मध्ये वर्तते।

**वर्तमानकल्पे सृष्ट्यारम्भात् यातकालमानम्-**

सूर्यसिद्धान्ते कल्पारम्भाद्ग्रन्थस्य रचनाकालं यावन्नाम कृतयुगान्तपर्यन्तं कालगणना उल्लिखिता वर्तते। यथा –

**कल्पादस्माच्च मनवः षड् व्यतीताः ससन्धयः।**
**वैवस्वतस्य च मनोर्युगानां त्रिघनो गतः॥**
**अष्टाविंशाद्युगादस्माद्यातमेतत् कृतं युगम्।**
**अतः कालं प्रसङ्ख्याय सङ्ख्यामेकत्र पिण्डयेत्॥**[४९]

अर्थात् सूर्यसिद्धान्तस्य आरम्भसमये वर्तमानकल्पारम्भात् ससन्धयः षण्णां मनूनां कालो गत आसीत्। एवं सप्तमस्य वैवस्वताख्यस्य मनोरपि सप्तविंशतिः महायुगानि व्यतीतानि आसन्। अष्टाविंशतितमस्य महायुगस्यापि कृतयुगं गतमसीदिति। कालोऽयं गणितेन स्पष्टीक्रियते। तद्यथा-

1 मनुः = 71 महायुगानि (1 महायुगम् = 12,000 दिव्यवर्षाणि = 43,20,000 सौरवर्षाणि)

1 सन्धिः = 1 कृतयुगम् (1 कृतयुगम् = 4800 दिव्यवर्षाणि = 1728000 सौरवर्षाणि)

अतः 6 मनवः = 6x 71 = 426 महायुगानि = 5112000 दिव्यवर्षाणि

| | | |
|---|---|---|
| 7 सन्धयः | = 7x 4800 | =+ 33600 दिव्यवर्षाणि |
| 27 महायुगानि | = 27 x 12000 | =+ 324000 दिव्यवर्षाणि |

---

[४७] *ब्रह्मस्फुटसिद्धान्तः, मध्यमाधिकारः, श्लोकः-4*

[४८] *सूर्यसिद्धान्तः 1/24*

[४९] *सूर्यसिद्धान्तः 1/22-23*

1 कृतयुगम् = 1x 4800 =+ 4800 दिव्यवर्षाणि

**योगः = 5474400 दिव्यवर्षाणि**

अर्थाद्वर्तमानकल्पारम्भात् सूर्यसिद्धान्ताख्य-ग्रन्थारम्भकालपर्यन्तं 5474400 दिव्यवर्षाणि गतानि आसन्। पुनः ग्रन्थे कल्पारम्भकालात्परं 47400 दिव्यवर्षाण्यनन्तरं सृष्टिरुक्ता, तदर्थं सृष्ट्यादितः कृतयुगान्तं यावत् कालो गण्यते-

5474400 दिव्यवर्षाणि

\- 47400 दिव्यवर्षाणि

**5427000 दिव्यवर्षाणि**

सम्प्रति कलियुगं वर्तते। अतः त्रेतायुगस्य मानम् 3600 दिव्यवर्षाणि, द्वापरयुगस्य च मानम् 2400 दिव्यवर्षाण्यपि योज्यन्ते-

5427000 दिव्यवर्षाणि

\+ 3600 दिव्यवर्षाणि

\+ 2400 दिव्यवर्षाणि

**5433000 दिव्यवर्षाणि**

यतो हि 360 सौरवर्षैरेकं दिव्यवर्षमुच्यते, तदर्थम् 54,33,000 दिव्यवर्षाणि 5433000 x 360= 1,95,58,80,000 सौरवर्षाणां तुल्यं भवेयुः। अतः सृष्ट्यारम्भात् द्वापरान्तपर्यन्त 1,95,58,80,000 सौरवर्षाणि यातानि सन्ति।

पुनः श्रीकाशीविश्वनाथपञ्चाङ्गम् (हृषीकेशपञ्चाङ्गम्) श्रीसंवत् 2079 शकः 1944 इत्यस्यानुसारं अद्यावधि कलियुगस्य 5123 सौरवर्षाणि व्यतीतानि, तदर्थमेतन्मानमपि योज्यते-

1,95,58,80,000 सौरवर्षाणि

\+ 5,123 सौरवर्षाणि

**1,95,58,85,123 सौरवर्षाणि**

अनेन सिद्ध्यते यत् सृष्ट्यारम्भात्परं अद्यावधि (श्रीसंवत् 2079 शकः 1944, चैत्रशुक्लप्रतिपदा, दिनाङ्कः 2 अप्रैलः 2022 ई.) 1955885123 सौरवर्षाणि यातानि सन्तीति स्पष्टमभवत्।

अतः कथनमिदं सर्वथा सत्यमस्ति यद् भारतीयज्योतिषशास्त्रे वर्णिता कालगणनापद्धतिः सर्वथा सारगर्भिता, सार्वभौमिका, तात्त्विकी च वर्तते। भारतीयज्योतिषशास्त्रस्य सिद्धान्तग्रन्थेषु कालस्य दिन-मास-वर्षेत्यवयवानामधिपाः सूर्यादिसप्तग्रहाः स्मृताः।[५०]

[५०] *मन्दादधः क्रमेण स्युश्चतुर्था दिवसाधिपाः। वर्षादिपतयस्तद्वत् तृतीयाः परिकीर्तिताः॥ ऊर्ध्वक्रमेण शशिनो मासानामधिपाः स्मृताः। सूर्यसिद्धान्तः 12/78-79*

**होराज्ञानम्**

'होरा' कालस्य महत्त्वपूर्णोऽवयवो वर्तते। प्रतिदिनं चतुर्विंशतिसङ्ख्यका होरा भवन्ति तेषामधिपतयः कक्षास्थाः शन्यादिग्रहाः अधोऽधः क्रमेण भवन्ति।[५१]सूर्योदयकालेप्राप्तहोरायाः स्वामीग्रहस्तद्दिनस्याधिपतिः भवति, तस्य च नाम्ना तद्दिनं व्यवह्यते।अस्मादेव कारणात् प्रत्येकं वारः ग्रहाणां नाम्नाभिज्ञायते।

एषैव होरा पाश्चात्यकालगणनायां 'आउर' (Hour) इति रूपेण स्वीकृतं वर्तते। अत्रापि अस्य चतुर्विंशतिसंख्यया एकं दिनं, त्रिंशद्दिनैरेकः मासः, द्वादशभिर्मासैश्चैकं वर्षं कल्प्यते। अतः पाश्चात्यकालगणनाया आधारोऽपि भारतीयज्योतिषकालगणना एवेति सिद्ध्यते।

**उपसंहारः-** भारतीयकालगणनायाः आधारो वर्तते ज्योतिषशास्त्रम्। ज्योतिषशास्त्रीय-कालगणना-पद्धतेः वैशिष्ट्यमिदमपि वर्तते यदत्र दिग्देशं विचार्य कालगणना क्रियते। तदर्थमेव जन्मकुण्डली-निर्माणसमये देशान्तरसाधनं क्रियते येन कृतफलादेशः सत्यः भवति। सर्वेषाञ्च व्रतपर्वोपवासादीनां कृते शुभाशुभकालस्य निर्धारणे इयमेव ज्योतिषशास्त्रीय-कालगणना आश्रीयते। अनेन प्रकारेण ज्योतिषशास्त्रीय-कालगणनापद्धतिः पूर्णतया प्रकृत्याधारिता, वैज्ञानिकी, सुस्पष्टा, सरला, सर्वमान्या च वर्तते।

**सन्दर्भग्रन्थसूची-**


1. सूर्यसिद्धान्तः, आर्षः, सम्पादकः- श्रीकपिलेश्वरशास्त्री, श्रीतत्त्वामृतभाष्योपपत्ति-टिप्पणीसहितः, प्रकाशकः- चौखम्भा संस्कृत भवनम्, वाराणसी, पुनर्मुद्रितसंस्करणम् 2015
2. सिद्धान्तशिरोमणिः, रचनाकारः- श्रीभास्कराचार्यः, वासनाभाष्यसहितः श्रीमद्बापूदेवशास्त्रिभिः प्राक् संशोधितः, प्रकाशकः- चौखम्भा संस्कृत संस्थानम्, वाराणसी, पुनर्मुद्रितसंस्करणं वि.सं. 2070
3. सिद्धान्तशेखरः, रचनाकारः- श्रीपतिः, प्रकाशकः- कलिकाता-विश्वविद्यालयस्थ-मुद्रणालयः, वि.स. 1989
4. ब्राह्मस्फुटसिद्धान्तः, रचनाकारः- श्रीब्रह्मगुप्ताचार्यः, प्रधानसम्पादकः- आचार्यवर पंडित रामस्वरूप शर्मा, प्रकाशकः- इंडियन इंस्टीट्यूट आफ़ अस्ट्रानौमिकल एण्ड संस्कृत रिसर्च, प्रथमं संस्करणम् 1966
5. सिद्धान्ततत्त्वविवेकः, रचनाकारः- श्रीकमलाकरभट्टः, परिष्कर्त्तारौ- म.म. पण्डित-श्रीसुधाकरद्विवेदी तथा म. म. पण्डित-श्रीमुरलीधरशर्मा, प्रकाशकः- चौखम्भा सुरभारती प्रकाशनम्, वाराणसी, पुनर्मुद्रितसंस्करणम् 1991
6. बृहत्संहिता, रचनाकारः- वराहमिहिराचार्यः, सम्पादको व्याख्याकारश्च- डॉ. सुरकान्त झा, प्रकाशकः- चौखम्बा संस्कृत सीरीज आफिस, वाराणसी, द्वितीयं संस्करणं वि. सं. 2069, सन् 2012
7. नारदसंहिता, रचनाकारः- नारदमहामुनिः, व्याख्याकारः- आचार्य रामजन्म मिश्रः, प्रकाशकः- चौखम्भा संस्कृत संस्थानम्, वाराणसी, तृतीयं संस्करणं विं. सं. 2052


~~~~~~~~~~~

[५१] *होरेशाः सूर्यतनयादधोऽधः क्रमशस्तथा॥ सूर्यसिद्धान्तः 12/79*
~~~~~~~~~~~

वर्षम्-०४ अङ्कः-०४ शोधज्योतिः
जनवरी-दिसम्बर, २०२२ ISSN-2350-0700

# श्रीमल्लिनाथचरित्रे लैङ्गिकीसमानतायाः समीक्षात्मकम् अध्ययनम्

डॉ. दवे नेहल नरेन्द्रकुमार[1]

**Abstract/सारांशः**

नारीसम्बद्धाः अनेके व्यवहाराः मल्लिनाथचरित्रे प्राप्यन्ते। तेषु व्यवहारेषु अमुकत्र नारीभिः सह दुर्व्यवहाराः जाताः, अमुकत्र च नारीभिः पुरुषैः सह दुर्व्यवहाराः आचरिताः। अद्यत्वे अपि वयं पश्यामः यत्, एका महिला एव अपरायाः महिलायाः शत्रुत्वं वहति। वधूः एव श्वश्र्वा सह शत्रुवत् व्यवहारं कृत्वा सर्वदा तां पीडयति। बहुधा तद्विपरीतम् अपि भवति। एका महिला एव अपरायाः महिलायाः बलात्कारे सहयोगं करोति। एतादृश्यः घटनाः सम्प्रति सर्वत्र दृश्यन्ते। कुत्रचित् नारीणाम् अत्यन्तम् आधुनिकं रूपं दृष्टं, यत् अद्यत्वे नारीषु प्राप्यते, कुत्रचित् पारम्परिक-व्यवहारस्य पृष्ठे स्थिता भावना प्रत्यक्षा अभवत्। लैङ्गिकी-असमानता अस्माकं समाजस्य किञ्चन दूषणम् एव। लैङ्गिकीसमानता-स्थापने विघ्नाः अपि। परन्तु तस्य दूषणस्य परिहारः केवलं सर्वकारीय-नीतीनाम्, समाजसेवकानाम्, शिक्षाविदां च दायित्वं नास्ति। यतः समाजस्य प्रत्येकं परिवर्तनं व्यक्तिगत-विचाराणां साकाररूपम् एव भवति। क्रमशः व्यक्तिगतानां विचाराणाम् एव परिणामः अस्ति यत्, अद्य अस्माकं समाजः अनावश्यकीनाम्, कालातीतानां च परम्पराणाम् उन्मूलने सज्जः दरीदृश्यते। एतस्मिन् परिवर्तने समाजाय प्रेरणात्मकानि उदाहरणानि अपि अतीव आवश्यकानि भवन्ति, अतः मल्लिनाथ-चरित्रे उपस्थितानां पात्राणां लैङ्गिकी-समानतायाः दृष्ट्या समीक्षणम् अत्र क्रियते।

**<u>Keywords/मुख्यशब्दाः –</u>** श्रीमल्लिनाथचरित्र में लैङ्गिक समानता का समीक्षात्मक अध्ययन, श्रीमल्लिनाथचरित्र, श्री मल्लिनाथचरित्र, लैङ्गिकी समानता, लैङ्गिकी असमानता, संस्कृत साहित्य में लैङ्गिकी समनता, Critical Study of Gender Equality in Shri Mallinath Charitra, Shri Mallinath Charitra, Shri Mallinath Charitra, Gender Equality, Gender Inequality, Gender Equality in Sanskrit Literature

**Purpose/शोधोद्देश्यम् –** एतस्य संशोधनस्य उद्देश्यं लैङ्गिकसमनातयाः विश्लेषणस्य वर्तते।

- लैङ्गीकी-असमानतायाः विषये जनमानसे स्थितायाः भ्रान्त्याः उपशमनं भवेत्।
- संस्कृतसाहित्ये विद्यमानस्य महिलापात्रस्य अद्वितीयविचारधारायाः ज्ञानं भवेत्।

[1] *M.A., M.Phil. Ph.D., Assi. Pro. - Lakulish Yoga University, nehaldca08@gmail.com, 9427164478*

- कोऽपि एकः पक्षः कदाऽपि सर्वदा अनुचितः उत उचितः इति मनोवृत्तिः निवृत्ता भवेत्।
- पुरुषाः अपि कुत्रचित् पीडिताः इति अल्पे परन्तु कुत्रचित् दृष्टिगोचरं स्यात्।
- प्राचीनाः उत्तमाः उत अधमाः इति कुत्सिता भावना दूरं गच्छेत्।
- सर्वकाले मिश्रिताः जनाः भवन्ति, अतः अपराधे केवलम् एकः वर्गः, पक्षः उत समुदायः संल्लग्नः भवति इति भ्रान्तिः दूरीभवेत्।

**Type of Research/शोधप्रकारः –** एतत् समीक्षात्मकम् अनुसन्धाम् अस्ति, यतः एतस्मात् शोधपत्रात् उत्पन्न-परिणामानाम् उपयोगः वास्तविकतायाः विद्यार्थिषु, जनमानसे च प्रसारणाय कर्तुं शक्यते। एतस्मिन् शोधपत्रे पुरा महिलानाम्, पुरुषाणां च परस्परं कीदृशः व्यवहारः भवति स्म, तस्य व्यवहारस्य "आधुनिक"-परिगण्यमाणेन जनेन सह कः सम्बन्धः अस्ति इति सुचारुतया ज्ञातुं शक्यते।

**Preface/प्रस्तावना –**

अद्यत्वे महिला तु गौणा अस्ति, वञ्चिका अस्ति इत्यादीनि वाक्यानि न्यूनतया श्रूयन्ते। परन्तु कुत्रचित् तस्य प्रतिध्वनिः अद्याऽपि भारतीयसमाजं परिष्कारं प्रति नोदयति। एतादृश्यां स्थित्यां प्राचीनकालीने परिवारे महिलानां कीदृशी स्थितिः आसीद् इत्यस्य उत्तरं मल्लिनाथचरित्रे क्वचित् प्राप्यते। मल्लिनाथचरित्रे तु नार्याः उपस्थितिः परिवारस्य पूर्णतायाः प्रतीकत्वेन प्रदर्शिता अस्ति। यथा –

**सच्चक्रे पृथिवीपालः, श्रीपालश्रेष्ठिनं ततः। वध्वः सर्वाश्च हृष्टाङ्ग्यो, ह्याचारः कुलयोषिताम्॥**[२]

नलदमयन्त्योः वर्णनकाले अतीव शोभनः उल्लेखः प्राप्यते। यः तत्कालीने समाजे पत्न्याः महत्त्वं प्रदर्शयति। यथा - **<u>तेऽधुना दवदन्ती च, मित्रं मन्त्री प्रिया सखा॥</u>** अनेन पुरुषस्य जीवने नार्याः महत्त्वं प्रत्यक्षं भवति। सा केवलं पत्नी न अपि तु मित्रं, मन्त्री च अपि भवति स्म। परन्तु तस्मिन् समये श्वसुरस्य गृहे पत्युः अधिकनिवासः अनुचितः मन्यते स्म। अद्यत्वे पतिः पत्न्याः गृहे निवसति (घर जमाई), तथा प्राचीनकाले अपि भवति स्म इति प्रतीयते, परन्तु तत्कृत्यं हीनदृष्ट्या दृश्यते स्म। यथा –

**निद्राजुषि दवदन्त्यां, ध्यायति स्माथ नैषधिः। व्यसने श्वशुरस्याथ, धिग् मां शरणयायिनम्॥**[३]

अत्र परिस्थित्या पीडितो दम्पती दमयन्त्याः पितुः गृहं गच्छन् वर्तते, तस्मिन् समये नलस्य विचाराः प्रकटिताः कविना। परन्तु पत्न्याः कृते पत्युः गृहम् एव उचितम् उक्तम् अस्ति, न तु पितुः। अपरत्र यदि विवाहिता महिला/अविवाहितकन्या अधिकदिनानि पितुः गृहे निवसति, तर्हि तस्याः निन्दा भवति स्म। यथा - **<u>वरं पितृपितुर्गेहं न तु पत्नीपितुर्गृहम्।</u>**[४] पितुः गृहगमनात् मरणं वरम् इत्यपि उल्लेखः प्राप्यते अत्र। अनेन तत्कालीनस्य समाजस्य परम्परायाः कल्पना स्पष्टा भवति। पतिं विना नार्याः चारित्र्ये अपि शङ्का भवति स्म। यदि नारी पत्या सह भवति, तर्हि सा पतिव्रताव्रतस्य योग्यतया पालनं कर्तुं शक्नोति इति

---

*[२] मल्लिनाथचरित्रम्, अध्यायः – २, श्लो. ५४३*

*[३] मल्लिनाथचरित्रम्, अध्यायः – ६, श्लो. १६१*

*[४] मल्लिनाथचरित्रम्, अध्यायः – ६, श्लो. १७४*

विचारः। तद्व्रतम् एव नार्याः रक्षणं करोति इत्यपि सन्दर्भः दृश्यते। यथा - **पतिव्रताव्रतं स्त्रीणां क्षेमस्थेमावहं यतः।**[५] किम् अद्यतने समाजे अपि एतादृशः व्यवहारः न दृश्यते? अतः समाजे परिष्कारः इतोऽपि अवशिष्यते इति प्रतीयते।

**महिलाभिः सह जातः दुर्व्यवहारः**

पद्माक्ष्याः अपहरणं कृत्वा तस्याः बलात्कारं कर्तुं प्रयासः क्रियते। एतादृशम् एव वर्णनं मृच्छकटिके अपि प्राप्यते।[६] सीतया सह अपि एतादृशः व्यवहारः जातः इति उल्लेखः प्राप्यते।[७] [८] एतादृश्यां स्थित्यां महिलाः बहुधाः भीताः भवन्ति।[९] तस्याः भयस्य लाभम् अपराधी स्वीकरोति। रत्नचन्द्रनामकः राजकुमारः यदा वने आसीत्, तस्मिन् समये सः कस्याश्चित् अबलायाः क्रन्दनम् अश्रृणोत्। कश्चन कापालिकः राजभवनात् पद्माक्ष्याः अपहरणम् अकरोत्। उक्तं यथा –

**इति कापालिकोऽप्येष, जालकान्तरवर्तिनीम्**
**दृष्ट्वा मां कृत्रिमैः पुत्रैः, क्रीडन्ती ससखीजनाम्॥**
**पद्मिनीमिव मातङ्गः, करेणाभ्यासवर्तिनीम्।**
**पद्मिनीमिव मातङ्गः करेणाभ्यासवर्तिनीम्॥**[१०]
**अपाहार्षीदयं पापः पूर्ववैरस्मृतिरेव।**

हा तात! तात हा! हा बान्दव! हा भुननोत्तम बान्धव! सूरणकन्दस्य इव खड्गरूपेण दण्डेन मे शरीरस्य खण्डाः जायमानाः सन्ति इति।[११] सा विविधप्रकारेण क्रन्दनं करोति। यथा –

**नेयं वीरप्रसूः क्षोणी, नापि संक्रन्दनादयः।**
**लोकपाला यथार्थाख्या, हन्ये यदबला बलात्॥**[१२]

सः राजकुमारः अचिन्तयत्, नाथं विना एषा अबला त्रस्ता का वराकिका किमर्थं रुदिति? परन्तु क्षत्रिय-शब्दस्य अर्थं सिद्धं कुर्वन् यथार्थकर्तारः बलवन्तः जनाः स्वस्य देहस्य व्ययं कृत्वा अपि यत्नेन

---

[५] *मल्लिनाथचरित्रम्, अध्यायः – ६, श्लो. १९९*
[६] *मृच्छकटिकम्, अङ्कः - १, श्लो. १७*
[७] *रघुवंशमहाकाव्यम्, सर्गः २२, श्लो. २२*
[८] *जानकीहरणम्, सर्गः – १०, श्लो. ६९, ७०*
[९] *मृच्छकटिकम्, अङ्कः - १, श्लो. २२*
[१०] *मल्लिनाथचरित्रम्, अध्यायः – १, श्लो. ७१,७२*
[११] *हा तात! तात हा! भ्रातर्हा भ्रातर्भुवनोत्तम। खण्डशः खड्गयष्ट्याऽहं, क्रिये सूरणकन्दवत्॥४१॥ मल्लिनाथचरित्रम्, अध्यायः - १*
[१२] *मल्लिनाथचरित्रम्, अध्यायः – १, ४२*

अबलायाः रक्षणं कुर्युः[१३] इति विचिन्त्य सः ध्वनेः दिशां गतः। कापालिकः कश्चन मर्यादां विना अरण्ये अशरण्यायाः अबलायाः मानभङ्गं कर्तुम् उद्युक्तः आसीत्। अतः राजकुमारः तं भर्त्सयति। यथा –

**तन्मन्ये तव निर्लज्ज ! भुजौजः शिष्टगर्हितम्।**
**यदीदृशे जने दीने, प्रजिहीर्षुः प्रवर्तसे॥**[१४]

अत्र बाहुबलस्य अबलायाः उपरि उपयोगस्य राजकुमारः निन्दां करोति। परन्तु सः राजकुमारस्य उपरि एव प्रहारम् अकरोत्। ततः तयोः मध्ये भयङ्करं युद्धं भवति, अन्ते च राजकुमारः तस्य अबलाघातकस्य वधम् अकरोत्। एषः घटनाक्रमः २०१२ मध्ये निर्भया-काण्डस्य स्मरणं कारयति, यत्र मित्रमहिलायाः रक्षणं कुर्वन् कश्चन पुरुषः गभीरतया आहतः जातः। अन्ते ते दुष्टाः निर्भयायाः हत्याम् अकुर्वन्।[१५] [१६]

*पद्माक्ष्याः पुनः अपहरणप्रयासः भवति। पद्माक्ष्याः रक्षणे रत्नचन्द्रः तां सुरक्षिते स्थाने श्वापयित्वा अग्रभागे प्रतिहारित्वेन स्थितः आसीत्। तथाऽपि तस्याः अपहरणम् अभवत्।[१७] रत्नचन्द्रः सर्वत्र तस्याः अन्वेषणम् आरभत। परन्तु सा कुत्राऽपि न प्राप्ता। तस्याः अपहरणं कश्चन योगी अकरोत्। सा तया सह बलपूर्वकं विवाहं कर्तुम् इच्छति स्म। यथा –

**प्रत्यवादीदसौ बाले! जीवितं न हरामि ते। सिद्धमन्त्रौषधीवद्यं यदि मां परिणेष्यसि॥**[१८]

अनेन ज्ञायते यत् सा यदि विवाहाय निराकरिष्यत्, तर्हि सः ताम् अमारयिष्यत्। अतः सा युक्तिपूर्वकं कथञ्चित् स्वरक्षाम् अकरोत्।

*पद्माक्ष्याः हत्याप्रयासः – पद्माक्षी कथञ्चित् चन्द्रकलानामकं समुद्रद्वीपं प्राप्तवती। तत्र सा पूर्णतया एकाकिनी आसीत्। ताम् अबलां कश्चन पुरुषः पश्यति। अतः सः तया सह विवाहं कर्तुं प्रस्तावं करोति। यथा –

**दैवात् फलकमासाद्याऽन्तरीपं प्राप्य सुन्दरि! एकाकिनोऽद्वितीया मे, द्वितीया त्वं भविष्यसि॥**[१९]

---

*[१३] मल्लिनाथचरित्रम्, अध्यायः – १, श्लो. ४८*
*[१४] मल्लिनाथचरित्रम्, अध्यायः – १, श्लो. ५५*
*[१५] लेखकः पंकज के सिंग, समर्थ भारत, ISBN:9789350830253, सं. 2016, प्रकार - : ई-पुस्तक, प्रकाशक : Diamond Pocket Books Pvt Ltd, प्रकरण - १७.*
*[१६] https://hindi.webdunia.com/article/national-hindi-news/इन-बलात्कारियों-को-हुई-है-फांसी-की-सजा-113091300048_1.htm*
*[१७] मल्लिनाथचरित्रम्, अध्यायः – १, श्लो. ९१-९२*
*[१८] मल्लिनाथचरित्रम्, अध्यायः – १, श्लो. १३२*
*[१९] मल्लिनाथचरित्रम्, अध्यायः – १, श्लो. ३२१*

परन्तु पतिव्रता सा तस्य प्रस्तावं न स्वीकरोति।[२०] अतः सः पुरुषः तस्याः हत्यां कर्तुं प्रयतते। यथा –

**अथ बौहित्थिकस्तस्याः, कण्ठपाशं ददौ दृढम्।**
**एवं सौधर्मकल्पस्य, पश्यन्ति स्म सुधाभुजः॥ ३२४॥**
**तां पञ्चत्वदशां प्राप्तामपि पालितसव्रताम्। वनमालां विलोक्यैते, प्रादुरासन् सुधाशनाः॥ ३२५॥**

परन्तु दैवयोगात् तस्याः रक्षणम् अभवत्। एतेषां तुलना एसिड-प्रेषकैः, हत्याकर्तृभिः च कर्तुं शक्यते।[२१] [२२] उक्ते घटनाक्रमे महिलाविरुद्धानाम् अपराधानां वर्णनं वर्तमानसमाजस्य एव प्रतिबिम्बनं पातयति। एतादृशम् एव वर्णनं मृच्छकटिके अपि प्राप्यते।[२३] [२४] [२५] अनेन वर्तमानस्य समाजस्य इतोऽपि अधिका संवेदना महिलानां प्रति विकसनीया इति प्रतीयते।

**पुरुषेण सह महिलाद्वारा जातः दुर्व्यवहारः**

कोऽपि एकः पक्षः सर्वदा अपरे पक्षे अत्याचारं करोति इति शतप्रतिशतं सत्यं न भवति। पुरुषाः सर्वेऽपि दुष्टाः महिलाविरोधिनः इति चिन्तनं मूर्खाणाम् एव। यतः यत्र महिलाभिः सह दुर्व्यवहारस्य स्थितिः समुद्भवति, तत्र कुत्रचित् पुरुषः साहाय्यं कर्तुं प्रयतते। अनेन केचन पुरुषाः स्वस्य दायित्वानाम् अपि योग्यतया पालनं कुर्वन्ति। अपरत्र काश्चन महिलाः स्वस्याः कृते समाजे विकसितायाः संवेदनायाः लाभं स्वीकर्तुं प्रयतते। तस्याः एषः प्रयासः बहुधा पुरुषविरुद्धं दुर्व्यवहारं जनयति। महिलाः अतीव सहजतया आरक्षकाणाम् उत समाजस्य सम्मुखं स्वोत्पीडनस्य मिथ्या आरोपं पुरुषे कुर्वन्ति।[२६] एतादृशस्य गम्भीरस्य आरोपस्य कारणेन पद्मशेखरस्य जीवनम् अतीव अपमानयुक्तम् अभवत् इति कथा प्राप्यते।

**पुत्रस्य उपरि बलात्कारस्य मिथ्या आरोपः** – पुष्करवरद्वीपे चन्द्रकलानगर्यां परन्तप-नामकस्य राज्ञः शासनम् आसीत्। तस्याः पट्टराज्ञी यशोमत्याः ज्येष्ठः पुत्रः पद्मशेखरः इति प्रसिद्धः। पद्मशेखरस्य विमाता सोमा, स्वपुत्रं शूरं राजत्वेन द्रष्टुम् इच्छति स्म। अतः सा राज्ञः सम्मुखं मिथ्या उक्तवती यत्, भवतः पुत्रः पद्मशेखरः मया सह सम्भोगं कर्तुम् इच्छति इति गतरात्रौ सः मम सम्मुखं प्रस्तावम् अकरोत् इति। यथा –

---

[२०] *मल्लिनाथचरित्रम्, अध्यायः – २, श्लो. ३२२ – यत्र वा तत्र वा यातु कर्पासो लोठ्यते जनैः॥*

[२१] *https://www.abplive.com/states/delhi-ncr/noida-police-encounter-mamura-crazy-lover-threw-acid-on-girlfriend-ann-2168762 - २६/९/२२*

[२२] *https://www.youtube.com/watch?v=xmzNU1ZApVA&feature=emb_logo*

[२३] *मृच्छकटिकम्, अङ्कः - ८, श्लो. ३६, ३७*

[२४] *मृच्छकटिकम्, अङ्कः - ८, श्लो. ४१*

[२५] *मृच्छकटिकम्, अङ्कः १०, पृ. ५२२*

[२६] *https://www.thelallantop.com/oddnaari/post/if-the-girl-is-implicating-in-a-false-case-for-money-then-do-this-immediately २६/०९/२२*

**तव वल्लभपुत्रेण, पद्माख्येन स्मरान्ध्यतः। अभ्यर्थिता कृतस्नेह, प्रदोषे कुलरेणुना॥ ४८॥**
**निशम्येदं महीपालः, कोपाटोपं विनिर्ममौ। युक्तियुक्तं वचो नैतदविचार्येति चेतसा॥ ४९॥**
**आहूय चण्डनामानमङ्गरक्षं निशागमे। मारणीयो नवैमरैर्भवता पद्मशेखरः॥ ५०॥**[२७]

स्वपुत्रस्य स्वमातरि दुर्दृष्टिं ज्ञात्वा राज्ञः तस्मै मृत्युदण्डं प्रयच्छति। दैवयोगेन पद्मशेखरस्य रक्षणं भवति। परन्तु कविः तस्याः एतस्य आचरणस्य कृते निन्दां करोति। यथा –

**जगन्मोहनिदानाय, दुर्लक्षाय बुधैरपि। विवेकिजनमुक्ताय, स्त्रीवृत्ताय नमो नमः॥**
**सुस्नेहपात्रसंस्थायिदीप्ता दीपशिखा यथा। मलिनी तनुते लोललोचना निजमाश्रयम्॥**[२८]

वर्तमाने आधुनिके परीप्रेक्ष्ये अपि वयं पश्यामः। महिला विपुत्रे विपुत्र्यां श्वसुरपक्षे च अतीव कुव्यवहारं करोति इति। यतः महिलायै ये प्रियाः न भवन्ति, सा तान् कथञ्चिदपि पीडयति इति अद्यापि दृश्यते।[२९] एषः पुरुषेषु जायमानः महिलाभिः कृतः अत्याचारः।

समाजे बहुधा दरीदृश्यते यत् एका वधूः श्वश्र्वा ननन्दया च सह कलहं करोति, सा च परिवारं भङ्गयति, यतः गृहस्य महिलासु सा स्वश्रेष्ठतां सिद्धयितुम् उत ममत्वस्य कारणेन गृहस्य एकस्य भागस्य उपरि आधिपत्यं स्थापयितुं प्रयतते। एतस्यां प्रक्रियायां महिला अपरायाः महिलायाः एव हानिं करोति। नार्याः नारीविरुद्धं कृतम् अत्राऽपि प्राप्यते। यथा - मिथिलापुर्यां चोक्षानाम्ना योगिनी आसीत्। एकदा सा मल्लिकुमार्याः समीपं तस्यै धर्मज्ञानं दातुम् उपस्थिता। तस्याः वृत्तं श्रुत्वा मल्लिकुमारी तस्याः प्रभाविता न भवति। अन्ते गमनकाले सा चिन्तयति यत्, एनां सपत्नीषु पातयामि इति। यथा –

**भवेद् यथेयं दुःखार्ता, सपत्नीजनमध्यगा। तथा वेगात् करिष्यामि, सा यान्तीति व्यचिन्तयत्॥**
**एवं विचिन्त्य दर्पणाध्माता निर्गत्य पूर्वरात्। काम्पिल्यनगरं प्राप, पञ्चालमुखमण्डनम्॥**[३०]

काम्पिल्यनगरं यदा सा गच्छति, तदा तस्याः सम्माननं भवति। यतः पञ्चालमुखमण्डनम् इति उक्तम् अस्ति।

उक्तोदाहरणेन समाजः अवगच्छति यत् दोषः सर्वदा एकस्य भवति इति न चिन्तनीयम्। ततोऽधिकं समाजः सर्वदा मिश्रितैः आचरणैः ग्रन्थितः भवति। तत्र पुरुषस्य एकप्रकारकः एव व्यवहारः, महिलायाः एकप्रकारकश्च व्यवहारः इति न। अद्यत्वे तु महिलाः अपि स्वप्रेम्णः प्रस्तावं पुरुषाणां सम्मुखं

---

[२७] *मल्लिनाथचरित्रम्, अध्यायः - १*
[२८] *मल्लिनाथचरित्रम्, अध्यायः – १, श्लो. ५७-५८*
[२९] *https://www.livehindustan.com/ncr/story-case-filed-on-false-accusation-of-rape-girl-can-be-sentenced-to-7-years-3952254.html २६/९/२२*
[३०] *मल्लिनाथचरित्रम्, अध्यायः – ५, श्लो. १२८-१२९*

कुर्वन्ति। एतादृशं मल्लिनाथचरित्रेऽपि प्राप्यते। कश्चन मन्त्रिपुत्रः नयनसारः अतीव बुद्धिमान् आसीत्। अतः तस्य राज्यस्य राजकुमारी तं प्रति आकर्षिता भवति। सा तस्य सम्मुखं विवाहस्य प्रस्तावं करोति। यथा –

**देवानामर्थनीया त्वं, यदि प्रार्थयसे च माम्।**
**तद् मे सभाग्यं सौभाग्यं, किन्तु किञ्चन वच्म्यहम्॥**
**त्वं कन्यकाऽसि भूमीन्दोस्तत्पत्तेरस्मि नन्दनः।**
**मृगद्विपेन सम्बन्धः, किं भद्रायाः प्रशस्यते?॥**

परन्तु सः मन्त्रिपुत्रः तां तथा न कर्तुं निवेदयति। तथाऽपि सा विवाहं कर्तुं तं मन्त्रिपुत्रं विवशं करोति। स्वलक्ष्यं साधयितुं सा आत्महत्यायाः आलम्बनम् अपि स्वीकरोति। यथा –

**उवाच राजपुत्री च, यदि त्वं सदयो मयि। तदा सत्यं कुरु वचोऽपरथाऽग्निर्वरो मम॥**[३१]

परन्तु मन्त्रिपुत्रः तया सह विवाहं न करोति। यतः तस्य मते एतादृशः विवाहः अयोग्यः आसीत्। परन्तु अविचार्य राजकुमारी तेन सह विवाहं कर्तुम् उद्युक्ता आसीत्, अतः अन्येन पुरुषेण सह तस्याः विवाहः जातः। तस्मिन् समये राजकुमारी स्वाचरणस्य प्रभावः अन्यासु बालिकासु अपि भविष्यति इति विचिन्त्य खेदम् अनुभवति। यथा –

**अन्यासामपि स्वच्छन्दचारिणीनां जगत्यपि। भग्नो मार्गो मयाऽवश्यं, नयसारप्रयोगतः॥**
**आत्मकुलक्षयत्रासाद्, नयसारेण बुद्धितः। उद्वाहितो धिया न्यूनो, नूनं विनयचट्टकः॥**[३२]

अत्र नारीभिः अविचार्यकृतस्य कृत्यस्य वर्णनं कृतम् अस्ति। एतस्याः नार्याः कृत्यम् अन्यासु नारीषु अपि प्रभावितं भवति इति उल्लिखितम् अस्ति। अग्रे सा स्वपतिना सह अपि सम्भाषणं न करोति, यतः सा तस्मिन् न स्निह्यति स्म। परन्तु अन्ते सा तस्य कृते प्रेम अनुभवति। ततः तस्याः पतिः अपि गर्वान्वितः भवति। यथा –

**तदाऽऽदेशवशादेष, प्रमोदोन्मादमासदत्। धन्योऽहमद्य सद्धात्र्या, भाषितो गौरवोत्तरम्॥**[३३]

अनेन पुरुषस्य जीवने महिलायाः माहात्म्यस्य दर्शनं भवति।

## Epilogue/उपसंहारः –

इतोऽपि समाजः आधुनिकतायाः आलम्बनं स्वीकृत्य पुरातनानाम् आचाराणाम् एव अनुसरणं कुर्वन् अस्ति। अस्मिन् समाजे महिलायाः विरुद्धम् अपराधाः पूर्ववत् सन्ति[३४], परन्तु पुरुषाः अपि पूर्ववत्

---

[३१] *मल्लिनाथचरित्रम्, अध्यायः – २, श्लो. ४०६*

[३२] *मल्लिनाथचरित्रम्, अध्यायः – २, श्लो. ४२६-४२७*

[३३] *मल्लिनाथचरित्रम्, अध्यायः – २, श्लो. ४८८*

[३४] *http://www.stopstreetharassment.org/resources/statistics/statistics-academic-studies/*

स्वदायित्वस्य यथाशक्ति वहनं कुर्वन्ति इत्यपि प्रतीयते। न्यायप्रणाली तु महिलाविरुद्धानाम् अपराधानां कृते कठोरा अस्ति।[३५] [३६] अपरत्र महिलाभिः स्वार्थवशात् अन्यमहिलायाः हानिः सततं क्रियते,[३७] तेन न तु महिलानाम् अचला हानिः भवति। यतः एतादृशीनां घटनानां लाभं स्वीकृत्य पुनः कश्चन आरोपी आत्मानं निर्दोषं सेद्धुं शक्नोति। समाजस्य एतद्दूषणं विद्यार्थिषु युववर्गे च अधिकं विकसितुं शक्नोति, यदि तेषां सम्मुखं योग्यानि उदाहरणानि न स्थापितानि। एषः लेखः केवलं सङ्केतमात्रं करोति। तत्र संस्कृतसाहित्यस्य एषः श्लोकः अतीव महत्त्वपूर्णः भवति। यथा -

**अन्यासामपि स्वच्छन्दचारिणीनां जगत्यपि। भग्नो मार्गो मयाऽवश्यं, नयसारप्रयोगतः॥**

## Bibliography/सन्दर्भग्रन्थाः


* आचार्यविनयचन्द्रसूरिविरचितं मल्लिनाथचरित्रमहाकाव्यम्, प्रकाशकः – स्व. श्री पंन्यासप्रवरश्री कान्तिविजयजी गणिवर जैन ग्रन्थमाला, हळवद, सम्पादकः – जयशिशु पू. सा. श्री सौम्यज्योतिश्रीजी म.सा., प्रकाशनवर्षम् – २०७१, चैत्रवद – ५, आवृत्तिः, प्रथमा, भाषा- गुजराती
* कुमारदासरचितम् जानकीहरणम्, अनुवादकः – वज्रमोहनव्यासः, सम्पादकः – श्रीकृष्णदासः, प्रकाशकः – मित्र प्रकाशन प्राइवेट लिमिटेड, इलाहाबाद – 3, संस्करणं – १९६६ ई.
* शूद्रकरचितं मृच्छकटिकम्, "विमला"-संस्कृत-हिन्दीव्याख्योपेतं, व्याख्याकारः – आचार्य जगदीशचन्द्र मिश्र, प्रकाशकः – चौखम्बा सुरभारती प्रकाशन – वाराणसी, संस्करणं – २०१५ ई. ISBN – 978-93-81484-57-9
* महाकविकालिदासरचितं रघुवंशम्, सम्पादकः – श्री रामचन्द्र झा, हिन्दीव्याख्याकारः – पण्डित लक्ष्मीप्रपन्नाचार्यः, प्रकाशकः – चौखम्बा कृष्णदास अकादमी – वाराणसी, ISBN – 9788121800986, संस्करणम् – २०१७
* लेखक - रामनाथ शर्मा एवं राजेन्द्र शर्मा, भारत में सामाजिक परिवर्तन एवं सामाजिक समस्याएँ प्रका. - अटलांटिक प्रकाशक और वितरक (पी) लिमिटेड, सं – 1996, ISBN – 8171565913
* International Labour Office, ABC of Women Workers' Rights and Gender Equality ilo.org


---

[३५] *https://aajtak.intoday.in/story/delhi-african-immigrants-rapists-jailed-court-ignores-sex-worker-past-1-787385.html*

[३६] *https://hindi.mapsofindia.com/my-india/how-rape-convicts-are-punished-in-india-and-other-countries/*

[३७] *https://www.livehindustan.com/punjab/story-chandigarh-university-hostel-girl-made-video-of-60-girls-while-taking-bath-gone-viral-7097060.html २७/९/२२*

* Ann Oakley, Sex, Gender and Scoiety, Ashgate publication, ISBN – 978-1-4724-3562-0

* Kamala Bhasin, Understanding Gender, Women Unlimited, ISBN – 81-88965-17-7

* Nikhil Mahajan, Oh Yes! All men are dogs, Pub – Shristi Publication and Distribution, Vir – 2013, ISBN – 9380349971.

**Websites/जालस्थानानि**

* hindi.webdunia.com/ * abplive.com

* thelallantop.com * livehindustan.com

* stopstreetharassment.org * aajtak.intoday.in

* hindi.mapsofindia.com * archive.org

* athomedad.org * ohchr.org

~~~~~~~~~~~
~~~~~~~~~~~

वर्षम्-०४ अङ्कः-०४ शोधज्योतिः
जनवरी-दिसम्बर, २०२२ ISSN-2350-0700

# बालमनोरमादिशा "इको गुणवृद्धी"-सूत्रपरिशीलनम्

पण्ड्या योगेशः एन्.[१]

❖ **प्रमुखशब्दाः**

परिभाषा, इकः, गुणः, वृद्धिः, पदोपस्थितिपक्षः, सामानाधिकरण्यम्, वैय्यधिकरण्यम्।

## शोधसारः

षड्विधेषु सूत्रेषु संज्ञापरिभाषासूत्राणां विधिसूत्रैस्सह लक्ष्यसंस्कारकवाक्यार्थबोधजनने महदुपादेयत्वं परिलक्ष्यते। व्याकरणशास्त्रे यदा क्वचन सौत्रो वा रूपनिष्पादनसम्बद्धः अनियमः प्रसज्यते तत्र व्यवस्थासम्पादकानीमानि परिभाषासूत्राणि अनियमम् अपाकृत्याभीष्टरूपं साधयन्ति। अनुसन्धाता शोधपत्रेऽस्मिन् परिभाषासूत्रेष्वन्यतमम् **"इको गुणवृद्धी"**[२] इतीदं परिभाषासूत्रं विषयीकृत्य बालमनोरमाटीकानुगुणं विमर्शं प्रतुष्टुषति।

## प्रास्ताविकम्

परितः = शास्त्रे सर्वत्र, व्यापृतां = नियमरूपेण व्यापारवतीं, भाषां = वाचं, परिभाषां वदन्तीत्यभियुक्तोक्तिमनुसृत्य शास्त्रे सर्वत्र अनियमे नियमरूपव्यापारवती परिभाषेति तल्लक्षणं विद्वांसो भवन्ति। पाणिनीयतन्त्रे परिभाषासूत्राणि प्रदीपसन्निभानि भवन्ति। यथा गहनतमोव्याप्ते वेश्मनि प्रदीपः एकत्र स्थितोऽपि कृत्स्नं सद्म प्रकाशयति। तदुक्तञ्च परिभाषेन्दुशेखरे नागेशभट्टेन यथोद्देशकार्यकालपक्षद्वयव्याख्याप्रसङ्गे –**"कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति। यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्माभिज्वलयति इति "षष्ठी स्थाने" (१.१.४९)इति सूत्रभाष्ये उक्तम्।"**[३] सम्प्रति प्रकृतविषयमनुसृत्य यथाग्रन्थं विमृश्यते।

---

*[१] शोधच्छात्रः, श्रीसोमनाथ संस्कृत विश्वविद्यालयः, वेरावलम्, गुजरातम्, Email: yogesh.pandya@sgvp.in, Mo: 8980409182*

*[२] अष्टाध्यायी १.१.३*

*[३] परिभाषेन्दुशेखरः – भट्टनागेशकृतः, वैद्यनाथकृत"गदा"टीकासंकलितः, आनन्दाश्रमसंस्कृतग्रंथावलिः, ग्रंथाङ्कः ७२, ख्रीस्ताब्दः १९१३ पृ-४*

**परिशीलनम्**

- ❖ **इको गुणवृद्धी (पा.सू. १.१.३)**[४]
- ❖ **वृत्तिः** –गुणवृद्धिशब्दाभ्यां यत्र गुणवृद्धी विधीयेते तत्र **इकः** इति षष्ठ्यन्तं पदमुपतिष्ठते[५]।
- ❖ **सूत्रविवरणम् –**

परिभाषाप्रकरणस्यादिमं सूत्रम्। द्विपदात्मकमिदं सूत्रम् **इकः गुणवृद्धी** इति। अष्टाध्याय्यां प्रथमपादे तृतीयमिदं सूत्रम्। बालमनोरमानुगुणम् **इको गुणवृद्धी** सूत्रस्य विमर्शः।

परिभाषासूत्रस्यास्य पूर्वं **"वृद्धिरादैच्"**[६] **"अदेङ्गुणः"** (पा.सू.१.१.२) इति सूत्रद्वयस्ति। अतो **"वृद्धिरादैच्"** (पा.सू.१.१.१) इत्यस्माद् **वृद्धिः** इति पदम्। **"अदेङ्गुणः"**[७] (पा.सू.१.१.२) इत्यस्माद् **गुणः** इति पदञ्च अनुवर्तते।

गुणश्च वृद्धिश्च इति गुणवृद्धी इति इतरेतरद्वन्द्वः। सूत्रस्थम् **इकः** इति षष्ठ्यन्तपदं स्वरूपबोधकमस्ति। क्लीबे च प्रथमैकवचने विद्यते। **इकः** इत्येतत् इकस् इति षष्ठ्यन्तस्यानुकरणमस्ति। इकस् इत्यस्मात्सुप्रत्यये, अत्र **अत्वसन्तस्य चाधातोः** (पा.सू.६.४.१४) इति सूत्रेण असन्तस्य धातुभिन्नस्य असम्बुद्धौ सौ परे दीर्घः प्राप्यते, किन्तु **स्वमोर्नपुंसकात्** (पा.सू.७.१.२३) इति सोर्लोपे सकारस्य च रुत्वे विसर्गे **इकः** इति रूपम्। **इकः** इत्यस्य **इकः** इति षष्ठ्यन्तं पदमित्यर्थः।

अत्र **उपतिष्ठते** इति शेषोऽर्थः। **यत्र, विधीयेते, उच्चार्य** इति शब्दत्रयमप्यत्र अध्याहर्तव्यम्। इत्थञ्च यस्मिन् सूत्रे गुणः शब्दम् इति उच्चार्य गुणविधानं क्रियते, यत्र **वृद्धिः** इति पदम् उच्चार्य वृद्धिविधानं क्रियते तत्र **इकः** इति षष्ठ्यन्तपदम् उपतिष्ठते इत्यर्थः। तदेव ग्रन्थकृद् वदति **"गुणवृद्धिशब्दाभ्यां"** यत्र गुणवृद्धी विधीयेते तत्र **इकः** इति षष्ठ्यन्तं पदम् उपतिष्ठते[८]।

---

*४ अष्टाध्यायी १.१.३*

*५ वै. सि. कौ. श्री मत्भट्टोजीदीक्षितः श्रीवासुदेवदीक्षितप्रणीत"बालमनोरमा"व्याख्यासहिता महामहोपाध्यायगिरिधरशर्मणा महामहोपाध्यायपरमेश्वरशर्मणा च संशोधितामोतीलाल बनारसी दास, दिल्ली– प्रथमभागः, पृ-४१ (अत्र सर्वत्र सूत्रवृत्तेः तथा बालमनोरमाटीकोद्धरणनिर्देशाङ्गतयेदमेव पुस्तकं सन्दृब्धमित्यनुसन्धेयम् )*

*६ अष्टाध्यायी१.१.१*

*७ अष्टाध्यायी१.१.२*

*८ वै.सि.कौ.श्रीमत्भट्टोजीदीक्षितः श्रीवासुदेवदीक्षितप्रणीत"बालमनोरमा"व्याख्यासहिता महामहोपाध्यायगिरिधरशर्मणा महामहोपाध्यायपरमेश्वरशर्मणा च संशोधिता मोतीलाल बनारसी दास, दिल्ली– प्रथमभागः, पृ.४१*

मनोरमाकृद् **उपतिष्ठते** इति प्रतीकमादाय तदर्थं ब्रूते **संगतं भवति**[९] इत्यर्थः। अत्र उपोपसर्गपूर्वकस्य स्थाधातोः **"उपाद्देवपूजासंगतिकरणमित्रकरणपथिष्वितिवाच्यम्"**(वा.९९४) इति वार्तिकेन आत्मनेपदं भवति।

### ❖ पदोपस्थितिपक्षार्थविवरणम्

**इको गुणवृद्धी** (पा.सू. ६.१.७७) इति सूत्रेण **इकः** इति षष्ठ्यन्तं पदम् उपतिष्ठते इत्ययमर्थो यः क्रियते, सः एवार्थः पदोपस्थितपक्षं सूचयति। एतत्सूत्रं श्रुत्वैव नो मनसि विचिकित्सा समुदेति – को नाम पदोपस्थितिपक्षः? तदुच्यते **गुणः** इति शब्दमुच्चार्य, **वृद्धिः** इति शब्दमुच्चार्य, गुणः वृद्धिश्च यत्र विधीयते, तत्र स च गुणसंज्ञकः वर्णः, वृद्धिसंज्ञकः वर्णः इकः स्थाने भवति, न तु अनिकः इति नियमपरकार्थम् अनुक्त्वा गुणवृद्धिशब्दोच्चारणपूर्वकगुणवृद्धिविधायके सूत्रे **इकः** इति **षष्ठ्यन्तं पदम् उपतिष्ठते** इति अस्य सूत्रस्यार्थकथनमेव पदोपस्थितिपक्षः नाम।

एवम् **इकः** इति षष्ठ्यन्तं पदं यस्मिन्सूत्रे उपतिष्ठते तस्मिन्सूत्रे सम्भवति सति वैय्यधिकरण्येन अन्वयश्च भवति। इत ऊर्ध्वम् अत्रैव सन्दर्भे पदोपस्थितिपक्षे सामानाधिकरण्येन अन्वयः नाम कः ? पदोपस्थितिपक्षे वैयधिकरण्येन अन्वयो नाम कः ? इत्युदाहरणमुखेन प्रतिपाद्यते।

यथा **"सार्वधातुकार्धधातुकयोः"**[१०] इत्यस्मिन् अङ्गाधिकारे पठिते सूत्रे **इकः** इति षष्ठ्यन्तं पदम् उपतिष्ठते। तत्र सूत्रे **अधिकृतस्य अङ्गस्य** इत्यस्य विशेषणं भूत्वा सामानाधिकरण्येन इगन्तस्य अङ्गस्य इत्येवम् अर्थपरत्वेन अन्वेति। तथा च **"सार्वधातुकार्धधातुकयोः"** (पा.सू.७.३.८४) इत्येतस्य सूत्रस्य इगन्तस्याङ्गस्य गुणः स्यात् सार्वधातुकार्धधातुकयोः परयोः इत्यर्थः सम्पद्यते।

यदि न सम्भवति तत्र वैयधिकरण्येन अन्वेति। यथा **"मिदेर्गुणः"**[११] इत्यस्मिन् अङ्गाधिकारे पठिते सूत्रे **इकः** इति षष्ठ्यन्तं पदम् उपतिष्ठते। तत्र मिद्धातोः हलन्तत्वात् उपस्थितस्य **इकः** इति षष्ठ्यन्तस्य पदस्य सामानाधिकरण्येन अन्वयस्य असंभवात्। मिद्धातोः अवयवस्य इकः गुणो भवति, सार्वधातुकार्धधातुकयोः परयोः इति वैयधिकरण्येन अन्वयः सिद्ध्यति। अयमेव **इकः** इति उपस्थितस्य षष्ठ्यन्तपदस्य सामानाधिकरण्येन वैयधिकरण्येन अन्वयो नाम। व्याकरणे तच्छेषपक्षस्य नियमपक्षस्य च विषये दूषणानि

---

[९] *वै.सि.कौ.श्रीमत्भट्टोजीदीक्षितः श्रीवासुदेवदीक्षितप्रणीत"बालमनोरमा"व्याख्यासहिता महामहोपाध्यायगिरिधरशर्मणा महामहोपाध्यायपरमेश्वरशर्मणा च संशोधिता मोतीलाल बनारसी दास, दिल्ली– प्रथमभागः, पृ.४१*

[१०] *अष्टाध्यायी ७.३.८४*

[११] *अष्टाध्यायी७.३.८२*

सन्ति। अतः महाभाष्यकारदिशा पदोपस्थितिपक्षः एव ज्यायान् इति सिद्धान्तितम्। सूत्रमिदं पदोपस्थापकमस्ति। तदेव मनोरमाकारः वक्ति टीकायाम्- **"सोऽयं पदोपस्थितिपक्षः भाष्ये सिद्धान्तितः"**[१२] इति।

इदानीं मनोरमाकारः **"सार्वधातुकार्धधातुकयोः"**[१३], **"मिदेर्गुणः"**[१४] इति सूत्रद्वयम् उदाहरणत्वेन प्रस्तौति। गुणो नाम अकारैकारौकाराः। वृद्धिर्नाम आकारैकारौकाराः। अकारविधानेन गुणस्य विधानं भवति। आकारविधानेन वृद्धेरपि विधानं भवति।यत्र **गुणः** इति पदमुच्चार्य अकारैकारौकाराः विधीयन्ते तत्रैव **इकः** इति षष्ठ्यन्तं पदम् उपतिष्ठते इत्यर्थः।

यथा **"सार्वधातुकार्धधातुकयोः"**[१५] इति सूत्रम्। **"मिदेर्गुणः"**[१६] इत्यस्मात् सूत्रात् **गुणः** इति पदम् अस्मिन् सूत्रेऽनुवर्तते। सार्वधातुकार्धधातुकयोः परयोः अङ्गस्य गुणो विधीयते अनेन सूत्रेण। **भू** इत्यस्माद्धातोः, तिपि, कर्तरि शपि, भू अ ति इति जाते, **भू** इत्यस्य अङ्गस्य गुणः विधीयते। स च गुणः भकारस्य स्थाने विधेयः उत ऊकारस्य स्थाने ? इति संशये जाते अत्र **गुणः** इति उच्चार्य गुणः विधीयते इति कृत्वा **इको गुणवृद्धी**[१७] इति सूत्रोक्तप्रकारेणात्र **इकः** इति षष्ठ्यन्तं पदम् उपस्थितं भवति। एवञ्च **"सार्वधातुकार्धधातुकयोः"**[१८] इत्यनेन विधीयमानः गुणः अङ्गस्य इकः भवति। **भू** इत्यङ्गे इग्वर्णः ऊकारः। एवञ्च तस्य स्थाने कृते च गुणे **भो अति** इति जाते, अवादेशे **भवति** इति रूपं साधु।

वृद्धेः उदाहरणन्तावत् पश्यामः। **"मृजेर्वृद्धिः"**[१९] इत्यनेन सूत्रेण वृद्धिशब्दमुच्चार्य **मृज्** इत्यङ्गस्य वृद्धिः विधीयते इत्यतः **इकः** इति षष्ठ्यन्तं पदमुपतिष्ठते। एवं सति सा वृद्धिः ऋकारस्य स्थाने विहिता। **"उरण् रपरः"**[२०] इति रपरत्वे **मार्ज्** इति जाते, जस्य षत्वे, चर्त्वे च **मार्ष्टि** इत्येवं रूपं सिद्ध्यति। अस्मिन्

---

[१२] *वै.सि.कौ.श्रीमत्भट्टोजीदीक्षितः श्रीवासुदेवदीक्षितप्रणीत"बालमनोरमा"व्याख्यासहिता महामहोपाध्यायगिरिधरशर्मणा महामहोपाध्यायपरमेश्वरशर्मणा च संशोधिता मोतीलाल बनारसी दास, दिल्ली– प्रथमभागः, पृ. ४१*

[१३] *अष्टाध्यायी ७.३.८४*

[१४] *अष्टाध्यायी ७.३.८२*

[१५] *अष्टाध्यायी ७.३.८४*

*१६ अष्टाध्यायी ७.३.८२*

*१७ अष्टाध्यायी १.१.३*

*१८ अष्टाध्यायी ७.३.८४*

*१९ अष्टाध्यायी ७.२.११४*

*२० अष्टाध्यायी १.१.५१*

स्थलेऽपि **मृज्** धातोः वृद्धिः इत्युक्तत्वात् कस्य स्थाने सा वृद्धिः विधेया ? इति अनियमे जाते **इको गुणवृद्धी**[२१] इति परिभाषासूत्रेण **इकः** इति षष्ठ्यन्तपदम् उपस्थाप्य नियमः कल्प्यते।

मनोरमाकारोऽत्रैकं प्रश्नम् उद्भाव्य तत्समाधानं यच्छति – **यत्र विधीयेते इत्युक्त्या**[२२] इति प्रतीकमादाय – यत्र गुणशब्दमुच्चार्य गुणविधानं, वृद्धिशब्दमुच्चार्य वृद्धिविधानं क्रियते, तत्र **इकः** इति षष्ठ्यन्तं पदमुपतिष्ठते इत्युक्तम्। अत्र कश्चित्प्रश्नो भवति यत्किमर्थम् अस्य सूत्रस्य व्याख्यानम् इत्थं क्रियते ? यत्र गुणो वा वृद्धिः विधीयते तत्र **इकः** इति षष्ठ्यन्तं पदम् उपतिष्ठेत इत्येव सूत्रार्थवर्णनेन अलम्।

### ❖ समाधानम्

यदि पूर्वोक्तरीत्या सूत्रार्थः क्रियते तन्नाम गुणवृद्धिशब्दाभ्यां यत्र गुणवृद्धी विधीयेते तत्र **इकः** इति षष्ठ्यन्तं पदम् उपतिष्ठते इत्यनुक्त्वा **गुणवृद्धी** यत्र विधीयेते तत्र **इकः** इति षष्ठ्यन्तं उपतिष्ठते इत्युच्येत तर्हि **"त्यदादीनामः"**[२३] इत्यत्र दोषः प्रसज्यते। **"त्यदादीनाम् अः"**[२४] इति सूत्रेण त्यदादिगणपठितानां शब्दानाम् अकारः गुणसंज्ञकः विधीयते गुणपदमनुक्त्वा। यदि अत्रापि **"अदेङ्गुणः"**[२५] इति सूत्रोक्तदिशा गुणसंज्ञकः अकारो विधीयते इत्यतः **इकः** इति पदोपस्थितौ सत्याम् **इदम्** इत्यस्माच्छब्दात् **औ** प्रत्यये परे इकारस्य स्थाने स च अकारः स्यात्। **इमौ** इति रूपं न स्यात्। अनिष्टं रूपं प्रसज्येत। अतो गुणपदमुच्चार्य यत्र गुणस्य विधानं भवति, तत्र **इकः** इति पदम् उपतिष्ठते इति वदामश्चेत् अत्र गुणशब्दम् अनुक्त्वैव अकारो विधीयते इत्यतः **इकः** इति पदोपस्थानं नात्र भवति। अनिष्टञ्च वार्यते।

वृद्धिस्थलेऽपि दोषस्थलमेकं पश्यामः। **"दिव औत्"**[२६] इति सूत्रेण सौ परे **दिव्** शब्दस्य औकारः वृद्धिसंज्ञको विधीयते, वृद्धिपदमनुच्चार्य। यदि वृद्धिः यत्र विधीयते तत्र **इकः** इति पदम् उपतिष्ठते इत्युच्येत तर्हि अत्रापि **इकः** इति पदस्य उपस्थितेः **दिव्** इत्यत्र इकारस्य औकारः स्यात्। **द्यौः** इति रूपं न स्यात्। अतो वृद्धिशब्दम् अनुच्चार्य अत्र वृद्धिः विहिता इति हेतोः **इकः** इति पदमत्र नोपतिष्ठते।

---

*२१ अष्टाध्यायी १.१.३*

*२२ वै.सि.कौ.श्रीमत्भट्टोजीदीक्षितः श्रीवासुदेवदीक्षितप्रणीत"बालमनोरमा"व्याख्यासहिता महामहोपाध्यायगिरिधरशर्मणा महामहोपाध्यायपरमेश्वरशर्मणा च संशोधिता मोतीलाल बनारसी दास, दिल्ली– प्रथमभागः, पृ. ४१*

*२३ अष्टाध्यायी ७.२.१०२*

*२४ अष्टाध्यायी ७.२.१०२*

*२५ अष्टाध्यायी १.१.२*

*२६ अष्टाध्यायी ७.१.८४*

किञ्च **"वृद्धिर्यस्याचामादिस्तद्वृद्धम्"**[२७] इति वृद्धसंज्ञाविधायकमिदं सूत्रम्। अत्र **वृद्धि** इति शब्दपुरस्सरं वृद्धसंज्ञायाः विधानम् अस्ति। तस्मात् अत्र **इकः** इति पदं नोपतिष्ठते। तत्र मनोरमाकारः हेतुं वदति **अनुवादे परिभाषाणाम् अनुपस्थितेः**[२८] इति। एका परिभाषाऽस्ति **विधौ परिभाषोपतिष्ठते नानुवादे**[२९] इति। अनया परिभाषया विधेयस्थले एव **इको गुणवृद्धी**[३०] इत्यस्याः प्रवृत्तिः स्यात् नानुवादे।

यत्र साक्षात्स्थानी न निर्दिष्टस्तत्रैवेयं परिभाषा प्रवर्तते, नान्यत्र। एतत्सर्वं मनस्याकलय्य मनोरमाकारो ब्रवीति तट्टीकायाम् – **यत्र विधीयेते इत्युक्त्वा वृद्धिर्यस्याचामित्यादि अनुवादे इक इति नोपतिष्ठते। अनुवादे परिभाषाणाम् अनुपस्थितेः। त्यदादीनामः इत्यादावपि नेदम् उपतिष्ठते तत्र गुणवृद्धिशब्दयोः अश्रवणात्**[३१] इति।

**इकस्** इति पदं नपुंसकलिङ्गं शब्दस्वरूपपरञ्च। **इकस्** इत्यस्माच्छब्दात् सुप्रत्यये **इकस् सु** इति जाते, **इकस्** इति पदस्य क्लीबे सत्त्वात् **"स्वमोर्नपुंसकात्"**[३२] इत्यनेन सूत्रेण सोः लुक् क्रियते। लुका लुप्तोऽयं सुप्रत्ययः। यत्र **लुका** लुप्तः प्रत्ययः तत्र **प्रत्ययलोपे प्रत्ययलक्षणम्** इत्यनेन कार्यं न भवति।

अत्रैकः प्रश्नोऽस्ति यत् **इकस् सु** इत्यत्र **"अत्वसन्तस्य चाधातोः"**[३३] इति सूत्रेण किमर्थं दीर्घविधानं न ? यथा चन्द्रमाः, वेधाः, पुरुरवाः इत्यादिषु उदाहरणेषु सर्वत्र दीर्घश्रवणं भवति।

परन्तु नपुंसकलिङ्गे दीर्घश्रवणं नास्ति। तद्यथा मनः, पयः, नभः, यशः इत्यादीनि। किमर्थमिति उक्ते मनः, पयः इत्याद्युदाहरणेषु सुप्रत्ययस्य लुका लोपोऽस्ति। एवञ्च अत्वन्तस्य उपधायाः दीर्घः स्यात् धातुभिन्नासन्तस्य च असम्बुद्धौ सौ परे इत्यर्थकेन **"अत्वसन्तस्य चाधातोः"**[३४] इति सूत्रेण **इकस्** इत्यत्र दीर्घविधानं कर्तुं न शक्यते। सुप्रत्ययः परत्र नास्ति इति कृत्वाऽत्र अत्वसन्तस्येति दीर्घविधिः कर्तुं न शक्यते।

---

*२७ अष्टाध्यायी१.१.७३*

*२८ वै.सि.कौ.श्रीमत्भट्टोजीदीक्षितः श्रीवासुदेवदीक्षितप्रणीत"बालमनोरमा"व्याख्यासहिता महामहोपाध्यायगिरिधरशर्मणा महामहोपाध्यायपरमेश्वरशर्मणा च संशोधिता मोतीलाल बनारसी दास, दिल्ली – प्रथमभागः, पृ. ४१*

*२९ परिभाषेन्दुशेखरः – भट्टनागेशकृतः, वैद्यनाथकृत"गदा"टीकासंकलितः, आनन्दाश्रमसंस्कृतग्रंथावलिः, ग्रंथाङ्कः ७२, ख्रीस्ताब्दः १९१३ पृ-११९*

*३० अष्टाध्यायी१.१.३*

*३१ वै.सि.कौ.श्रीमत्भट्टोजीदीक्षितः श्रीवासुदेवदीक्षितप्रणीत"बालमनोरमा"व्याख्यासहिता महामहोपाध्यायगिरिधरशर्मणा महामहोपाध्यायपरमेश्वरशर्मणा च संशोधिता मोतीलाल बनारसी दास, दिल्ली – प्रथमभागः, पृ.४१*

*३२ अष्टाध्यायी ७.१.२३*

*३३ अष्टाध्यायी६.४.१४*

*३४ अष्टाध्यायी ६.४.१४*

इकस् इत्यत्र सकारस्य साक्षात् रुत्वे विसर्गे च विहिते **इकः** इति रूपं सम्पद्यते। **इकः** इत्युक्ते **इकः** इति षष्ठ्यन्तं पदमित्यर्थः।

एतन्मनसि कृत्वैव मनोरमाकारः टीकायाम् उदलिखत् यत् "**सोर्लुका लुप्तत्वात् अत्वसन्तस्येति दीर्घो न। इकस् शब्दः इत्यर्थः**"[३५] इति।

## सन्दर्भग्रन्थसूचिः

१ वैयाकरणसिद्धान्तकौमुदी वै.सि.कौ.श्रीमद्भट्टोजीदीक्षितः श्रीवासुदेवदीक्षितप्रणीत"बालमनोरमा"व्याख्यासहिता महामहोपाध्यायगिरिधरशर्मणा महामहोपाध्यायपरमेश्वरशर्मणा च संशोधिता मोतीलाल बनारसी दास, दिल्ली – प्रथमभागः, वर्षम्-१९६१

२ अष्टाध्यायीसूत्रपाठः महर्षिपाणिनिप्रणीतः, प्रकरणनिर्देशसमन्वितः, पुष्पा दीक्षित, ज्ञानभारती पब्लिकेशन्स दिल्ली, भारत, वर्षम् –२००९

३ परिभाषेन्दुशेखरः भट्टनागेशकृतः – वैद्यनाथकृतगदाटीकासंवलितः, संशोधकः – वै.शा.रा.रा. गोखले गणेशशास्त्री, प्रकाशनम् – हरिनारायण आप्टे, आनन्दाश्रममुद्रणालयः, ग्रन्थाङ्कः –७२,

~~~~~~~~~~~

[३५] *वै.सि.कौ.श्रीमत्भट्टोजीदीक्षितः श्रीवासुदेवदीक्षितप्रणीत"बालमनोरमा"व्याख्यासहिता महामहोपाध्यायगिरिधरशर्मणा महामहोपाध्यायपरमेश्वरशर्मणा च संशोधिता मोतीलाल बनारसी दास, दिल्ली – प्रथमभागः, पृ. ४१*
~~~~~~~~~~~

वर्षम्-०४ अङ्कः-०४ शोधज्योतिः
जनवरी-दिसम्बर, २०२२ ISSN-2350-0700

# काव्यालङ्कारकारिकायाः काव्यलक्षणविमर्शः

देरासरी ऋषभः जीतेन्द्रभाई[१]

**शोधसारांशः**

अस्मिन् शोधपत्रे मया काव्यविषये प्रासङ्गिकं सम्पाद्य,प्राचीनार्वाचीनकवीनां काव्यलक्षणानि संकीर्त्य,कवीनां काव्यलक्षणानि च विविच्य सनातनकवेः पण्डितरेवाप्रसादद्विवेदीवर्यस्य काव्यालङ्कारकरिकास्थं काव्यलक्षणं यथामति विमृष्टमस्ति।

**प्रस्तावना -**

किं नाम काव्यम्? इत्यस्मिन् विषये प्राचां नवीनानां कवीनां विविधानि मतानि विद्यन्ते। वस्तुतः साहित्यशास्त्रैराचार्यैः काव्यस्य शरीरत्वेन स्वीकारः कृतो विद्यते। अथ च यदि काव्यं शरीरं वर्तते तर्हि तस्मिन् काव्यशरीरे कश्चन आत्माऽपि स्यात्, यथा आत्मनि गुणाः भवन्ति तद्वदेव काव्यस्य यः आत्मा भवति तस्मिन्नपि गुणास्स्युरेव। यथाऽऽत्मान्वितं शरीरम् अलङ्कर्तुं विविधाः हारादयः कवचकुण्डलादयश्च पदार्थाः विद्यन्ते। तद्वदेव काव्यशरीरमपि अलङ्कर्त्तुं केचन पदार्थाः स्युरेव। पुनश्च एतत् शरीरं यथा कैश्चिदवयवैः संयुक्तं भवति। तथैव काव्यशरीरमपि कैश्चिदवयवैः संयुक्तं स्यादेव इत्यमुं विवादं मनसि निधाय साहित्यशास्त्रीयैराचार्यैः बहुसूक्ष्मतया विचारो विहितो विद्यते।

एतस्य सम्पूर्णविवादस्य निष्कर्षत्वेन काव्यस्यात्मानं रसमाम्नातवन्तः साहित्यशास्त्रीयाः आचार्याः। तथा च आत्मनि यथा शौर्यादयो गुणाः भवन्ति तद्वदेव काव्यात्मन्यपि गुणाः माधुर्यादयः भवन्त्येव। यथा शरीरे हारदयः अलङ्काराः भवन्ति तथैव काव्यशरीरेऽपि उपमादयः अलङ्काराः भवन्ति। यैः काव्यं उत्कर्षवत् भवति। अतः अन्ततो गत्वा इदं निश्चेतुं शक्यते यदेतत् गुणालङ्काररीत्यादिकं काव्यस्य उत्कर्षकं भवति। अत एव साहित्यदर्पणेऽपि विश्वनाथेनाभ्यधायि यथा – **"उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः"**[२] इत्थमेताविधस्य महिमावतः काव्यस्य किं स्वरूपं केन तत्त्वेन एतत् काव्यं समन्वितं भवति अर्थात् एतस्य काव्यस्य लक्षणं किं स्यात् ? इत्यमुं विषयमादाय प्राचीनाः नवीनाः आचार्याः कवयश्च एतस्य काव्यलक्षणस्य विचारे स्वकीयान् प्रयत्नान् समाचरन्।

---

*१ अतिथ्यध्यापकः (साहित्यविभागः), श्रीसोमनाथसंस्कृतविश्वविद्यालयः, वेरावलम्, दूरभाषः – ८४६९०५४७१३, ईमेल-सङ्केतः – derasarirushabh1997@gmail.com*

*२ आचार्यविश्वनाथः, साहित्यदर्पणम् – ०१/०३ आचार्य शेषराजशर्मा रेग्मी, चौखम्बा कृष्णदास अकादमी वाराणसी – २०१९, पृ - २८*

अत्र संक्षेपतया पूर्वाचार्याणां नव्याचार्याणाञ्च काव्यलक्षणानि समुद्धोष्य आधुनिककाव्यशास्त्राणां काव्यलक्षणानि प्रतिपाद्य आचार्यरेवाप्रसादद्विवेदीमहोदयस्य सनातनमहामहोपाध्यायस्य काव्यलङ्कारकारिकाधिष्ठितं काव्यलक्षणं समालोचयिष्यते।

**प्राचीनार्वाचीनकवीनां काव्यलक्षणानि –**

तत्र प्राचामाचार्याणां भामहः **"शब्दाऽर्थौ सहितौ काव्यम्"**[३] इति काव्यलक्षणमवादीत्, ततः **"काव्यशब्दोऽयं गुणालङ्कारसंस्कृतयोः शब्दाऽर्थयोर्वर्तते"**[४] इति वामानाचार्येण काव्यलक्षणमिदमभाणि काव्यालङ्कारसूत्रवृत्तौ, **"ननु शब्दाऽर्थौ काव्यम्"**[५] इति रूद्रटेनाकारि काव्यलक्षणं काव्यालङ्कारे, **"काव्यस्यात्मा ध्वनिः"**[६] इति आनन्दवर्धनो ह्यानन्देन काव्यलक्षणमवोचत्,

**"शब्दाऽर्थौ सहितौ वक्रकविव्यापारशालिनि।**
**बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि॥"**[७]

इति कुन्तकाचार्येण वक्रोक्तिपूर्वकं काव्यलक्षणमवादि -

**"निर्दोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम्।**
**रसान्वितं कविः कुर्वन् कीर्त्तिं प्रीतिं च विन्दति॥"**[८]

इति भोजदेवोऽवोचत्, **"तददोषौ शब्दाऽर्थौ सगुणावनलङ्कृती पुनःक्वापि"**[९] इति मम्मटाचार्योऽवदत्, **"अदोषौ सगुणौ सालङ्कारौ च शब्दाऽर्थौ काव्यम्"**[१०] इति हेमचन्द्राचार्येणाभिहितम्, **"वाक्यं रसात्मकं**

---

*[३] भामहः, काव्यालङ्कारः १/१६, डॉ. आर. पी. महेता, सरस्वती पुस्तक भण्डार, अहमदाबाद, २००८-०९, पृ. २६*

*[४] वामनः, काव्यालङ्कारसूत्रवृत्तिः १/१/१, डॉ. आर. पी.महेता, सरस्वती पुस्तक भण्डार, अहमदाबाद, २००७-०८, पृ.३*

*[५] रुद्रटः, काव्यालङ्कारः, २/१, पं. दुर्गाप्रसाद, निर्णयसागर प्रेस, बोम्बे, १९०९, पृ. ०८*

*[६] आनन्दवर्धनः, ध्वन्यालोकः १/१, डॊ.जी.एस.शाह, पार्श्व पब्लिकेशन, अहमदाबाद,२००९, पृ. ७२*

*[७] आचार्यविश्वनाथः, साहित्यदर्पणम् – आचार्यशेषराजशर्मा रेग्मी, चौखम्बा कृष्णदास अकादमी वाराणसी – २०१९, उदाहार - पृ - ०७*

*[८] आचार्यविश्वनाथः, साहित्यदर्पणम् – आचार्यशेषराजशर्मा रेग्मी, चौखम्बा कृष्णदास अकादमी वाराणसी – २०१९, उदाहार - पृ - ०७*

*[९] आचार्यविश्वनाथः, साहित्यदर्पणम् – आचार्यशेषराजशर्मा रेग्मी, चौखम्बा कृष्णदास अकादमी वाराणसी – २०१९, उदाहार - पृ - ०७*

*[१०] आचार्यविश्वनाथः, साहित्यदर्पणम् – आचार्यशेषराजशर्मा रेग्मी, चौखम्बा कृष्णदास अकादमी वाराणसी – २०१९, उदाहार - पृ - ०८*

**काव्यम्"**[११] इति विश्वनाथनाथीकृतं काव्यलक्षणम्, **"रमणीयार्थप्रतिपादकः शब्दः काव्यम्"**[१२] इति जगन्नाथाचार्येण जगन्नाथीकृतं काव्यलक्षणं समुद्घोषि। इत्थमेतेषां प्राचीनानां काव्यलक्षणानि विलसन्ति विद्यन्ते महनीये काव्यशास्त्रे। एतेषां सर्वेषामाचार्याणां काव्यलक्षणानि समालोच्य ज्ञातुं शक्यते यत् भामहादारभ्य जगन्नाथाचार्यं यावत् सर्वेषाम् आचार्याणां काव्यलक्षणेषु किञ्चित् परिवर्तनं दृश्यते। अर्थाद् उत्तरोत्तरम् आचार्याणां काव्यलक्षणं किञ्चित् परिष्कृतं विद्यते। एतेन परिष्करणनैव ज्ञायते यत् अस्मिन् काव्यशास्त्रे काव्यतत्वमादाय कियान् विचारो विद्वद्भिः साहित्याचार्यैः विहितः वर्तते। पण्डितराजजगन्नाथानन्तरमियं काव्यशास्त्रीयविचारपरम्परा प्रायः स्थगिता अभवत्। एतस्यां स्थितौ आचार्यप्रवरः ब्रह्मानन्दशर्ममहोदयः स्वीये काव्यसत्यालोके काव्यविषयकान् नवीनान् विचारान् प्राकटयत्। तस्य आचार्यस्य काव्यलक्षणं यथा –

**"शब्दार्थवर्तिसत्यस्य सुन्दरं प्रतिपादनम्।**
**काव्यस्य लक्षणं ज्ञेयं सत्यस्याऽत्र विशेषता॥**[१३]

एतस्य आचार्यस्य मतमिदं वर्तते यत् काव्ये शब्दार्थयोर्मध्ये विद्यमानस्य सत्यस्य महत्त्वं सर्वातिशायि विद्यते। अतः आचार्योऽयं लोकसमवेतं काव्यगतसत्यमेव काव्यात्मानं प्रतिपादयति। एतन्मतेन सत्यस्यास्य ग्रहणं लोकादेव कविना विधीयते। काव्ये सत्यस्य उपस्थापनं कविप्रतिभया भवति एवञ्च कवेः प्रतिभायाः विषयः लोकः इति कृत्वा लोकादेव कविना अस्य सत्यस्य ग्रहणं क्रियते।

अथ च द्वितीयो हि आधुनिकाचार्यः अभिराजराजेन्द्रमिश्रमहोदयोऽभिराजयशोभूषणे प्रथमे उन्मेषे स्वाभिमतं काव्यलक्षणं प्रस्तौति। यथा –

**"काव्यं लोकोत्तराख्यानं रसगर्भं स्वभावजम्।**
**परत्रेह च निर्व्याजं यशोवाप्तिप्रयोजनम्॥**[१४]

तत्र लोकोत्तराख्यानमिति काव्यलक्षणम्। लोकोत्तरं नाम अलौकिकमाख्यानं काव्यमिति कथ्यते। **यस्य कस्यचिदपि आख्यानस्य काव्यत्वं मा भूत्। अत एव लोकोत्तरं पदं प्रयुक्तम्।**[१५], **इदं "लोकोत्तर"**

---

*[११] आचार्यविश्वनाथः, साहित्यदर्पणम् ०१/०३ – आचार्यशेषराजशर्मा रेग्मी, चौखम्बा कृष्णदास अकादमी वाराणसी – २०१९, पृ - २४*

*[१२] आचार्यविश्वनाथः, साहित्यदर्पणम् – आचार्यशेषराजशर्मा रेग्मी, चौखम्बा कृष्णदास अकादमी वाराणसी – २०१९, उदाहार - पृ - ०९*

*[१३] आचार्य-ब्रह्मानन्द-शर्मा, काव्यसत्यालोकः, ५/६४, प्रवीण पण्ड्या, राजस्थानसंस्कृत अकादमी, जयपुर, २०१३, पृ. ७५*

*[१४] अभिराजराजेन्द्रमिश्रः, अभिराजयशोभूषणम् १/३४, वैजयन्त प्रकाशनम्, इलाहाबाद, २००६, पृ. ३८*

*[१५] तत्किं यत्किमपि आख्यानं काव्यपदवाच्यमुताहो विशिष्टम् एव इत्याशङ्क्य आह लोकत्तरमिति। तत्रैव, वृत्तौ, पृ. ४०*

**इति पदं पण्डितराजजगन्नाथस्य रसगङ्गाधरात् स्वीकृतं विद्यते।**[१६] अनेन प्रेरितः आचार्यः काव्ये लोकोत्तरपदं न्यस्तवान्। पुनश्च एतत् लोकोत्तराख्यानं रसगर्भं भवति। निरसं तावत् लोकोत्तराख्यानं न भवेत्। तदर्थमेव कथितं रसगर्भमिति। **एषः विचारः अभिराजराजेन्द्रमिश्रवर्येण विश्वनाथस्य साहित्यदर्पणात् स्वीकृतो विद्यते।**[१७] इत्थं रसान्वितं लोकत्तराख्यानं काव्यमिति काव्यलक्षणं वर्तते आचार्यस्य। तथा च काव्यं स्वाभाविकं भवति एवञ्च एतेन यशः प्राप्यते तदर्थमेव काव्यविशेषणानि प्रयुक्तानि स्वभावजम्, निर्व्याजम्, यशोवाप्तिप्रयोजनमिति।

ततः आचार्यराधावल्लभत्रिपाठीवर्यः स्वीये अभिनवकाव्यालङ्कारसूत्रे काव्यलक्षणं लिखति यत् **"लोकानुकीर्त्तनं काव्यम्"**[१८], लोकस्य अनुकीर्त्तनं काव्यं भवति। तर्हि किं नाम लोकत्त्वं तत्र स्पष्टीकुरुते आचार्यः यत् **"लोकः अर्थात् स्थावरजङ्गमात्मकः लोकः लोक इति पदेन चराचरसम्भूतं जगदिदं ग्राह्यम्"**[१९], ततश्च अनुकीर्त्तनं नाम **"पश्चात् कथनम्"**[२०], पूर्वं भूतस्य पश्चात् कथनमेव अनुकीर्त्तनं भवति अर्थात् लोकः पूर्ववर्त्ती काव्यं च परवर्त्ति वर्तते। पूर्वं भूतस्य अर्थवस्तुनः शब्दैः पुनः प्रकटीकरणमनुकीर्त्तनमिति।

**काव्यालङ्कारकारिकायाःकाव्यलक्षणविमर्शः -**

अथ चासनातनि जगति सनातनत्त्वेन परत्रेह च अस्माकं मनसि विराजमानाः वर्तन्ते पण्डितप्रवराः विपश्चितामपश्चिमाः महामहोपाध्यायाः रेवाप्रसादद्विवेदीमहोदयाः। एतेषामाचार्याणां मतानुसारं काव्यलक्षणं यथा -

**"आनन्दकोषस्योल्लासे लोकोत्तरविभावना।**
**अलङ्कृतार्थसंवित्तिः कविता सर्वमङ्गला॥**[२१]

अलङ्कृतार्थसंवित्तिः कविता इति मुख्यं वाक्यम्। अलङ्कृतश्चासौ अर्थश्च अलङ्कृतार्थः तस्य संवित्तिः नाम ज्ञानम्, अलङ्कृतस्य अर्थस्य ज्ञानं कविता इति। लक्षणेऽस्मिन् कविता विशेष्यपदं तस्य च त्रीणि विशेषणपदानि – लोकोत्तरविभावना, अलङ्कृतार्थसंवित्तिः, सर्वमङ्गला चेति। आनन्दकोषस्योल्लासे इति पदं वैषयिकमधिकरणञ्च बोधयति। अर्थात् आनन्दकोषस्योल्लासे जाते लोकोत्तरविभावना अलङ्कृतार्थसंवित्तिः कविता उच्यते। क्रमेण सर्वाण्यपि पदानि व्याख्यायन्ते।

---

[१६] *रमणीयता च लोकित्तराह्लादजनकज्ञानगोचरता। जगन्नाथः, रसगङ्गाधरः, प्रथमाननम्, पण्डित मदनमोहन झा, चौखम्बा विद्याभवन, वाराणसी, २०१३, पृ. ११*

[१७] *रससिद्धशब्दग्रहणेन वाक्यं रसात्मकं काव्यमिति स्थापनापराणां विश्वनाथमहापात्राणां भावानुमोदनम् । तत्रैव, पृ. ४०*

[१८] *राधवल्लभत्रिपाठी, अभिनवकाव्यालङ्कारसूत्रम् – १/१/१, जगदीश संस्कृत पुस्तकालय, जयपुर, २००९, पृ. ०३*

[१९] *तत्रैव – १/१/१, वृत्तिः, पृ. ०४*

[२०] *तत्रैव – १/१/७, वृत्तिः, पृ. १९*

[२१] *पं. रेवाप्रसादः द्विवेदी, काव्यालङ्कारकारिका – ०१, चौखम्बा सुरभारती प्रकाशनम्, वाराणसी, १९७७, पृ. ०५*

सा चेयं कविता सर्वमङ्गला निखिललोककल्याणमूर्तिः[२२] वर्तते। आनन्दकोषस्येति पदं व्याकुर्वन् आचार्यः वदति यदानन्दकोषो नाम वेदान्तादिप्रसिद्धा जीवात्मनः आनन्दकला।[२३] वेदान्ते पञ्चकोषाः प्रसिद्धाः सन्ति। यथा –

**१) अन्नमयकोषः।** **२) प्राणमयकोषः।** **३) मनोमयकोषः।**
**४) विज्ञानमयकोषः।** **५) आनन्दमयकोषश्च।**

अत एतादृशे आनन्दमयकोषस्योल्लासे सति प्रतिबोधे सति लोकोत्तरविभावना एव कविता इति। अथ लोकोत्तरविभावनेति किं तर्हि उच्यते "लोकोत्तरम् अलोकसामान्यम् अनुत्तरपदप्रतीतं वा विभावनम् अपूर्वसृष्टिप्रादुर्भावे अनामृष्टकारणफलं प्रागल्भ्यं तदस्त्यस्याः सा विभावना सा चेयं कविः सहृदयेत्युभयसाधारणा"[२४] अर्थात् कविः सहृदयश्च अपूर्वकल्पनया यस्याम् अलौकिकं प्रागल्भ्यमनुभवतः सा भवति लोकोत्तरविभावना कविता। अतः अयमेव सारः यत् आनन्दकोषस्य समुद्भूते लोकोत्तरविभावना लोकोत्तरनिर्माणप्रागल्भ्यं यद् वर्तते तया विभावनया अलङ्कृता अर्थस्य या संवित्तिः ज्ञानं सा कविता इति। इयं कविता वैदिकानामवैदिकानामिति उभयेषां मङ्गलं विस्तारयति तस्मात् कविता सर्वमङ्गला इति।[२५] अग्रे च आचार्यः सहृद्भूत्वा काव्यलक्षणं विविच्य अधिकरणानि ब्रूते –

**"कवेर्बुद्धौ च काव्ये च वाक्यज्ञाने च संस्थितः।**
**अलङ्कृतार्थसंघातः काव्यमित्यभिधीयते।**[२६]

अत्र अलङ्कृतार्थसंघातः काव्यमितिमुख्यार्थः। अलङ्कृतस्य अर्थस्य संघातः समूहः एव काव्यमिति। एताविधः अर्थः अधिकरणत्रितयो विद्यते। अधिकरणत्रितयं नाम कवेर्बुद्धिः, वाक्यम्, वाक्यज्ञानं वा। एतैः त्रिभिः अधिकरणैः समन्वितः अलङ्कृतार्थः संघात एव काव्यमिति सारः।

**निष्कर्षः -**

अत्र एवमनुमीयते यत् पण्डितरेवाप्रसादद्विवेदीवर्येण स्वकाव्यलक्षणे **"आनन्दकोषस्योल्लासे"** इति पदस्य विचारः आचार्यविश्वनाथस्य साहित्यदर्पणात् स्वीकृतो विद्यते।[२७] अथ च **"लोकोत्तर"** इति पदमपि

---

*[२२] तत्रैव – वृत्तौ, पृ. ०५*
*[२३] तत्रैव – ०१ वृत्तौ, पृ. ०६*
*[२४] तत्रैव – ०१ वृत्तौ, पृ. ०६*
*[२५] सर्वपदेन अत्र उभयेषामपि सङ्ग्रहः वैदिकानाम् अवैदिकानां च। तत्रैव – ०१ वृत्तौ, पृ. ०७*
*[२६] तत्रैव – १३५, पृ. २०४*
*[२७] आचार्यविश्वनाथः, साहित्यदर्पणम् ३/२ – आचार्यशेषराजशर्मा रेग्मी, चौखम्बा कृष्णदास अकादमी वाराणसी – २०१९, उदाहार - पृ – ०७*

पण्डितराजजगन्नाथस्य रसगङ्गाधरात् स्वायत्तीकृतमस्ति।[२८] पुनश्च **“सर्वमङ्गला”** इति काव्यस्येदं लक्षणमाचार्येण मम्मटाचार्यस्य काव्यप्रयोजनात् स्वीकृतमस्ति।[२९] एवञ्च **“अलङ्कृतार्थसंवित्तिः”** इति विलिख्य आचार्यैः काव्यलक्षणनिर्माणे स्वकीयं पाण्डित्यं प्रकटीकृतमस्ति। इत्थम् आचार्यरेवाप्रसादद्विवेदीमहोदयस्य काव्यालङ्कारकारिकास्थं काव्यलक्षणं यथामति विवेचितम्।

## सन्दर्भग्रन्थाः


१. साहित्यदर्पणम्, आचार्यविश्वनाथः, आचार्यशेषराजशर्मा रेग्मी, चौखम्बा कृष्णदास अकादमी वाराणसी – २०१९
२. काव्यालङ्कारः, भामहः, डॉ. आर. पी. महेता, सरस्वती पुस्तक भण्डार, अहमदाबाद, २००८-०९
३. काव्यालङ्कारसूत्रवृत्तिः, वामनः, डॉ. आर. पी. महेता, सरस्वती पुस्तक भण्डार, अहमदाबाद, २००७-०८
४. काव्यालङ्कारः, रुद्रटः, पं. दुर्गाप्रसाद, निर्णयसागरप्रेस, बोम्बे, १९०९
५. ध्वन्यालोकः, आनन्दवर्धनः, डॉ. जी. एस.शाह, पार्श्व पब्लिकेशन, अहमदाबाद,२००९
६. काव्यसत्यालोकः, आचार्य-ब्रह्माअनन्द-शर्मा, प्रवीण पण्ड्या, राजस्थान संस्कृत अकादमी, जयपुर, २०१३
७. अभिराजयशोभूषणम्, अभिराजराजेन्द्रमिश्रः, वैजयन्त प्रकाशनम्, इलाहाबाद, २००६
८. रसगङ्गाधरः, जगन्नाथः, पण्डित मदनमोहन झा, चौखम्बा विद्याभवन, वाराणसी, २०१३
९. अभिनवकाव्यालङ्कारसूत्रम्, राधवल्लभत्रिपाठी, जगदीश संस्कृत पुस्तकालय, जयपुर, २००९
१०. काव्यालङ्कारकारिका, पं. रेवाप्रसादः द्विवेदी, चौखम्बा सुरभारती प्रकाशनम्, वाराणसी, १९७७


~~~~~~~~~~~

[२८] *रमणीयता च लोकित्तराह्लादजनकज्ञानगोचरता। जगन्नाथः, रसगङ्गाधरः, प्रथमाननम्, पण्डित मदनमोहन झा, चौखम्बा विद्याभवन, वाराणसी, २०१३, पृ.११*

[२९] *आचार्य विश्वेश्वर, काव्यप्रकाशः १/२– ज्ञानमण्डल लिमिटेड, वाराणसी-२०१९, पृ -१०*
~~~~~~~~~~~

वर्षम्-०४ अङ्कः-०४ शोधज्योतिः
जनवरी-दिसम्बर, २०२२ ISSN-2350-0700

# मध्यमव्यायोगे सामाजिकी व्यवस्था

श्याम सुन्दरः[१]

साहित्यं समाजस्य दर्पणं भवति। यथा दर्पणे सम्पूर्णस्य मुखमण्डलस्य दर्शनं भवति। तथैव रूपकस्य दर्शनेन काव्यस्य पठनेन वा तत्कालीनसमाजस्य सम्पूर्णदर्शनावबोधः जायते। महाकवेः भासस्य त्रयोदशनाटकानि प्राप्यन्ते। तन्नाटकेषु तत्कालीनसमाजस्य सम्पूर्णं दर्शनं भवति। मध्यमव्यायोगनामकः एकांकी व्यायोगः भवति। व्यायोगः रूपकस्यैव भेदः भवति। मध्यमव्यायोगस्य दर्शनेन पठनेन वा भासकालीनसमाजे भिन्नजातीनां स्थितिः, समाजस्य विभिन्नेषु वर्गेषु परस्परं सामञ्जस्यम्, परिवार-सदस्यानां मिथः स्नेहः, जातिव्यवस्था, समाजे मातुर्स्थानाद्यनेकविषयाः परिलक्ष्यन्ते। अतः तत्कालीनपरिवेशे ब्राह्मण-क्षत्रियराक्षसानां स्थितिः, जातिपरिवर्तनव्यवस्था समाजे मातुः सर्वोच्चस्थानम्, परस्परस्नेहाद्यनेकविषयाः शोधपत्रेऽस्मिन् विविच्यन्ते।

**संक्षिप्त-इतिवृत्तम् -**

महाभारतस्यादिपर्वणि भीमसेनः हिडिम्बस्य वधं करोति तथा च हिडिम्बया साकं विवाहञ्च करोति एतदेव अस्याः कथायाः बीजम्। ऐतरेयारण्यके शुनः-शेपाख्यानमपि अस्याः भागभूतम्। अनया कथया इयं कथा विकसिता।

सूत्रधारेण भो! इति शब्दस्य श्रुतेन परिज्ञायते यत् एषः कश्चित् ब्राह्मणः एव पीड्यते। तदनन्तरं ज्ञायते यत् माढरसगोत्रीयः कश्चित् केशवदासनामकः ब्राह्मणः, कौशिकगोत्रीयः यज्ञबन्धुनामबन्धोः पुत्रस्योपनयनसंस्कारे भागग्रहीतुं गच्छति। तेन सह तस्य पत्नी त्रयः पुत्राश्च सन्ति। मार्गे घटोत्कचः आगच्छति। घटोत्कचं दृष्ट्वा ब्राह्मणस्य परिवारः बिभेति। किंकर्तव्यविमूढः परिवारः प्राणरक्षणार्थमुपायं चिन्तयति। पुत्रेषु प्रथमः वदति यत् समीपे कुत्रचित् पाण्डवाः वसन्तीति। परन्तु ते भीमम् आश्रमस्य परिरक्षणार्थं नियोज्य धौम्यमहर्षेः आश्रमं प्रति शतकुम्भयज्ञे भागं ग्रहीतुं गतवन्तः। सःभीमोऽपि व्यायामपरिशीलनाय दूरं गतवानिति ब्राह्मणाः अवगच्छन्ति। किंकर्तव्यविमूढदशायां प्राणरक्षार्थं प्रार्थयन्ति। परन्तु घटोत्कचः नाङ्गीकरोति। सः बलाबलोपायं कृत्वा पुत्रेषु एकं विहाय गन्तुमर्हति इति भणति। ब्राह्मणः स्वजर्जरशरीरं दातुमिच्छति परन्तु तस्य भार्या स्वप्राणदानेन स्वपातिव्रत्यं कुलञ्च रक्षितुमिच्छति। पितरि आपदागते सति ज्येष्ठेन पुत्रेण तार्यते इति स्वप्राणं समर्पयितुमिच्छति, परन्तु ज्येष्ठः पुत्रः पितुरिष्टः भवति,

१ शोधच्छात्रः, श्रीसोमनाथसंस्कृतविश्वविद्यालयः वेरावलम्, पंजीकरणसङ्ख्या-194, दूरभाषसङ्ख्या - 7275805420, अणुसङ्केतः -sss2035@gmail.com

अतः मध्यमः प्राणं त्यक्तुमुद्यतः भवति। अन्ते पितरौ तत्तदभिष्टतमज्येष्ठ-कनिष्ठौ पुत्रौ त्यजतः इति ज्ञाते सति मध्यमः आत्मनः प्राणदानेन कुलं रक्षितुं सिद्धः। परलोकं गन्तुं सन्नद्धः सः घटोत्कचमपि अनुमन्यते।

यदा प्रत्यागमने विलम्बः करोति, तदा घटोत्कचः उच्चैः मध्यम इति बहुबारमाह्वयति तच्छ्रुत्वा भीमः समागच्छति। अहं मध्यम इति वदति। तदभ्यन्तरे ब्राह्मणकुमारेषु मध्यमोऽपि आगच्छति। घटोत्कचः तमनुगन्तुं वदति। तदा वृद्धः सर्वाः कथाः वदति भीमसेनं रक्षितुञ्च प्रार्थयति। भीमसेनः तान् प्राणसङ्कटात् मोचयति। तथा च युद्धानन्तरं तेन सह हिडिम्बायाः समीपं प्राप्नोति। हिडिम्बायाः साहाय्येन घटोत्कचः पितरं प्रत्यभिजानाति। ब्राह्मणाः अपि स्वबन्धोः गृहं गच्छन्ति। भीमस्य कुटुम्बसङ्गमोऽपि सफलो जायते। भरतवाक्येन कथा समाप्यते।

**मध्यमव्यायोगदिशा तत्कालीनसामाजिकानां स्थितिः**

**समाजे ब्राह्मणानां स्थितिः -**

मध्यमव्यायोगस्यावलोकनेन ज्ञायते यत् तदानीन्तनसमाजे ब्राह्मणाः सर्वोच्चस्थाने आसन्। ब्राह्मणानामुत्कर्षवर्णनमस्मिन् रूपके दरीदृश्यते। अतः भासः ब्राह्मणपक्षपाती कविरिति उच्यते। तदानीं सर्वापराधोऽपि ब्राह्मणः अवध्यः आसीत्। यथा -

**सर्वापराधेऽवध्यत्वान्मुच्यतां द्विजसत्तमः ॥**[२]

तत्रैव भीमस्य उक्तिरियम् -

**''आर्य मामैवम्! क्षत्रियकुलोत्पन्नोऽहम्। पूज्यतमः खलु ब्राह्मणः। तस्मात् मच्छरीरेण ब्राह्मणशरीरं विनिमातुमिच्छामि।''**[३]

अतः ब्राह्मणाधिपत्यस्य सर्वोत्कर्षतायाः कालः भासस्य इति दृढयति मध्यमव्यायोगेति रूपकम्।

**समाजे क्षत्रियाणां स्थितिः -**

यद्यपि समालोचकाः भणन्ति यत् भासः ब्राह्मणोत्कर्षे सर्वान् अतिशेते तथापि मध्यमव्यायोगावलोकनेन न तथा सर्वथा वक्तुं शक्यते। यतो हि तेन समाजस्य सर्वैरपि पक्षाः विवेचिताः। तेन राक्षसेष्वपि सदाचारः व्यवस्थापितः।

तथैव क्षत्रियाणां गुणगौरववर्णने भासः श्रेष्ठः इति। कथायां मध्यमेति आह्वानेन भीमस्य प्रवेशः भवति। तस्य आकृतिवर्णनमेवं करोति भासः घटोत्कचमुखेन -

---

*[२].म. व्या. श्लो. सं. 3.4*

*[३]. म. व्या. पृ. 63, भावबोधिनीटीका*

**सिंहास्यः सिंहदंष्ट्रो मधुनिभयनः स्निग्धगम्भीररकण्ठो**
**बभ्रुभ्रूश्येनवासो द्विरदपतिहनुर्दीप्तविश्लिष्टवेशः।**
**व्यूढोरा वज्रमध्यो गजवृषभगतिर्लम्बपीनांसबाहुः**
**सुव्यक्तं राक्षसीजो विपुलबलयुतो लोकवीरस्य पुत्रः॥**[४]

यद्यपि ब्राह्मणसर्वोत्कर्षतायाः कालः तथापि भासः क्षत्रियद्वारैव ब्राह्मणान् रक्षयति। क्षत्रियाः स्वप्राणैरपि ब्राह्मणरक्षणं कर्तुमिच्छन्ति। यदा भीमसेनः घटोत्कचं पुत्रत्वेन अभिधीयते तदा घटोत्कचः पृच्छति - कथं कथं तव पुत्रोऽहम्? तस्मिन् समये भीमस्य उक्तिरियं श्रेष्ठक्षत्रियत्वं प्रतिपादयति। यथा - **''सर्वाः प्रजाः क्षत्रियाणां पुत्रशब्देनाभिधीयन्ते। अत मयाऽभिहितम्।''**[५]

क्षत्रियाः न केवलं युद्धे समर्थाः अपितु ते मन्त्रविद्यामायापाशादिषु अपि पारङ्गताः आसन् - **''अस्ति महेश्वरप्रसादलब्धो मायापाशमोक्षो नाम मन्त्रः।''**[६]

अतः न केवलं ब्राह्मणाः अपितु क्षत्रियाः अपि श्रेष्ठाः आसन् तदानीन्तनसमाजे इति पुष्णाति इदं रूपकम्।

**राक्षसानां स्थितिः -**

''जात्या राक्षसी, न समुदाचारेण''[७] इति द्योतयति यत् सदाचारः राक्षसेषु अपि आसीत्। राक्षसाः अपि व्रतपूजापाठादिकं कुर्वन्ति स्म। यतो हि घटोत्कचः मातुः उपवासनियोगार्थं नरम् आनेतुम् आगच्छति। यथा - घटोत्कचः - ''अस्ति मे तत्र भवती जननी। तयाहमाज्ञप्तः पुत्र। ममोपवासनिसर्गार्थमस्मिन् जनप्रदेशे कश्चिन्मानुषः परिमृग्यनितव्य इति। ततो मयाऽसादितो भवान्।''[८] सः घटोत्कचः राक्षसोऽपि जानाति यत् अस्यां पृथिव्यां ब्राह्मणाः पूज्याः इति। यथा - घटोत्कचस्य उक्तिरियम् -

**जानामि सर्वत्र सदा च नाम द्विजोत्तमाः पूज्यतमाः पृथिव्याम्।**
**अकार्यमेतच्च मयाद्य कार्यं मातुर्नियोगादपनीत शङ्कम्॥**[९]

---

*४. म. व्या. श्लो. सं. 26*
*५. म. व्या. पृ. 64, भावबोधिनीटीका।*
*६. म. व्या. पृ. 75, भावबोधिनीटीका।*
*७. म. व्या. पृ. 79*
*८. म. व्या. पृ. 27*
*९. म. व्या. श्लो. 9*

हिडिम्बा अपि स्वपुत्रं शिक्षयति यत् अरे! उन्मत्तक इमे तव मम च दैवतम्। अतः पितरम् अभिवादय। यद्यपि हिडिम्बा जात्या राक्षसी आसीत् अतः मांसभक्षणं तस्याः जातेर्लक्षणं तथापि तस्यां करुणादयः अनेके गुणाः आसन् राक्षसानां करुणादयः गुणाः -

**अस्माकं भ्रष्टराज्यानां भ्रमतां गहने वने।**
**जातकारुण्यया देवि! सन्तापो नाशितस्त्वया॥**[१०]

अतः भासकालीनसमाजे राक्षसेष्वपि दया-सदाचार-उपवासादयः गुणाः ब्राह्मणादीनामिव आसीदेव।

**समाजे मातुः स्थानम् -**

तदानीन्तनकाले समाजे मातुः स्थानं सर्वोच्चं सर्वोत्कृष्टञ्चासीत् मातुराज्ञा पितुराज्ञापेक्षया बलवती आसीत् यथा घटोत्कचस्य उक्तिरियम् -

**मुच्यतामिति विस्रब्धं ब्रवीति यदि मे पिता।**
**न मुच्यते तथा ह्येष गृहीतां मातुराज्ञया॥**[११]

घटोत्कचस्योक्तिरियं भीमसेनमपि पुष्णाति -

**माता किल मनुष्याणां दैवतानां च दैवतम्।**
**मातुराज्ञां पुरस्कृत्य वयमेतां दशां गताः॥**[१२]

अतः सुस्पष्टः यत् भाससमये समाजे मातुः उच्चस्थानम् आसीत्।

**समाजे पुत्रवात्सल्यम् -**

सर्वस्मिन्नपि युगे समाजः पुत्रवत्सलः एव भवति। तदानीन्तनसमाजोऽपि पुत्रवत्सलः आसीत्। पितापुत्रवात्सल्यमितरेषु संस्कृतकाव्येषु नाटकेषु वा नाधिकं लभ्यते। यद्यपि शाकुन्तलस्य चतुर्थाङ्के पितापुत्रीस्नेहमविस्मरणीयम्। तथापि मध्यमव्यायोगे पितुः पुत्रं प्रति वात्सल्यमद्भुतमस्ति। अत्र घटोत्कचदर्शनेन तस्य पुत्रत्वेन अभिज्ञानात् पूर्वमेव भीमसेने सहजवात्सल्यं प्रस्फुटीभवति। पुत्रः इति अभिज्ञानानन्तरं तु तद्वात्सल्यं देदीप्यते। शिशुं दृष्ट्वा यादृशी चेष्टा पितुः अन्तरङ्गे जायते सैवात्र भीमसेने अपि उद्भूता। तस्य वीरतां दृष्ट्वा सः मुदितो अभिमानी च भवति - ''भो सुयोधन! वर्धते खलु ते शत्रुपक्षः कृतरक्षो भव'' इति। भीमः अत्र सर्वथा लौकिकसाधारणश्च पिता वर्तते। परन्तु सर्वेऽपि पुत्राः तुल्याः इति

---

*१०. म. व्या. श्लो. 49*
*११. म. व्या. पृ. श्लो. 36*
*१२. म. व्या. श्लो. 37*

विश्वासं भग्नं करोति भासः। ज्येष्ठमिष्टतमं पिता कनिष्ठमिष्टतमं मन्यमाना माता च भवतः। तयोर्मिथः पित्रोरनिष्टः कस्याहं प्रियः'' इति निःसहायावस्थायां भवति मध्यमः तेन अस्माकं मनः खिद्यते। यथा - ''यथार्यो ज्येष्ठमिच्छति तथाऽहमपि कनिष्ठमिच्छामि।''[१३]

न केवलं पुत्रवत्सलाः अपितु भ्रातृषु स्नेहोऽपि द्रष्टुं शक्यते अस्मिन् रूपके यदा प्रथमः पुत्रः कुलं रक्षितुं प्राणान् त्यक्तुमिच्छति तदा द्वितीयस्य पुत्रस्य उक्तिरियं द्रष्टव्या -

**ज्येष्ठः पुत्रः कुले लोके पितृणां च सुसंप्रियः।**
**ततोऽहमेव यास्यामि गुरुवृत्तिमनुस्मरन्॥**[१४]

तदानीं समाजे भ्रातृषु ज्येष्ठभ्रातुः स्थानं सर्वोच्चम् आसीत्। पितुः परलोकगमनान्तरं सैव अनुजान् परिपालयति रक्षति च। यथा -

**ज्येष्ठो भ्राता पितृसमः कथितो ब्राह्मणादिभिः।**[१५]

यथा -

**आपदं हि पिता प्राप्तो ज्येष्ठपुत्रेण तार्यते।**[१६]

एवं मध्यमव्यायोगावलोकनेन परिलक्ष्यते यत् समाजे भ्रातृणां परस्परस्नेहः, ज्येष्ठपुत्रस्य च सर्वोच्चस्थानमासीत्।

**जातिपरिवर्तनव्यवस्था -**

यथा अस्मिन् वर्तमाने युगे धर्मपरिवर्तनस्य व्यवस्था दरीदृश्यते प्रायः तथैव तदानीन्तनसमाजे जातिपरिवर्तनस्य व्यवस्था आसीत्। वस्तुतः युगेऽस्मिन् धर्मपरिवर्तनं तु कुर्वन्ति जनाः परन्तु जातिपरिवर्तनन्तु नैव दरीदृश्यते। परन्तु तस्मिन् युगे जातिपरिवर्तनं तु भवति स्म। अस्मिन् प्रसङ्गे इदं ज्ञातव्यं भवति यत् महाकविभासः केरलीयः आसीत्। केरलः भगवता परशुरामेण सुस्थापितं राज्यम्। अतः क्षत्रियहीनं राज्यं केरलम्। परन्तु राजकार्यसञ्चालानार्थं क्षत्रियाणाम् आवश्यकता भवति एव। अतः सुयोग्याः जनाः क्षत्रियाः जायन्ते स्म।

यतो हि राजकार्यं क्षत्रियैः सञ्चालनीयम् इति नियमः। अतः क्षत्रियान् निर्मातुम् अन्येभ्यः अक्षत्रियेभ्यः वर्णेभ्यः शतकुम्भं नाम यज्ञं कृत्वा वर्णपरिवर्तनं विधीयते स्म।

---

*१३. म. व्या. पृ. 37*
*१४. म. व्या. श्लो. 17*
*१५. म. व्या. श्लो. 18*
*१६. म. व्या. श्लो. 19*

अतः केरले राजानः एतादृशाः क्षत्रियाः एव। केरले प्रसिद्धः अयं यज्ञः, एतादृशीं परम्परां जानाति अयं कविः अतः केरलीयोऽयमत्र न संशयः।

परन्तु अत्र केवलम् अन्यवर्णेभ्यः क्षत्रियाणां निर्माणस्य प्रमाणं लभ्यते तस्य कारणमपि परिज्ञायते यत् भगवान् परशुरामः सर्वान् क्षत्रियान् नाशितवान्, अतः केरलभूमिः निश्क्षत्रिया जाता। अतः राजकार्यसञ्चालनार्थं क्षत्रियाणाम् आवश्यकता जाते सति शतकुम्भयज्ञकार्येण क्षत्रियाः निर्मीयन्ते स्म। परन्तु अन्येभ्यः वर्णेभ्यः क्षत्रियविहाय अन्यजातेः निर्माणस्य प्रमाणं न गोचरं भवति।

**उपसंहारः -**

दृश्यकाव्येषु भासविरचितानि पञ्चैकाङ्किरूपकाणि सन्ति। तेषु मध्यमव्यायोगः लघुतरं भवति महाभारतस्य आदिपर्वणि अन्तर्भूता कथा अस्य रूपकस्य आधारभूता। अतः न केवलं भासस्य समये या सामाजिकी व्यवस्था आसीत् केवलं तस्यैव वर्णनमत्र वर्णितम् अपितु इतिवृत्तपरिष्कारार्थं परिकल्पनापि भासप्रतिभायाः द्योतका भवति।

भासः तथा च तत्कालीनसमाजे या व्यवस्था आसीत् तस्य चारुवर्णनमत्र कृतम्। भासकालीनसमाजः ब्राह्मणाधिपत्यस्य सर्वोत्कर्षकः कालः आसीत् इत्यपि वक्तुं शक्यते। ब्राह्मणाः समाजे शीर्षे आसन्, सर्वापराधोऽपि अवध्यः आसीत्। अतः भासः ब्राह्मणपक्षपाती कविः इत्यपि उच्यते। क्षत्रियाः स्वप्राणदानेनापि ब्राह्मणान् रक्षितुं वाच्छन्ति, तदेव तस्य धर्मोऽपि इत्यपि भासः भीमसेनस्य मुखेन प्रतिपादयति।

ब्राह्मणोत्कर्षवर्णनेन सममधःस्थितानां जनानामपि गुणगौरववर्णनमत्र व्यायोगे अवलोक्यते। अतः अस्य रूपकस्य मुख्योद्देश्यं ब्राह्मण-दलितयोर्मध्ये समाजे सामंजस्य स्थापनम्, तथा ब्राह्मणसंस्कृतेः एवञ्च वनवासिसंस्कृतेश्च मध्ये संवादसंयोजनम्। अतः आधुनिकयुगेऽपि एषः सामञ्जस्यम् उपकारीति।

राक्षसेष्वपि पूजा-मन्त्र-उपवासादीनां विधानमासीत्। भीमसेनस्य हिडिम्बां प्रति उक्तिः - जात्या राक्षसी न समुदाचारेण इति तदेव द्योतयति।

पुत्रवात्सल्यतायाः अद्भुतोदाहरणं लभ्यते अस्मिन् रूपके। पितुः पुत्रं प्रति वात्सल्यम् अन्यसंस्कृतरूपकेषु नाधिकं प्राप्यते यथात्र। भीमसेनः घटोत्कचस्य दर्शनेनैव तं पुत्रत्वेन जानाति प्रत्यभिज्ञानात् पूर्वमेव सः तस्मिन् सहजवात्सल्यम् अन्तरङ्गेऽनुभवति। वृद्धब्राह्मण-ब्राह्मण्योरपि पुत्रवात्सल्यमत्र अनुभवितुं शक्यते। तयोः पुत्रं प्रति वात्सल्यं स्वप्राणेभ्योऽपि अधिकं वर्तते।

कुटुम्बसङ्कल्पनायाः आधारः अपि लभ्यते अत्र। परिवारे मातुराज्ञा अधिका बलवती आसीत्। 'न मुच्यते तथा ह्येष गृहीतो मातुराज्ञाम् इति। अतः कुटुम्बसङ्कल्पनस्य वास्तविकं स्वरूपं वर्णितमत्र।

अतः संक्षेपेण वक्तुं यत् महाकविः भासः सामाजिकव्यवस्था कुटुम्बसङ्कल्पना ब्राह्मण-वनवासिनोः संस्कृतेः सामञ्जस्य स्थापना, पिता-पुत्रयोः आदर्शादि अनेकविषयाणां समायोजने अस्मिन् रूपके सफलो वर्तते इति।

**सन्दर्भग्रन्थ-सूची**


- महाकविभासः, व्याख्याकारः मिश्रः, पं-श्रीरामजी, *मध्यमव्यायोगः,* चौखम्बाविद्याभवनम्, वाराणसी, 2017.
- महाकविभासः, सम्पादकः मालवीयः, सुधाकरः, *मध्यमव्यायोगः,* चौखम्बाकृष्णदासअकादमी, वाराणसी, 2010.
- श्रीविश्वनाथकविराजः, व्याख्याकारः सिंहः, डॉ.-सत्यव्रतसिंहः, *साहित्यदर्पणः,* चौखम्बाविद्याभवनम्, वाराणसी, 1970.
- द्विवेदी कपिलदेव, *संस्कृतनिबन्धशतकम्,* विश्वविद्यालय-प्रकाशनम्, वाराणसी, 2013.


~~~~~~~~~~~
~~~~~~~~~~~

वर्षम्-०४ अङ्कः-०४ शोधज्योतिः
जनवरी-दिसम्बर, २०२२ ISSN-2350-0700

# ब्रह्मसूत्राणि

गणेश हेगडे[1]

धर्मार्थकाममोक्षाख्येषु चतुर्विधपुरुषार्थेषु चरमपरमश्च मोक्षाख्यः पुरुषार्थः वेदान्तैकगम्यः इति वेदान्तिनां सर्वसम्मतं मतम्। **'सर्वे वेदा यत्पदमामनन्ति'**[2] इति श्रुतेः। तर्हि वेदन्तो नाम किमिति जिज्ञासायां **'वेदान्तो नाम उपनिषत्प्रमाणं तदुपकारीणि शारीरकसूत्रादीनि च'**[3] इति विज्ञायते। वेदानाम् अन्तः वेदान्तः - उपनिषदित्यर्थः। वेदान्तशब्दे श्रूयमाणः अन्तः शब्दः न हि ध्वंसवाचकः। **'तत्तु समन्वयात्'**[4] इत्यादिब्रह्मसूत्रविरोधापत्तेश्च। समन्वयाधिकरणे सर्वेषां वेदान्तवाक्यानाम् अद्वितीये ब्रह्मणि तात्पर्यप्रदर्शनात्। अतोऽन्तश्शब्देन 'परमं तात्पर्यम्' 'निर्णयो' वा इत्यर्थः ग्राह्यः। वेदानां परमं तात्पर्यं ये बोधयन्ति ते वेदान्ताः इत्यर्थः सर्वसम्मतम्। उपनिषत्प्रमाणमित्यत्र 'उप' 'नि' उपसर्गपूर्वक-'षद्लृँ'-धातोः कर्तरि 'क्विप्' प्रत्यये उपनिषच्छब्दः निष्पद्यते। 'षद्लृँविशरणगत्यवसादनेषु' इति पाणिनीयानुशासनम्। विशरणार्थकत्वेन अविद्याकामकर्मादिसंसारबीजं निःशेषतया नाशयतीति उपनिषत्। **'निचाय्यतं मृत्युमुखात्प्रमुच्यते'** इति श्रुतेः। गत्यर्थयोगो यथा – मुमुक्षून् ब्रह्म गमयतीति ब्रह्मगमयितृत्वेन उपनिषदित्युच्यते। तथा च श्रुतिः **'ब्रह्म प्राप्तो विरजोऽभूद्विमृत्युः'** इति। अवसादनार्थो यथा - अवसादनं नाम शिथिलीकरणम्। प्राणिनां जन्ममरणचक्रं शिथिलीकरोति इति उपनिषत्। शारीरकसूत्रादीनि च इत्यत्र शरीरे भवः शारीरः स्वार्थे कप्रत्यये कृते शारीरकशब्दः सिद्ध्यति। तत्सम्बन्धिसूत्राणि शारीरकसूत्राणि। शारीरको जीवस्तस्य ब्रह्मत्वविचारः क्रियत इति ब्रह्मसूत्राणीत्युच्यन्ते।

**सूत्रप्रस्थानत्वेन ब्रह्मसूत्राणि :**

ब्रह्मसूत्राणि सूत्रप्रस्थानमिति व्यवह्रियन्ते। सूत्रलक्षणं यथाहुः शास्त्रविदः -

**'अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्।**
**अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः॥'** इति

---

*[1] अनुसन्धाता, श्रीसोमनाथसंस्कृतविश्वविद्यालयः, Address- B6/2206, Panchsheel Greens 2, Greater Noida West, Gautam Buddha Nagar, U. P. - 201318, Email - ganeshamchi@gmail.com, Mo.- 9480718779*

*[2] कठोपनिषद् १/२/१५*

*[3] वेदान्तसारः*

*[4] ब्रह्मसूत्रम् १/१/४*

अन्यच्च,

**‘लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च।**
**सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिणः॥’** इति

नित्यशुद्धबुद्धमुक्तस्वभावं निर्गुणं निर्विकारं सर्वज्ञम् एकमेवाद्वितीयं ब्रह्म अध्यक्षादिप्रमाणागोचरम् अनाद्यपौरुषेयस्वतःप्रमाणभूतश्रुत्यैकप्रमाणगोचरम्। श्रुतिश्च मन्दमतीनां दुर्बोधा। श्रुतिदर्शित-मार्गोऽपि विविधदार्शनिकैः कलुषितः। अतः श्रुतितात्पर्यनिर्णये भ्रान्तानामुपकाराय भगवान् बादरायणः श्रुत्यर्थं न्यायेन निर्णेतुं ब्रह्मसूत्राणि रचयामास। अत्र अशेषवेदान्तवाक्यानाम् अद्वितीये ब्रह्मणि समन्वयः प्रतिपादितः। अत एव **“वेदान्तवाक्यकुसुमग्रथनार्थत्वात् सूत्राणाम्”** इति भाष्यकारैः शङ्कराचार्यैः तृतीयसूत्रव्याख्यानावसरे प्रणीतम्। **‘ब्रह्मसूत्राणि’ ‘शारीरकसूत्राणि’ ‘ब्रह्ममीमांसासूत्राणि’ ‘उत्तरमीमांसासूत्राणि’** इति नामान्तराणि।

**सूत्रकारस्य परिचयः –**

सूत्राणां रचयिता भगवान् बादरायणः। **‘तदुपर्यपि बादरायणः सम्भवात्’**[५] **‘भावं तु बादरायणो अस्ति हि’**[६] **‘पूर्वं तु बादरायणो हेतु व्यपदेशात्’**[७]**‘पुरुषार्थो अतः शब्दादिति बादरायणः’**[८]**‘अनुष्ठेयं बादरायणः साम्यश्रुतेः’**[९] **‘अधिगोप देशात्तु बादरायणस्यैवं दर्शनात्’**[१०] **‘अप्रतीकालम्बनान्नयतीति बादरायणः’**[११] **‘एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः’**[१२] **‘द्वादशाहवदुभयविधं बादरायणोऽतः’**[१३] इत्यादिसूत्रेषु प्रथमपुरुषे बादरायणस्य नाम निर्देशात् अयमेव सूत्रकारो न वेति संशयो भवितुमर्हति। **‘पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः’**[१४] इति पाणिनीयसूत्रात् ब्रह्मसूत्राणां भिक्षुसूत्राणीत्यप्यपरं नाम। भगवान् व्यासः अस्य ब्रह्मसूत्रग्रन्थस्य कर्ता इति पाणिनिना सूच्यते। महाभारतविष्णुपुराणभागवतादिषु जैमिनिः व्यासस्य शिष्य इत्युल्लेखो लभ्यते। किन्तु बादरायणः स्वसूत्रेषु जैमिनिम् अथ जैमिनिः स्वरचितसूत्रेषु बादरायणं सूचितत्वात् बादरायणो न व्यासः इत्याक्षेपो दृष्यते। यतो हि गुरुः पूर्वपक्षस्य अथवा उत्तरपक्षस्य मण्डनार्थं शिष्यस्य नामोल्लेखनं कृतमिति कुत्रापि न दरीदृश्यते। तथापि नैके

---

[५] *ब्रह्मसूत्रम् १/३/२६*
[६] *ब्रह्मसूत्रम् १/३/३३*
[७] *ब्रह्मसूत्रम् ३/२/४१*
[८] *ब्रह्मसूत्रम् ३/४/१*
[९] *ब्रह्मसूत्रम् ३/४/१९*
[१०] *ब्रह्मसूत्रम् ३/४/८*
[११] *ब्रह्मसूत्रम् ४/३/१५*
[१२] *ब्रह्मसूत्रम् ४/४/७*
[१३] *ब्रह्मसूत्रम् ४/४/१२*
[१४] *अष्टाध्यायी४/३/११०*

टीकाकाराः अत्र असामञ्जस्यं न प्रदर्शयन्ति। शङ्करभगवत्पादाः तृतीयोध्यायस्य तृतीयपादस्य द्वात्रिंशत्तमसूत्रस्य व्याख्यानावसरे **'कलिद्वापरयुगयोः सन्धिकाले भगवतो विष्णोराज्ञया अपान्तरतमस् इत्ययं वेदाचार्यः पुरातनश्च ऋषिः कृष्णद्वैपायनरूपेण जन्म लेभे इति स्मर्यते'** इत्यवदन्। अत्र बादरायणस्य नामैव नास्ति। पुनश्च श्रीशङ्कराचार्याः भाष्ये व्यासं सूत्रकारमिति अनुक्त्वैव उदाहृतवन्तः। अतः विण्डिष्मन्, टेलांग् इत्यादयः पाश्चात्यविद्वांसः श्रीशङ्करदृष्टौ व्यासबादरायणौ भिन्नाविति अभिप्रायं प्रकटीकुर्वन्ति। शङ्करभगवत्पादैः सूत्रभाष्ये बादरायण एव व्यास इति साक्षात् नोक्तं चेदपि शाङ्करभाष्यव्याख्याकाराः रामानुजाचार्यप्रभृतिसूत्रभाष्यकाराश्च व्यासबादरायणयोः अभेदमङ्गी-कुर्वन्ति।

**सूत्राणां रचनाकालः –**

ब्रह्मसूत्रेषु सांख्यवैशेषिकपाशुपतबौद्धजैनादिमतानामुल्लेखदर्शनात् महावीरबुद्धाद्यपेक्षया प्राचीनत्वं ब्रह्मसूत्राणामनुमातुं शक्यम्। **'अपि च स्मर्यते'**[१५] **'स्मरन्ति च'**[१६] इति सूत्रद्वयमपि भगवद्गीतायाः श्लोकान् एव स्मरन्तीति त्रयोप्याचार्याः कथयन्ति। क्रि.श. २०० तः परं भवेदिति **'कीत्'** महाशयः अभिप्रेति। सूत्राणां सूत्रकाराणां कालः क्रि.पू ३०० स्यादिति नैके भारतीयाः विद्वांसः मन्वते।

**सूत्राणां विषयः -**

ब्रह्मसूत्राणि चतुर्षु अध्यायेषु विभक्तानि। प्रत्यध्यायं चत्वारः पादाः सन्ति। प्रतिपादम् अधिकरणानि वर्तन्ते। अधिकरणलक्षणं यथा -

**'विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्।**
**प्रयोजनं सङ्गतिश्च शास्त्रेऽधिकरणं मतम्'।** इति।

शाङ्करमते चतुर्षु अध्यायेषु प्रथमः **समन्वयाध्यायः।** प्रथमपादे ब्रह्मणः जिज्ञास्यत्वं प्रतिज्ञाय लक्षणप्रमाणाभ्यां च तन्निरूप्य स्पष्टब्रह्मलिङ्गैः आकाशादिशब्दानां तस्मिन् समन्वयः प्रदर्श्यते। द्वितीये रूपादिपदबहुलानां प्रायेण अस्पष्टब्रह्मलिङ्गसविशेषवाक्यानां ब्रह्मणि समन्वयः प्रतिपाद्यते। तृतीयचरणे यौगिकपदबहुलानां निर्विशेषप्रधानानां वाक्यानां ब्रह्मसमन्वयः प्रतिपाद्यते। ईक्षत्यधिकरणे सूत्रितं प्रधानाशब्दत्वं ब्रह्मसमन्वयदार्ढ्याय प्रपञ्चयितुं चतुर्थपादारम्भः।

द्वितीयः **अविरोधाध्यायः।** प्रथमपादे प्रथमाध्यायदर्शितसमन्वयस्य सांख्यादिस्मृतियुक्तिभिः विरोधपरिहारः क्रियते। द्वितीयपादे सांख्याद्यागमानां भ्रान्तिमूलत्वमविरोधाय प्रपञ्च्यते। तृतीये प्रतिवेदान्तं सृष्टिश्रुतीनां जीवात्मश्रुतीनां च आकाशादिमहाभूतानां जन्मलयक्रमादिकथनेनाविरोधः कथ्यते। चतुर्थे लिङ्गशरीरश्रुतीनामविरोधः प्रतिपाद्यते।

---

[१५] *ब्रह्मसूत्रम् २/३/४५*

[१६] *ब्रह्मसूत्रम् ४/१/१०*

तृतीयः **साधनाध्यायः**। प्रथमपादे जीवस्य संसारगतिप्रकारः वैराग्यसिध्यर्थमुच्यते। द्वितीयपादे संसाराद्विरक्तस्य मुमुक्षोः मोक्षहेत्वपरोक्षवाक्यार्थज्ञानसाधनलक्ष्यपदार्थज्ञानाय जीवस्य स्वप्नाद्यवस्थान्तराणि ब्रह्मस्वरूपं च प्रतिपाद्यते। तृतीयपादे निर्गुणब्रह्मवाक्यस्यापुनरुक्तपदोपसंहाराय मन्दमतीनां सगुणोपासनैक्यरुप्याय च सर्वशाखासु विद्या भिन्नाऽभिन्ना वा गुणोपसंहारो न वेति विचार्यते। चतुर्थपादे सम्यग्दर्शनोपायाः संन्यासादयः, मुक्तिरूपफलस्य स्वर्गवत्तारतम्यनियमाभावः इत्येवंजातीयकविषयाः प्रतिपाद्यन्ते।

चतुर्थः **फलाध्यायः।** प्रथमपादे जीवन्मुक्तिनिरूपणमुपलभ्यते। द्वितीये उत्क्रान्तिगतिनिरूपणं वर्तते। तृतीये सगुणविद्यावतः मृतस्य उत्तरमार्गाभिधानं निरूपितम्। चतुर्थपादे ब्रह्मप्राप्ति - ब्रह्मलोकस्थितिनिरूपणं वर्तते।

**सूत्रेषु विद्यमानं दर्शनम् –**

उपनिषत्तत्त्वविवरणार्थमागतानि ब्रह्मसूत्राणि कदाचित् उपनिषदोऽपि रहस्यतराणि प्रतीयन्ते। तथापि असन्दिग्धसूत्राणामाधारेण बादरायणदर्शनमित्थमवलोकयितुं शक्नुमः।

**१. प्रमाणानि** – बादरायणः वेदस्य नित्यत्वं मन्यते।**'ब्रह्मस्वरूपावगमे शास्त्रमेव प्रमाणम्'**[१७]। **'तर्कस्य अप्रतिष्ठितत्वात् आगमगम्ये विषये तर्कमात्राश्रयणं न साधु'**[१८]। सूत्रकारः **प्रत्यक्षानुमानप्रमाण**मङ्गीकरोति[१९]। श्रुतिरेव प्रत्यक्षम्, अस्याः अन्यप्रमाणापेक्षाभावात्। स्मृतिश्चानुमानम्। स्मृतिनिरूपणे श्रुतेरपेक्षासम्भवात्। मनुस्मृतिभगवद्गीतामहाभारतानि स्मृतयः। एतैरतिरिक्तमन्यप्रमाणं नाङ्गीकरोति सूत्रकारः इति विज्ञायते।

**२. परब्रह्म** – प्रथमेषु त्रिषु सूत्रेषु नित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञम् एकमेवाद्वितीयं ब्रह्म चर्चितमस्ति। प्रथमं तावत् भगवान् बादरायणः शारीरकमीमांसाशास्त्रमारभमाणः वेदान्तवाक्यकुसुमग्रथनार्थानि सूत्राणि प्रणयन् मुमुक्षुलोकमुद्दिश्य 'आत्मा वा अरे द्रष्टव्यः' इत्यात्मदर्शनमनूद्य 'श्रोतव्यः' इति श्रवणविधायकं वाक्यं मनसि निधाय इदं सूत्रं व्यरीरचत् **'अथातो ब्रह्मजिज्ञासा'**[२०] इति। सूत्रमिदम् अथ अतः ब्रह्मजिज्ञासा इति पदत्रयात्मकम्। सूत्रस्यास्य अनुवादकत्वपरिहाराय 'कर्तव्या' इति विधायकं पदम् अध्याह्रियते। अस्मिन् सूत्रे श्रूयमाणः अथशब्दस्य कोऽर्थः इति जिज्ञासायाम् – **'मङ्गलानन्तरारम्भप्रश्नकात्स्र्न्येष्वथो अथ'** इति कोशात्, अथशब्दस्य अनेकेष्वर्थेषु सत्स्वपि मङ्गलारम्भानन्तर्यरूपाः त्रयः अर्थाः प्रसक्ताः। तत्र ब्रह्मजिज्ञासायाः अनधिकार्यत्वात् अथशब्दार्थः नारम्भः। नापि मङ्गलार्थः। शङ्खवीणादिध्वनिवत् अर्थान्तरे

---

[१७] *ब्रह्मसूत्रम् १/१/३*

[१८] *ब्रह्मसूत्रम् २/१/११*

[१९] *ब्रह्मसूत्रम् १/३/२८*

[२०] *ब्रह्मसूत्रम् १/१/१*

प्रयुक्तः अथशब्दः श्रवणमात्रेण मङ्गलं जनयतीति मङ्गलरूपः अर्थः वाक्यार्थे न समन्वेति। अतः आनन्तर्यमेव अथशब्दार्थः। धर्मब्रह्मजिज्ञासयोरुभयोरपि वेदैकवेद्यत्वात् स्वाध्यायानन्तर्यं धर्मजिज्ञासायामिव अत्रापि समानम्। धर्मजिज्ञासोत्तरं कर्मज्ञानं सम्पाद्य ततो ब्रह्मजिज्ञासा इत्येतदयुक्तम्। जन्मान्तरकृतकर्मप्रयुक्तचित्तशुद्धिं सम्प्राप्तस्य अधीतवेदान्तस्य धर्मजिज्ञासायाः प्रागपि ब्रह्मजिज्ञासा उत्पद्येत। अतः अथशब्दार्थः न कर्मावबोधानन्तर्यम्। नापि अथशब्दः 'हृदयस्याग्रे अवद्यति। अथ जिह्वायाः। अथ वक्षसः' इत्यादाविव क्रमज्ञानार्थः। धर्मब्रह्मजिज्ञासयोः अङ्गाङ्गिभावस्य अधिकृताधिकारस्य वा अभावेन एककर्तृकत्वाभावत्। धर्मब्रह्मजिज्ञासयोः फलतः विषयतः प्रमाणतश्च भिन्नत्वादपि तयोः क्रमः न विवक्षितः। तस्मात् अन्वयव्यतिरेकाभ्यां ब्रह्मजिज्ञासायाः यत्कारणमिति निश्चीयते तदानन्तर्यम् अथशब्दार्थः। तच्च कारणं नित्यानित्यवस्तुविवेकादिसाधनचतुष्टयसम्पत्तिः। यथोक्तं भाष्ये – 'तेषु हि सत्सु प्रागपि धर्मजिज्ञासाया ऊर्ध्वं च शक्यते ब्रह्म जिज्ञासितुं ज्ञातुं च न विपर्यये' इति।

एवं नित्यानित्यवस्तुविवेकाद्यानन्तर्यम् अथशब्दार्थः इति सिद्धे 'ब्रह्मैव नित्यं वस्तु तदन्यत्सर्वमनित्यम्' इति विवेको न जायते 'अक्षय्यं ह वै चातुर्मास्य याजिनः सुकृतम्' इत्यादिश्रुतौ कर्मफलादीनामपि नित्यत्वश्रवणात् इत्याक्षेपस्य समाधानार्थत्वेन अतः शब्दः प्रयुक्तः। यस्मात् **'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते'**[२१] इति 'यत्कृतकं तदनित्यम्' इति न्यायोपेतश्रुतिः कर्मफलादीनामनित्यत्वं दर्शयति अकृतकः ब्रह्मभावः मोक्षः इत्यर्थे **'ब्रह्मविदाप्नोति परम्'**[२२] इत्यादिश्रुतिः ब्रह्मज्ञानफलस्य मोक्षस्य नित्यत्वं श्रावयति। तस्मात् इति अतः शब्दः साधनचतुष्टयसम्पत्तिं दृढयति।

'बृहि वृद्धौ' इत्यस्मात् धातोः निष्पन्नः ब्रह्मशब्दः बृहत्वे सङ्कोचकाभावात् देशकालवस्तुपरिच्छेदशून्यं निरतिशयं बृहत्वं वदति। तस्य च ब्रह्मशब्दस्य **'जन्माद्यस्य यतः'**[२३] इत्यग्रिमसूत्रबलात् ब्राह्मणत्वादिजातिरूपः अर्थः न गृह्यते। ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा इति '**कर्तृकर्मणोः कृति**'[२४] इति सूत्रविहिता कर्मणि षष्ठी जिज्ञासाया विषयो ब्रह्म इति ज्ञापयति। यद्यपि **'षष्ठी शेषे'**[२५] इति विहितायाः षष्ठ्याः सम्बन्धार्थत्वेन सकर्मकक्रियासन्निधानात् सः सम्बन्धः कर्मत्वे पर्यवस्यति। तथापि साक्षादेव कर्मत्वे लभ्यमाने अशाब्दं कर्मत्वं न कल्पनीयम्। प्रधानस्य ब्रह्मणो ग्रहणेनैव तदाश्रिताशेषविचाराः प्रतिज्ञाता भवन्तीति कर्मणि षष्ठी इत्येव युक्तः पक्षः। तथा सति **'तद्विजिज्ञासस्व''तद्ब्रह्म'**[२६] इति सक्षात्

---

[२१] *छान्दोग्योपनिषत्८/१/६*

[२२] *तैत्तिरीयोपनिषत् २/१*

[२३] *ब्रह्मसूत्रम् १/१/२*

[२४] *अष्टाध्यायी २/३/६५*

[२५] *अष्टाध्यायी २/३/५०*

[२६] *तैत्तिरीयोपनिषत् ३/१*

श्रुत्युक्तं ब्रह्मणः जिज्ञासाकर्मत्वमनुगतं भवति। जिज्ञासापदे प्रकृतिभूतस्य ज्ञाधातोः अवगतिपर्यन्तं ज्ञानमित्यर्थः। तस्यैव ज्ञानस्य अविद्यानवर्तकत्वेन पुरुषार्थे पर्यवसानात् युक्तं तस्य इच्छाविषयत्वम्।

अत्रैवमाक्षेपः – जिज्ञास्यं ब्रह्म प्रसिद्धमप्रसिद्धं वेति। यदि प्रसिद्धं तर्हि ज्ञातत्वान्न पुनर्जिज्ञासितव्यम्। यद्यप्रसिद्धं नैव शक्यं जिज्ञासितुम्। तत्र समाधानम् - जिज्ञास्यत्वेन प्रतिज्ञातं ब्रह्म लोके अहम्प्रत्ययविषयत्वेन अर्थादात्मत्वेन ज्ञातमेव। यथोक्तं भाष्ये – **'सर्वो हि आत्मास्तित्वं प्रत्येति। न नाहमस्मि इति। यदि हि नात्मास्तित्वप्रसिद्धिः स्यात् तर्हि सर्वो लोकः नाहमस्मीति प्रतीयात्'** इति। तथापि आत्मस्वरूपविषये दार्शनिकानां बहुधा विप्रतिपत्तिदर्शनात् सर्वात्मभूतं निर्विशेषं निष्प्रपञ्चम् अद्वैतं ब्रह्म इत्यर्थस्य अनिश्चितत्वात् तदर्थं युक्ता ब्रह्मजिज्ञासा। तथा च वेदान्तवाक्यविचाररूपायाः ब्रह्मजिज्ञासायाः ब्रह्मावगतौ पर्यवसानेन निःश्रेयसहेतुत्वाद् ब्रह्मजिज्ञासा कर्तव्या॥ पुनः तद्ब्रह्म जगज्जन्मस्थितिलयकारणम्। **'यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्म'**[२७] इत्यादि श्रुतेः। तद्ब्रह्म अभिन्ननिमित्तोपादानकारणमस्ति। 'आत्मन आकाशः सम्भूतः' इत्यादिश्रुत्यनुसारं ब्रह्मैव जगत्कारणमिति ज्ञायते। तत्रापि यदि ब्रह्म निमित्तकारणमात्रं स्यात् तर्हि निमित्तकारणस्य कार्यबहिर्भूतत्वेन ब्रह्मप्रपञ्चयोः भेदापत्त्या 'एकमेवाद्वितीयम्' इति श्रुत्युक्तमद्वितीयत्वं ब्रह्मणो न सिद्ध्येत्। अतः अद्वितीयत्वाद् ब्रह्मैव प्रपञ्चस्योपादनमद्वितीयत्वादेव निमित्तमपीत्यद्वैतपर्यवसायिन्या श्रुत्या निश्चीयते। निमित्तं च तदुपादानं च निमित्तोपादानम्। अभिन्नं च तन्निमित्तोपादानं चेति पुनः कर्मधारयः। आद्यकर्मधारयादेव निमित्तोपादानयोरभेदे सिद्धे पुनरभिन्नपदं कर्मधारयावगतः अभेदः ऐक्यलक्षण एव न तु नीलोत्पलादौ गुणगुणिनोरिव तादात्म्यरूपः इति ज्ञापनार्थम्।

इममर्थं वक्तुकामः सूत्रकारः **'जन्माद्यस्य यतः'**[२८] इति ब्रह्मणः जगत्कारणत्वमुक्त्वा पुनः **'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्'**[२९] इति सूत्रयामास। तदर्थस्तु छान्दोग्ये एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात् कार्यस्योपादानादनन्यत्वेन उपादानकारणज्ञानेन तद्विकाराणां सर्वेषां ज्ञानसम्भवात् वाचारम्भणश्रुतौ चोपन्यस्तस्य दृष्टान्तस्यापि उपादानविषयत्वात् ब्रह्मणः जगदुपादानत्वमेव प्रत्याय्यत इति। एवमेव 'यतो वा' इत्यादिश्रुतौ 'यतः' इति ब्रह्मणः जायमानानां विकाराणामुपादानत्वेन **'जनिकर्तुः प्रकृतिः'**[३०] इत्युपादानसंज्ञा ततः पञ्चमीति पाणिनीयस्मृत्यापि ज्ञायते। 'आत्मन आकाशः सम्भूतः' इत्यत्रापि उपादाने पञ्चमी 'सच्च त्यच्चाभवत्' इति वाक्यशेषे 'मृद्घटोभवत्' इत्यादाविव प्रकृतिविकारभावे सामानाधिकरण्यात्। 'सोऽकामयत बहु स्यां प्रजायेय' इति बहुभवनाभिध्यानस्य प्रत्यगात्मविषयत्वात्

---

[२७] *तैत्तिरीयोपनिषत् ३/१*

[२८] *ब्रह्मसूत्रम् १/१/२*

[२९] *ब्रह्मसूत्रम् १/२/३५*

[३०] *अष्टाध्यायी १/४/३०*

'आकाशादेव समुत्पद्यन्ते। आकाशं प्रत्यस्तं यन्ति' इत्याकाशशब्दिताद् ब्रह्मणः साक्षात् सृष्टिप्रलययोराम्नानात् 'तदात्मानं स्वयमकुरुत' इति सृष्टिप्रक्रियायां कर्तुरेव कर्मत्वश्रवणात् 'कर्तारमीशं पुरुषं ब्रह्मयोनिम्' 'यद्भूतयोनिं परिपश्यन्ति धीराः' इति ब्रह्मणि उपादानकारणार्थकयोनिशब्दप्रयोगाच्च ब्रह्मैव जगतः अभिन्ननिमित्तोपादानमित्यव-गम्यते। अत्र केचित् विप्रतिपद्येत –'स ईक्षाञ्चक्रे' इति ब्रह्मण ईक्षापूर्वककर्तृत्वश्रवणात् तथाविधकर्तृणां राजादीनां लोके उपादानत्वाभावात् प्रपञ्चस्य ब्रह्मविलक्षणत्वाच्च न ब्रह्म उपादानमिति। अस्य समाधानम् – 'न विलक्षणत्वादस्य तथात्वं च शब्दात्' इत्याद्यधिकरणेषु **'दृश्यते तु'**[31] इत्यादिसूत्रैः भाष्ये च प्रदत्तम्। वस्तुतः प्रकृत्यधिकरणभाष्ये कथितम् – 'न लोकवदिह भवितव्यम्। न ह्ययमनुमानगम्योर्थः। शब्दगम्यत्वात्वस्यार्थस्य यथाशब्दमिह भवितव्यम्' इति। तस्मादागमैकसमधिगम्ये ब्रह्मणि तर्काणामप्रवेशादागमानुसारं ब्रह्म अभिन्ननिमत्तोपादानमिति ज्ञेयम्॥अयमेवार्थं दृढयितुं तृतीयं सूत्रमिदमारब्धम् – **'शास्त्रयोनित्वात्'**[32] इति। अत्रैवं संगतिः – चेतनसृष्टेः ज्ञानपूर्वकत्वात् जन्मादिसूत्रेण जगत्कारत्वोक्त्या ब्रह्मणः सर्वज्ञत्वम् अर्थात् सूत्रितम्। यथा – 'ब्रह्म सर्वज्ञं सर्वकारणत्वात् यो यत्कर्ता सः तज्ज्ञः' इति। इदमार्थिकं सर्वज्ञत्वं प्रधानादिकारणान्तरनिरासाय वेदकर्तृत्वेन हेतुना शास्त्रयोनित्वाधिकरणे दृढीयते इति पूर्वोत्तराधिकरणयोः एकविषयत्वं संगतिः। यद्वा वेदस्य नित्यत्वेन उत्पत्त्यसम्भवात् ब्रह्मणः सर्वकारणत्वं न सम्भवतीत्याक्षेपसंगत्या अस्याधिकरणस्योपस्थितिः।

तथा च – **'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोथर्वाङ्गिरसः'**[33] इति वाक्यं विषयः। तत् किं वेदकारणत्वेन ब्रह्मणः सर्वज्ञत्वं साधयति न वेति सन्देहः। तत्र ब्रह्मणः वेदकर्तृत्वे वेदस्य पौरुषेयत्वापातात् यथा पौरुषेयग्रन्थाः मूलप्रमाणसापेक्षाः तद्वत् वेदस्यापि प्रमाणान्तरसापेक्षत्वेन पूर्वतन्त्रोक्तस्य निरपेक्षप्रामण्यस्य भङ्गप्रसङ्गः। अतः प्रागुक्तं वाक्यं ब्रह्मणः वेदकर्तृत्वं न साधयतीति पूर्वपक्षः। अत्रायं सिद्धान्तः – **'शास्त्रयोनित्वात्'**[34] इति। अस्यार्थः – 'महतः ऋग्वेदादेः शास्त्रस्य अनेकविद्यास्थानोपबृंहितस्य प्रदीपवत्सर्वार्थावद्योतिनः सर्वज्ञकल्पस्य योनिः कारणं ब्रह्म' इति भाष्ये दर्शितः। एतेन सर्वज्ञकल्पस्य वेदस्य कारणत्वात् ब्रह्मणः सर्वज्ञत्वं प्रगेव सिद्ध्यतीत्युक्तं भवति। तद्यथा – 'यद्यच्छास्त्रं यस्मादाप्तपुरुषात् सम्भवति सः ततः शास्त्रादधिकार्थविज्ञानः' इति लोके प्रसिद्धम्। यथा शब्दसाधुत्वरूपाल्पार्थप्रतिपादक-व्याकरणशास्त्रस्य प्रणेता पाणिनिः तस्मात् शास्त्राद् अधिकमेवार्थं जानाति। यदि अल्पार्थमपि शास्त्रम् अधिकार्थज्ञात् पुरुषात् सम्भवति तदा अनेकशाखादिविशेषणोपेतः सर्वार्थप्रकाशकः वेदः पुरुषनिःश्वासवत् अप्रयत्नेनैव लीलान्यायेन यस्मात् पुरुषविशेषात् सम्भूतः किमु वक्तव्यं तस्य पुरुषविशेषस्य सर्वज्ञत्वं सर्वशक्तित्वं च। ब्रह्मणः सर्वज्ञत्वं तु द्वेधा सम्भवतीति व्याख्यनेषु

---

[31] *ब्रह्मसूत्रम् २/१/६*

[32] *ब्रह्मसूत्रम् १/१/३*

[33] *बृहदारण्यकम् २/४/१०*

[34] *ब्रह्मसूत्रम् १/१/३*

दर्शितम्। ब्रह्मणः स्वप्रकाशचैतन्यरूपत्वात् सर्वगतत्वाच्च स्वसंसृष्टसर्वार्थप्रकाशकत्वं सर्वज्ञत्वमिति एकः पक्षः। स्वोपाधिभूतमायावृत्तिरूपज्ञानवत्वमिति द्वितीयः।

सूत्रे योनिशब्दः कर्तृत्वमुपादानत्वं चेति द्विविधं कारणत्वं वक्ति। तत्र कर्तृत्वार्थपक्षे इदमनुमानमुक्तं भवति – 'वेदः स्वविषयादधिकार्थज्ञानवज्जन्यः प्रमाणवाक्यत्वात्' इति। उपादानत्वपक्षे वेदे सर्वार्थप्रकाशकत्वशक्तेः सद्भावात् वेदोपादाने ब्रह्मण्यपि सा सम्भवत्येवेति अयमनुमानप्रयोगो ज्ञातव्यः 'वेदगता सर्वार्थप्रकाशनशक्तिः तदुपादानब्रह्मगतशक्तिपूर्विका प्रकाशनशक्तित्वात् प्रदीपशक्तिवत्' इति। एवं ब्रह्मणः वेदकारणत्वमात्रेण वेदस्य पौरुषेयत्वं तु नापद्यते। पुरुषेण प्रमाणान्तरेणार्थमुपलभ्य रचितत्वमेव पौरुषेयत्वम्। ईश्वरस्तु स्वकृतपूर्वकल्पीयक्रमसजातीयक्रमवन्तं वेदराशिं विचित्रत्रिगुणमायासहायः अनावृतानन्तरूप-प्रकाशचिन्मात्रः अस्मिन्नपि कल्पे हिरण्यगर्भादिषु आविर्भावयति। अतः वेदस्य प्रमाणान्तरप्राप्तज्ञान-पूर्वकरचितत्वाभावात् वेदः अपौरुषेय एव। न चैवमपि वेदस्यानित्यत्वापत्तिः इष्टापत्तेः। न ह्यद्वैतवादिनां ब्रह्मभिन्नस्य कस्यचिदपि नित्यत्वमिष्यते।

वस्तुतः वेदनित्यत्ववादिभिरपि वाक्यसमुदायरूपस्य वेदस्य नित्यत्वमुपपादयितुमशक्यम्। तदेवमाख्यातं भामतीकारैः – 'येऽपि तावत् वर्णानां नित्यत्वमास्थिषत तैरपि पदवाक्यादीनाम-नित्यत्वमास्थेयम्। आनुपूर्वीभेदवन्तो हि वर्णाः पदम्। पदानि चानुपूर्वीभेदवन्ति वाक्यम्। व्यक्तिधर्मश्चानुपूर्वी न वर्णधर्मः वर्णानां नित्यानां विभूनां च कालतो देशतो वा पौर्वापर्यायोगात्' इति। अतः 'यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता' इति वदद्भिः मीमांसकैः वेदे पुरुषस्वातन्त्र्यमात्रं प्रतिषिध्यते। तच्च अस्माकमपि समानमेव। ईश्वरस्तु वेदकर्तापि सन् स्वरवर्णपदार्थादिषु गतकल्पीयमेव वेदमुपदिशति। तस्मात् वेदकारणत्वात् ब्रह्मणः सर्वज्ञत्वं ब्रह्मकर्तृकोऽपि वेदः अपौरुषेयः। शास्त्रं योनि यस्य तत् शास्त्रयोनिः इति भाष्ये शास्त्रयोनिशब्दस्य अन्यदपि विग्रहवाक्यं प्रदर्शितम्। ब्रह्माधिगमे **'यतो वा इमानि भूतानि जायन्ते'**[३५] इत्यादि श्रुतिरेव प्रमाणमिति ज्ञायते। यद्यपि जन्माद्यधिकरणे इदमुक्तं भवति तथापि तत्र शास्त्रपदस्यानुपादानात् अनुमानोपन्यासपरं तदित्याशङ्का स्यात्। अतः इदं द्वितीयवर्णकं सार्थकम्।

**३. जीवः – 'ज्ञोऽत एव'**[३६] इत्यस्मिन् सूत्रे बादरायणः जीवात्मा 'ज्ञ' इति वदति। श्रीशङ्कराचार्यैः भाष्ये ज्ञशब्दस्य नित्यचैतन्यस्वरूपः इत्युक्तम्। जीवात्मा कर्त◌ा अपि अस्ति। जीवात्मनः जनन-मरणे न वर्तेते। जननमरणे केवलं शरीरस्यैव। जीवः नित्यः अथ अणुपरिमाणकः। जीवः परमात्मनः एव अंशः। अश्मरथ्यः, औडुलोमी काशकृत्स्नश्च जीवब्रह्मणोः सम्बन्धविषये भिन्नभिन्नविचारान् प्रकटयन्ति। जीवेश्वरयोरुपकार्योपकारकभावाभ्युपगमात् किं स्वामिभृत्यवत्सम्बन्धः आहोस्विदग्नि-विस्फुलिङ्गवदित्यस्यां विचिकित्सायामनियमो वा प्राप्नोति। अथवा स्वामिभृत्यप्रकारेष्वेवेशितव्य-भावस्य प्रसिद्धत्वात्तद्विध एव

[३५] *तैत्तिरीयोपनिषत् ३/१*

[३६] *ब्रह्मसूत्रम् २/३/१८*

सम्बन्ध इति प्राप्नोति। अतो ब्रवीति सूत्रकारः– **'अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके'**[३७] इति। जीवः ईश्वरस्यांशो भवितुमर्हति, यथाग्नेर्विस्फुलिङ्गः। अंश इवांशः। नहि निरवयवस्य मुख्योंऽशः सम्भवति। कस्मात्पुनर्निरवयवत्वात्स एव न भवति। नानाव्यपदेशात्। **'सोन्वेष्टव्यः स विजिज्ञासितव्यः'**[३८], 'एतमेव विदित्वा मुनिर्भवति''य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति' इति चैवञ्जातीयको भेदनिर्देशो नासति भेदे युज्यते। **'अपि च स्मर्यते'**[३९]इति सूत्रानुसारेण ईश्वरगीतास्वपि चेश्वरांशत्वं जीवस्य स्मर्यते **–'ममैवांशो जीवलोके जीवभूतः सनातनः'**[४०] इति। तस्मादप्यंशत्वावगमः।

**४. उत्क्रान्तिः मोक्षो वा**–सूत्रकारोक्तप्रकारेण जीवः सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत इति श्रूयते। सः सर्वबन्धविनिर्मुक्तः शुद्धेनैवात्मनावतिष्ठते, 'मुक्तः प्रतिज्ञानात्' इति। **'य आत्माऽपहतपाप्मा'**[४१] इत्यादिमुक्तात्मविषयमेव प्रतिज्ञानम्। फलत्वसिद्धिरपि मोक्षस्य बन्धनिवृत्तिमात्रापेक्षा नापूर्वोपजननापेक्षा। कथं पुनर्मुक्त इत्युच्यते-यावता **'परं ज्योंतिरुपसंपद्यत'**[४२]इति कार्यगोचरमेवैनं श्रावयति। ज्योतिःशब्दस्य भौतिके ज्योतिषि रूढत्वात् इति पूर्वपक्षे उक्तं सूत्रकारेण **'आत्मा प्रकरणात्'**[४३] इति। आत्मैवात्र ज्योतिःशब्देनावेद्यते प्रकरणात् **'य आत्माऽपहतात्मा विजरो विमृत्युः'**[४४] इति हि प्रकृते परस्मिन्नात्मनि नाकस्माद्भौतिकं ज्योतिः शक्यं गृहीतुम्। ज्योतिःशब्दस्त्वात्मन्यपि दृश्यते **'तद्देवा ज्योतिषां ज्योतिः'**[४५] इति। एवं च तत्त्वमसि, अहं ब्रह्मास्मि, यत्र नान्यत्पश्यति, न तु तद्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्, इत्येवमादीनि वाक्यानि अविभागेनैव परमात्मानं दर्शयन्तीत्युक्तं सूत्रकारेणापि **'अविभागेन दृष्टत्वात्'**[४६] इति।

एवं सर्वथा विचार्यमाणे सति ब्रह्मसूत्राणि ह्यद्वैतपरकाणि एव सन्तीति विज्ञायते। सूत्रकारोऽपि ब्रह्मभिन्नं जीवमथ प्रपञ्चं कथमपि नाङ्गीकरोति। अपि च भगवान् बादरायणः श्रुतिमेव प्रमाणत्वेन मन्यते इत्यतः नैव सः श्रुतिभिन्नमन्यत्शास्त्रं वक्तुकाम आसीन्न च युक्त्या स्वाभिप्रायं प्रकटयितुमारब्धवानिदं शास्त्रमिति शम्।

---

[३७] *ब्रह्मसूत्रम् २/३/४३*
[३८] *छान्दोग्योपषत्८/७/१*
[३९] *ब्रह्मसूत्रम् २/३/१८*
[४०] *भगवद्गीता १५/७*
[४१] *छान्दोग्योपषत्८/७/१*
[४२] *छान्दोग्योपषत्७/१२/३*
[४३] *ब्रह्मसूत्रम् ४/४/३*
[४४] *छान्दोग्योपषत्८/७/१*
[४५] *बृहदारण्यकम् ४/४/१६*
[४६] *ब्रह्मसूत्रम् ४/४/४*

------------------------------------------------------------

**सन्दर्भग्रन्थसूची**

१. ब्रह्मसूत्रशाङ्करभाष्यम्, वासुदेवशर्मा, चौखाम्बासंस्कृतप्रतिष्ठानम्, 2008
२. अद्वैततत्त्वमीमांसा, अभेदानन्द भट्टाचार्यः, परिमल पब्लिकेशन्स् नवदेहली, 2005
३. अद्वैतसिद्धिः, मधुसूदनसरस्वती, परिमल पब्लिकेशन्स् नवदेहली, 1988
४. अप्रकाशिताः उपनिषदः, कुञ्जन् राजः, अडियारग्रन्थालयःमद्रास, 1933
५. उपनिषद्भाष्यम्, एस्. सुब्रह्मण्यशास्त्री, दक्षिणामूर्तिमठप्रकाशनम्वाराणसी, 2004
६. वेदान्तसारः, सदानन्दयतिः, कृष्णदासअकाडमी-वाराणसी, 2000
७. वेदान्तविमर्शः, अभिमन्युः, परिमल पब्लिकेशन्स् नवदेहली, 1991
८. वेदान्तपरिभाषा, धर्मराजाध्वरीन्द्रः, केन्द्रियसंस्कृतविश्वविद्यालयःनवदेहली, 2011
९. ईषादिदशोपनिषदः, अपौरुषेयाः, निर्णयसागरप्रेस्, बाम्बे, 1932
१०. गीताभाष्यम्, रामानुजाचार्यः, उभयवेदान्तग्रन्थमाला, 1941

~~~~~~~~~~~
~~~~~~~~~~~

वर्षम्-०४ अङ्कः-०४ शोधज्योतिः
जनवरी-दिसम्बर, २०२२ ISSN-2350-0700

# अष्टाध्यायीप्रयोगदीपिकायाम् अधिकरणकारकविमर्शः

जयश्री ठक्कर[1]

## प्रास्ताविकम्

ऋग्वेदस्य किञ्चन प्रसिद्धं सूक्तं वर्तते **वाक्सूक्तमिति** नामकम्। तत्र कश्चन प्रसिद्धः मन्त्रांशः समुपलभ्यते यत् –**अहमेव सर्वमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः।**[2]अस्य मन्त्रस्य अयमेवार्थः यत् अस्मिन् जगति वा परलोके देवताभिर्वा मनुष्यैः यः कश्चन वाग्व्यव्हारः क्रियते स सर्वोपि व्यवहारः वागाधारेणैव जायते। तथा च मनुष्यः निजमुखात् स्वभाषया स्वमनोगतान् भावान् अन्येभ्यः वाग्भिरेव सम्प्रसारयति। उक्तं खलु **प्लेटो** महोदयेन –**विचारः आत्मनः मूकमथवा ध्वनिरहितं सम्भाषणमास्ते, तदेव यदा ध्वन्यात्मकं भूत्वा ओष्ठेषु आगच्छति तदानीं भाषासंज्ञया विभूष्यते।**[3]पुनश्च एषा भाषा कारकाधीना। तर्हि प्रश्नः जायते किं नाम कारकम्(factor)?

उच्यते **क्रियान्वयि कारकम्।** अर्थात् यस्य साक्षात् क्रियया सह सम्बन्धः भवति तत्कारकं कथ्यते। उदाहरणं यथा –**पाचकः पचति।** अत्र पाचक इति पदं पाकक्रियायाम् अन्वेति अतः पाचकः इति कर्तृकारकमस्ति।

अस्य कारकप्रकरणस्य विस्तृतं, शुद्धं स्वरूपं केवलं संस्कृतभाषायामेव प्राप्यते। विना कारकं किं संस्कृतमित्यपि कथ्यते चेन्नास्त्यतिशयोक्तिः। एतत् कारकप्रकरणं भगवता पाणिनिना अष्टाध्यायीति ग्रन्थेऽस्मिन् ससूत्रं न्यरूपि। तथा च एतान्येव कारकाणि परवर्तिभिः ग्रन्थकर्तृभिः रुचिरया शैल्या निगदितानि। एतान्येव यथा वृत्तिग्रन्थे काशिकाकारौ सरलैः वाक्यैः निरूपितवन्तौ। कौमुदीग्रन्थेषु भिन्नैः उदाहरणैः वरदराजाचार्यः, भट्टोजिदीक्षितः न्यरूपयताम्। तद्वदेव आर्षपरम्परायां विद्वद्वर्यैः पं. सत्यानन्द-वेदवागीशवर्यैः स्वविरचितसच्छन्दश्लोकैः निजनिर्मितायाम् **'अष्टाध्यायीप्रयोगदीपिकायाम्'** इत्यस्मिन् ग्रन्थे निरूपितम्। अत्र प्रश्नः जायते यत् कति कारकाणि भवन्ति? उच्यते यथा –

---

*[1] शोधच्छात्रा – भाषासाहित्यभवनम्, गुजरात युनिवर्सिटी, अहमदावाद। गृहसङ्केतः - पतञ्जली आरोग्य केन्द्र, वाडी रोड, डीसा, बनासकांठा, गुजरात, 385535, इमेईल –jaythakkar6788@gmail.com, mobile no.- 9106370424*

*[2] ऋग्वेदः – वाक्सूक्तम् – 10.125.1*

*[3] प्लटोमतम्*

**'कर्ताकर्म च करणं च सम्प्रदानं तथैव च।**
**अपादानमधिकरणमित्याहुः कारकाणि षट्' ॥**[४]

संस्कृते षड्विधानि कारकाणि भवन्ति, तान्यत्र सुप्रसिद्धे श्लोके सङ्गृहीतानि सन्ति। तानि कारकाणि यथा – कर्तृकारकम्, कर्मकारकम्, करणकारकम्, सम्प्रदानकारकम्, अपादनकारकम्, अधिकरणकारकम्। एतेषु षड्विधेषु कारकेषु संस्कृतभाषा निहिताऽस्ति। कथनस्याशयः वयं यत्किमपि वदामः तदेतदन्तर्गतं विज्ञेयं। एतेषु षड्विधेष्वन्यतमं वर्तते **अधिकरणकारकम्।** अस्य कारकस्य अष्टाध्यायी प्रयोगदीपिकानुसारं विमर्शः अत्र शोधपत्रे प्रदर्श्यते।शोधपत्रे प्रदर्शिताः बिन्दवः यथा –

**१. प्रास्ताविकम्।**
**२. आधारः एवं अधिकरणम् इति पदार्थयोः समीक्षा।**
**३. भावशब्दस्य समीक्षापूर्वकं क्रियाद्वैविध्यप्रतिपादनम्।**
**४. षष्ठी चानादरे।**
**५. स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च।**
**६. आयुक्तककुशलाभ्यां चासेवायाम्।**
**७. यतश्च निर्धारणम्।**
**८. साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः।**
**९. प्रसितोत्सुकाभ्यां तृतीया च।**
**१०. नक्षत्रे च लुपि।**
**११. सप्तमीपञ्चम्यौ कारकमध्ये।**
**१२. "अधिरीश्वरे एवं यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी"इत्यनयोः सूत्रयोः समीक्षा।**
**१३. संशोधनस्य लाभाः उपसंहारश्च॥**

**॥ आधारः एवं अधिकरणम् इति पदार्थयोः समीक्षा ॥**

अधिकरणकारकस्थं अधिकरणेति पदं **आधारोऽधिकरणम्**[५] इत्यस्मात् सूत्रात् आगतं वर्तते। अत्र आधारः इति शब्दः श्रूयते। तर्हि आधारः अर्थात् **आध्रियते क्रियाऽस्मिन्नित्याधारः।** अर्थात् यत्र क्रिया आधारिता भवति स आधारः इत्युच्यते। उदाहरणम् यथा –**कटे आस्ते।** अत्र उपवेशनक्रियायाः आधारः

---

[४] *मुग्धबोधटीका - दुर्गादासः*
[५] *अष्टाध्यायी – 1-4-45*

वर्तते कटम्। अतः **सप्तम्यधिकरणे च**[६]इत्यनेन सूत्रेण अधिकरणकारकत्वात् सप्तमीविभक्तिः जायते। अतः कटे आस्ते इति अधिकरणकारकस्योदाहरणम्। उक्तं खलु भर्तृहरिणा अधिकरणकारकविषये यत् –

**कर्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम्।**
**उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्॥**[७]

अर्थात् **क्रियायाः व्यपारफलयोः यदाश्रयस्थानं भवति तदेव अधिकरणमित्युच्यते।** सूत्रेऽस्मिन् अष्टाध्यायीप्रयोगदीपिकारः किञ्चिद्वैदिकमुदाहरति तद्यथा –

**यस्मिन् वृक्षे**मध्वदः सुपर्णा निविशन्ते सुवते चाधिविश्वे।[८]
अधा शयीत निऋतेर**उपस्थे।**[९]

सत्यानन्दवेदवागीशाचार्याणामिदमेव वैशिष्ट्यं वर्तते यत् एतस्य कारकस्य वेदे कथमुपयोग अस्माकम् ऋषिभिः कृतः तदस्मान् अवबोधयन्ति शिक्षयन्ति च।

यथोक्तं पूर्वम् आध्रियते क्रियाऽस्मिन्नित्याधारः। अत्र विद्यमानस्य आधारस्य त्रैविध्यं वर्तते। तद्यथा –

**औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा।**[१०]

तत्र यथा क्रमं औपश्लोषिकः आधारस्तु प्रसिद्धः –**कटे आस्ते, स्थाल्यां पचति।** अत्र आधाराधेययोः संयोगसम्बन्धः वर्तते, स एव औपश्लोषिकः आधारः। वैषयिकः आधारस्तु – मोक्षे इच्छास्ति। व्याकरणे रुचिः अस्ति। अत्र आदिमे उदाहरणे भक्तस्य मोक्षविषये इच्छास्ति। अतः विषयता सम्बन्धेन आधारः बुद्धौ विद्यते। तथैव **व्याकरणे रुचिः, शास्त्रे रुचिः, नारायणे भक्तिः** इत्यादिकं शेषं ज्ञेयम्। अभिव्यापकं तु जगत्प्रसिद्धं **सर्वस्मिन्नात्मास्ति।**यत्र आधारः भवति तत्र सर्वत्र आधेयं दृश्यते तत्र अभिव्यापकः आधारः ज्ञेयः। अर्थात् तादृशमेकमपि स्थानं नास्ति यत्र आत्मा न विद्यते अत अत्र व्यापकता अभिव्यापिका वर्तते। यथोक्तं श्वेताश्वतरोपनिषदि यथा -

**तिलेषु तैलं दधिनीव सर्पिरापः स्रोतःस्वरणीषु चाग्निः।**
**एवमात्मात्मनि गृह्यतेऽसौ सत्येनैनं तपसा योऽनुपश्यति॥**[११]

---

[६] *अष्टाध्यायी – 2-3-36*
[७] *वाक्यपदीयम् – पदकाण्डम् – श्लोकसङ्ख्या-148*
[८] *ऋग्वेदः – 1.164.22*
[९] *ऋग्वेदः – 10.95.14*
[१०] *वैय्याकरणसिद्धान्तकौमुदी – सप्तम्यधिकरणे च – 2.3.36*
[११] *श्वेताश्वतरोपनिषत् - प्रथमोऽध्यायः – मन्त्रः - 15*

अत्र सर्वाण्यपि उदाहरणानि अभिव्यापकाधारस्य प्रचोदितानि सन्ति। यथा – तिलेषु तैलं, दधिनि घृतम्, स्रोतःसु आपः, अरणिषु अग्निः।

अष्टाध्यायीप्रयोगदीपिकाकारः समुदाहरति वैदिकमुदहरणं यथा –

विश्वं पुष्टं **ग्रामे अस्मिन्न**नातुरम्।[१२]

या नो **दूरे तळितो** या अरातयोऽभि सन्ति जम्भया ता अनप्रसः।[१३]

जहि शत्रुम**न्तिके दूरके च।**[१४]

तद् **दूरे तद्वन्तिके।**[१५]

अनेन एतेषां वैदिकं ज्ञानं अस्मभ्यं ज्ञायते। पुनश्च वेदे अधिकरणार्थे कथं सप्तमीविभक्तिः प्रयुक्ता वर्तते तदपि संज्ञायते। पुनश्च सूत्रस्थचकारः दूरान्तिकार्थकः वर्तत इत्यपि ज्ञानं जयते।

**॥ भावशब्दस्य समीक्षापूर्वकं क्रियाद्वैविध्यप्रतिपादनम्॥**

अधिकरणकारके अपरं सूत्रं वर्तते **यस्य च भावेन भावलक्षणम्**[१६]**।** अत्र **भावशब्देन क्रियायाः ग्रहणम्**। तथा च सूत्रार्थः तु यस्य च क्रियया क्रियालक्षणस्य वा क्रियान्तरस्य बोधो भवति तत्र कर्मवाचीशब्दात् सप्तमीविभक्तिः भवति। प्रसिद्धमुदाहरणं परिशीलयामः यथा –

**गोषु दुह्यमानासु गतः।**

अस्योदहरणस्य ज्ञानात्पूर्वं क्रियायाः द्वैदिध्यम् अवश्यं ज्ञेयम्। सा च क्रिया १) कर्तृनिष्ठक्रिया, २) कर्मनिष्ठक्रिया। अत्र उदाहरणे अनयोः क्रिययोः अपि संज्ञानं जायते। उदाहरणे कर्म वर्तते गो तथा कर्मनिष्ठक्रिया वर्तते **दोहनं,** तथा च तया क्रियया गमनरूपायाः कर्तृनिष्ठक्रियायाः अपि संज्ञानं जायते। प्रयोगदीपिकाकारस्तु –

ऐद् **गोषु दुह्यमानासु** प्रत्यैद् **दुग्धासु गोषु** सः।
**अग्नौ** स **हूयमाने** प्रैत् **प्रत्यैदग्नौहुते** वसुः॥[१७]

एवं श्लोकमाध्यमेन तैः एतस्यसूत्रस्य उदाहरणं प्रतिपादितम्।

**॥ षष्ठी चानादरे॥**

---

[१२] *अष्टाध्यायीप्रयोगदीपिका – 2.3.36(ऋग्वेदः – 1.114.1)*
[१३] *अष्टाध्यायीप्रयोगदीपिका – 2.3.36 (ऋग्वेदः – 2.21.9)*
[१४] *अष्टाध्यायीप्रयोगदीपिका – 2.3.36 (ऋग्वेदः – 9.75.5)*
[१५] *अष्टाध्यायीप्रयोगदीपिका – 2.3.36 (यजुर्वेदः – 40.5)*
[१६] *अष्टाध्यायी – 2.3.37*
[१७] *अष्टाध्यायीप्रयोगदीपिका – 2.3.37*

यथोक्तम्पूर्वं क्रियया क्रियान्तरस्य अभिलक्षणं जायते तथा च अनादरस्य अधिकता भवति तदा षष्ठी, सप्तमी च भवतः। उदाहरणम् अष्टाध्यायी प्रयोगदीपिकानुसारं पश्यामः यथा –

**तस्याः रुदत्याः** प्राव्राजीत् वनस्थो दृढनिश्चयः।[१८]

अस्यार्थः रुदन्तीं पत्नीं परित्यज्य तस्याः पतिः संन्यासं प्राविशत्। अत्र लौकिकोदाहरणं प्रदर्शयन् प्रयोगदीपिकाकारः षष्ठीविभक्त्या अनादरार्थे निर्देशं निर्दिशति। सप्तम्याः यथा –

**तस्यां रुदत्यां** प्राव्राजीद् वणिग् व्यापारकर्मणे।
**तस्य क्रोशत**ऐद् भ्राता **तस्मिन् क्रोशति** प्रैत् पिता॥[१९]

अत्र कश्चन वणिक् स्वीयां रुदन्तीं पत्नीं परित्यज्य व्यापारकर्मणे प्राव्राजीत्। अन्तिमस्यां पङ्क्तौ षष्ठी एवं सप्तमी उभययोः निदर्शनं ग्रन्थकारेण कारितम्। तथा च एभिः उदाहरणैः गृहस्थानन्तरं संन्यासस्य स्वीकरणं यथाशास्त्रं ग्रन्थकारः बोधयत्यस्मानिति तेषां वैशिष्ट्यम्।

**॥ स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च ॥**

एतेषां शब्दानां योगे षष्ठी सप्तमी च भवतः इति सामान्यार्थः सूत्रस्य। साक्षात्अष्टाध्यायीप्रयोगदीपिकाकारस्य उदाहरणान् परिशीलयामः।

नन्दः **स्वामीगवामा**सीद् **गोषु स्वामी** च तत्सुतः।
**सम्पदामीश्वरो** राजा जनोऽपि **सम्पत्स्वीश्वरः**॥१॥
**धनस्याधिपतिः** कर्त्ताऽलसो **नाधिपतिर्धने।**
**दायदाः सम्पदः** पुत्रा दुहितरोऽपि **सम्पदि॥२॥**
**गवां साक्षी** स गोपालोऽ**जेषु साक्षी** सुधाकरः।
**प्रतिभूर्हस्तिनां** मन्त्री **हस्तिषु प्रतिभूः** शिवः॥३॥[२०]

अत्र श्लोकत्रयेषु ग्रन्थकारेण विविधानि स्वरचितानि छन्दोमयानि उदाहरणानि प्रदर्श्य षष्ठीसप्तमीविभक्त्योः उपयोगः प्रयोगश्च स्वशैल्या प्रतिपादितः वर्तते। अत्र गवां स्वामी नन्दः आसीत् इत्यनेन भगवतः श्रीकृष्णस्य पितुः स्मरणं कृतं वर्तते तथा च षष्ठीसप्तमीविभक्त्योः प्रयोगः दर्शितः। तदनु ईश्वरशब्देनसाकं उभययोः विभक्त्योः प्रतिपादनं वर्तते। तथा च सूत्रस्थानां सर्वेषां पदानां प्रयोगपूर्वकं षष्ठीसप्तमीविभक्त्योः प्रयोगः ग्रन्थकारेण प्रादर्शि।

---

[१८] *अष्टाध्यायीप्रयोगदीपिका – 2.3.38*
[१९] *अष्टाध्यायीप्रयोगदीपिका – 2.3.38*
[२०] *अष्टाध्यायीप्रयोगदीपिका – 2.3.39*

**॥ आयुक्तककुशलाभ्यां चासेवायाम् ॥**

आयुक्त एवं कुशल इत्यनयोः शब्दयोः योगे सप्तमीविभक्तिः भवति इति सूत्रस्य सामान्यार्थः।
अष्टाध्यायीप्रयोगदीपिकाकारस्तु यथा –

**गृहनिर्माणस्यायुक्त आयुक्त गृहरञ्जने।**
**गृहाऽवनस्य कुशलः कुशलः पटनिर्मितौ॥**[२१]

अत्र ग्रन्थकारः आयुक्तकुशलशब्दयोः गृहसम्बन्धीनं लौकिकम् उदाहरणं प्रदर्श्य षष्ठीसप्तम्योः प्रयोगं प्रदर्शयति।

**॥ यतश्च निर्धारणम् ॥**

यत्र जातिः, गुणः, क्रिया तथा च संज्ञा एतैः समुदायात् एकस्य पृथक्करणं क्रियते तदा षष्ठीसप्तम्यौ भवतः। उदाहरणं यथा-

**नराणां ब्राह्मणः** श्रेष्ठः बलीष्ठः **क्षत्रियो नृषु।**
**पक्षिणां शिखी** प्रेष्ठः **ज्येष्ठो विज्ञेषु** वेदवित्॥
बहुक्षीरतमा कृष्णा **धेनुषु दुग्धदासु** तु।
**अध्वगानां च धावन्तः** शीघ्रतमाः सदा मताः॥[२२]

अत्र ग्रन्थकारः निर्धारणविषये कथं षष्ठीसप्तम्यौ भवतः तन्निजनिर्मिताभ्यां श्लोकाभ्यां बोधयति। तथा च पक्षिषु रूपाधिक्यात् शिखिनः औत्कृष्ट्यं तथा च विज्ञेषु वेदविदः श्रेष्ठत्वं बोधयति। धेनुषु कृष्णा बहुक्षीरा श्रेष्ठा इत्यपि बोधयति। तथा च **अश्नुते मार्गान् इति अश्वः**[२३]इति व्युत्पत्यनुसारं अश्वस्य धावत्सु निर्धारणं अवबोधयति अस्मान्।

**॥ साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः॥**

प्रतिशब्दं परित्यज्य सम्माननपूजाद्यर्थेषु साधुः एवं निपुणशब्दयोः प्रयोगे सप्तमी विभक्तिः जायतेति सामान्यर्थः सूत्रस्य। सत्यानन्दवेदवागीशाचार्याणां मते तु उदहरणं यथा –

**साधुः पितरि** प्रद्योतः **साधुर्मातरि** माधवः।
**निपुणो मातरि** व्यासो **निपुणः पितरि** क्रतुः॥[२४]

---

[२१] *अष्टाध्यायीप्रयोगदीपिका – 2.3.40*

[२२] *अष्टाध्यायीप्रयोगदीपिका – 2.3.41*

[२३] *निरुक्तम्*

[२४] *अष्टाध्यायीप्रयोगदीपिका – 2.3.43*

अत्र आचार्यैः साधु एवं निपुणः इति शब्दयोः प्रयोगे सप्तमीविभक्तिः लौकिकोदाहरणप्रयोगपूर्वकं प्रदर्शिता। एतदेव आचार्याणां वैशिष्ट्यम्। प्रतिशब्दस्य योगे द्वितीया भवति अतः सूत्रे अप्रतेः इति पदम् उपात्तम्। प्रत्युदाहरणं यथा –**साधुर्गुरुम्प्रति क्षेशः साधुः स मातरं प्रति।** अत्र प्रति शब्दस्य योगे द्वितीया भवति इत्यपि निरूपितम्।

**॥ प्रसितोत्सुकाभ्यां तृतीया च॥**

प्रसिततोत्सुकशब्दयोः योगे तृतीया सप्तमी च भवतः इति सामान्यार्थः। ग्रन्थकारः उदाहरति यथा –

**केशैः प्रसित** आनन्दः पाठे शैथिल्यमाचरेत्।
**केशेषु प्रसितो** भीमः प्रमादं पठनेऽकरोत्॥
**श्रृङ्गारे ह्युत्सुका** राधा शिथिलाऽध्ययने भवेत्।
**श्रृङ्गरेणोत्सुका** रामा दत्तचित्ता न शिक्षणे॥

उदाहरणस्याशयः यत् यदि कश्चन बालकः अनन्दः केशैः प्रसितः अर्थात् आसक्तः चेत् सः पठने शैथिल्यम् आचरिष्यति। तथैव केशेषु प्रसितः भीमः पठने प्रमादमकरोत्। अत्र तृतीया एवं सप्तमी इत्यनयोः विभक्त्योः प्रयोगः प्रदर्श्य छात्राणां पठनावस्थायाम् आसक्तिस्थानमपि ग्रन्थकारेण प्रसितशब्दयोगेन प्रदर्शितम्। अग्रे उत्सकशब्दयोगेन तथैव उदाहृतम्।

**॥ नक्षत्रे च लुपि॥**

नक्षत्रवाचकेभ्यः शब्देभ्यः तृतीया सप्तमी च स्यात्। उदाहरणं यथा –

**पुष्ये** पायसमश्नीयात् **पुष्येणा**पूपमप्यथो।
मोदान् **मघाभि**रश्निया**न्मघासु** च गुडौदनम्॥[२५]

अत्र नक्षत्रवाचकशब्देषु तृतीया तथा च सप्तमीविभक्तिः ग्रन्थकारेण श्लोकेनैकेन प्रदर्शिता। तथा च कस्मिन् नक्षत्रे किं भोजनं कर्तव्यं येन च अस्मभ्यं स्वास्थ्यलाभः भवेत् इत्यपि पर्यालोड्य ग्रन्थकारेण आयुर्वेदानुसारं अस्मभ्यं संज्ञापितम्। तद्यथा – पुष्यनक्षत्रे प्राप्ते यदि पायसम् अत्ति चेत् तस्य कृते स्वास्थ्यलाभः जायते, तथा च तस्मिन्नेव नक्षत्रे अपूपस्य भक्षणमपि कर्तव्यम् इत्यपि ग्रन्थकारः बोधयति। तथैव मघानक्षत्रे गुडौदनम् भोक्तव्यम्। अतः श्लोकेनानेन आयुर्वेदस्य ज्ञानम्, ज्योतिषशास्त्रस्य ज्ञानम्, तथा च स्वास्थ्यलाभस्तु अस्त्यैव।

**॥ सप्तमीपञ्चम्यौ कारकमध्ये॥**

सिद्धान्तकौमुदी –**शक्तिद्वयमध्ये यौ कालाध्वनौ ताभ्यामेते स्तः।**[२६]

---

[२५] *अष्टाध्यायीप्रयोगदीपिका – 2.3.45*

[२६] *वैय्याकरणसिद्धान्तकौमुदी – 2.3.7*

अत्र शक्तिशब्देन कर्तृत्वकर्मत्वादीनां ग्रहणम्। कथनस्य भावः यत् यत्र कालवचकः तथा च मार्गवाचकः शब्दः भवति तत्र पञ्चमीविभक्तिः तथा च सप्तमीविभक्तिः भवतः। ग्रन्थकारः उदाहरति यथा –

अद्य भुक्त्वा महादेवो **द्व्यहे** भोक्ता सुभोजनम्।
श्वस्तु भुक्त्वा यशोवर्मा **द्व्यहाद्** भोक्ता पयोऽशनम्॥
इहस्थोऽयं धनुर्धारी **क्रोशे** लक्ष्यं हि विध्यति।
इहस्थोऽयं धनुर्धारी **क्रोशाल्ल**क्ष्यं हि विध्यति॥[२७]

अत्र प्रथमे उदाहरणे ग्रन्थकारेण **कालवाचकयोः शब्दयोः योगे पञ्चमीविभक्तिः तथा च सप्तमीविभक्तिः** प्रदर्शिता। तथा च **मार्गवाचकात् क्रोशशब्दात् तथैव प्रदर्शितम्।**

**॥ "अधिरीश्वरे एवं यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी"इत्यनयोः सूत्रयोः समीक्षा॥**

अत्र अधिरीश्वरे इत्यस्मिन् सूत्रे ईश्वर शब्दात् स्वस्वामिभावसम्बन्धः सम्यक् ज्ञेयः भवति। सूत्रस्यार्थस्तु यत्र स्वस्वामिभावसम्बन्धः भवति तत्र अधि शब्दस्य कर्मप्रवचनीयसंज्ञा भवति। स्वस्वामिभावस्तु यथा –स्वं नाम वस्तु, तस्य वस्तुनः स्वामी ईश्वरः। ग्रन्थकारः अत्र उदाहरति यत्–

**अधिरघौ** त ऐक्ष्वाका **अधिरामे** च कौसलाः।
**कोसलेष्वधि** रामोऽभूदै**क्ष्वाकेष्वधि** भो रघुः॥[२८]

अत्र श्लोकेऽस्मिन् अधिशब्देन रघोः रामस्य च ईक्ष्वाकुवंशस्य आधिपत्यं तथा च कोसलदेशस्य स्वस्वामिभावसम्बन्धेन आधिपत्यं प्रदर्शितम्। ग्रन्थकारस्य वैशिष्ट्यमस्ति यत् एते एतादृशानि उदाहरणानि प्रतिपाद्य नः ऐतिह्यमपि अस्मान् बोधयन्ति। तथा च कथं व्याकरणनियमानां लौककक्षेत्रेषु उपयोगः करणीयः तदपि बोधयन्ति।

वस्तुतः अत्र कर्मप्रवचनीयसंज्ञा प्रोक्ता चेत् कथं सप्तिमीविभक्तिः प्राप्ता ? इति जिज्ञासायां सत्यां अग्रिमं सूत्रं प्रवर्तते –**यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी।**अस्य सूत्रस्यार्थः तु यस्य सामर्थ्यं भवति तत्र कर्मप्रवचनीययोगे सप्तमी जायते। अतः पूर्वेऽस्मिन्नुदाहरणे अधिशब्दयोगे ईश्वरवचने च सप्तमी प्रदर्शिता।

**॥ संशोधनस्य लाभाः उपसंहारश्च॥**

यदा काशिकायाः आरभ्य कौमुद्यादिग्रन्थेषु अधिकरणकारकस्य अध्ययनमस्माभिः क्रियते, तदा तेषां प्रसिद्धान्युदाहरणानि सम्यक्तया वयं स्मरामः परन्तु तेषाम् उदाहरणानां प्रयोगः कथं करणीयः तस्य

[२७] *अष्टाध्यायीप्रयोगदीपिका – 2.3.7*

[२८] *अष्टाध्यायीप्रयोगदीपिका – 1.4.96*

संज्ञानं पं.सत्यानन्दवेदवागीशाचार्यविरचितया अष्टाध्यायीप्रयोगदीपिकया एव संजायते इति निश्चप्रचम्।
संशोधनस्य लाभाः –

- संशोधनेनानेन आर्षपरम्परायाः संज्ञानं जायते।
- कौमुदीग्रन्थेषु प्रतिपादितस्य **अधिकरणकारकस्य तथा च अस्य ग्रन्थस्य अधिकरणकारकस्य वेत्यासः** संज्ञायते।
- अनेन शोधपत्रेण अन्तिमस्य **अधिकरणकारकस्य प्रयोगवैशिष्ट्यं** ज्ञायते।
- **वेदमन्त्रेषु अधिकरणकारकस्य निदर्शनम्** पत्रमिदं द्योतयति।
- आयुर्वेदादिग्रन्थेषु तथा च उपनिषदि **अधिकरणकारकस्य यथासूत्रम्प्रयोगः** शोधपत्रमिदमस्मान् निबोधयति।
- निर्धारणे, आयक्तकुशलादीनां **शब्दानां योगे अधिकरणकारकस्य प्रयोगवैशिष्ट्यं** शोधपत्रम् अस्मान् बोधयति।
- अधिकरणकारकस्य श्लोकेषु प्रयोगः अपि शोधपत्रम् अस्मान् ज्ञापयति।

## ॥ सन्दर्भग्रन्थाः ॥


१. ऋग्वेदः – ऋग्वेदभाष्यम्- वैदिक पुस्तकालय, अजमेर, 2021
२. UGC NET/J.R.F/SET Sanskrit. N.p., Upkar Prakashan.
३. वाक्यपदीयम्–भर्तृहरी, वाराणसी संस्कृत विश्वविद्यालयः, 1974
४. वैय्याकरणसिद्धान्तकौमुदी- भट्टोजदीक्षितप्रणीता, श्रीधरमुखोल्लासिनी हिन्दीव्याख्या समन्विता, चौखम्बा सुरभारती प्रकाशन,वाराणसी, 2016
५. श्वेताश्वतरोपनिषत् – श्री राघवकृपा भाष्यम्, श्री तुलसीपीठ सेवा न्यास – 2000
६. अष्टाध्यायीप्रयोगदीपिका -पं. सत्यानन्दवेदवागीशप्रणीता, इंडियन मैप सर्विसपुष्करक्षेत्र जोधपुर- राजस्थान - .सं.वि2062
७. अष्टाध्यायी- पाणिनिप्रणीता, चौखम्बा सुरभारती प्रकाशन, वाराणसी, 2014
८. निरुक्तम् – यास्कप्रणीतम्, निघण्टु सहीतम्, मेहरचन्द लक्ष्मणदास पब्लीकेशन, 2016
९. काशिकावृत्तिः – वामनजयादित्यप्रणीता, तारा पब्लीकेशन्स, वाराणसी -1967
१०. लघुसिद्धान्तकौमुदी–वरदराजाचार्यप्रणीता, भारतीय विद्यासंस्थान वाराणसी – 2017
११. वाचस्पत्यं – मदनमोहन झा, GOOGLE PLAYSTORE APP
१२. शब्दकल्पद्रुमः - मदनमोहन झा, GOOGLE PLAYSTORE APP
१३. https://ashtadhyayi.com/
१४. वाक्यपदीयम् –भर्तृहरीप्रणितम्, वृत्ति टीकासहितम्, डेक्कन कोलेज पोस्टग्रेज्युएट एंड रीसर्च इन्स्टीट्युट,1995
१५. काशिकावृत्तिः–वामनजयादित्यप्रणीता, चौखम्बा ओरएनटेलिया दिल्ही – 2010


~~~~~~~~~~~
~~~~~~~~~~~

वर्षम्-०४ अङ्कः-०४ शोधज्योतिः
जनवरी-दिसम्बर, २०२२ ISSN-2350-0700

# ब्रह्मवैवर्तपुराणानुसारम् – ऋतुचर्या स्वास्थ्यलाभाः च

शियाणी जयेशः गोरधनभाई[१]

**शोधसारांशः**

अस्मिन् शोधपत्रे मया विविधशास्त्रानुगुणं शरीरस्य महत्तां प्रतिपाद्य ब्रह्मवैवर्तपुराणानुसारं वर्णितायाः ऋतुचर्यायाः विमर्शं प्रतिपाद्य स्वास्थ्यलाभाश्च प्रकटिताः। ऋतुचर्यया शरीरस्य संरक्षणं कथं भवेत् इत्यपि निरूपितम्।

**प्रस्तावना -**

अस्माकं भारतीयसंस्कृतसाहित्यशास्त्रेषु चतुर्विधपुरुषार्थानां धर्मार्थकाममोक्षाणां सिद्धये आद्यं साधनं शरीरमेवास्ति।[२] यथा कस्यचिदपि कार्यस्य सिद्धिः कारणेनैव भवति तथैव कस्यचिदपि साध्यस्य सिद्धिः साधनेनैव भवति। तथैवात्रापि पुरुषार्थचतुष्टयरूपसाध्यस्य सिद्धये साधनत्वेन शरीरमात्रस्य विवक्षाऽस्ति। पुनश्चात्र त्रिषु कारणेषु[३] शरीरमिदं समवायिकारणत्वेन परिगण्यते। यतो हि पुरुषार्थचतुष्टयसिद्धये शरीरस्यानिवार्यत्वमस्ति। अथ च धर्मार्थकाममोक्षेषु आदिकीर्तनं धर्मस्यास्ति। स च धर्मः इह लोके नरदेहत्वेनैव सिद्ध्यति। तस्मादेतस्य शरीरस्य संरक्षणं येन केन प्रकारेण कार्यम्।[४] अस्माकं शास्त्रेषु शरीरसंरक्षणोपायाः बहवः सन्ति।[५] तेषूपायेषु ब्रह्मवैवर्तपुराणानुसारम् ऋतुचर्याऽपि स्वीक्रियते। सा ऋतुचर्या ब्रह्मवैवर्तपुराणस्य ब्रह्मखण्डे षोडशेऽध्याये वैद्यकसंहितायां विवर्णिताऽस्ति।

**षड्टतवः –**

---

*[१] शोधच्छात्रः, श्रीसोमनाथसंस्कृतविश्वविद्यालयः, वेरावलम्*

*[२] शरीरमाद्यं खलु धर्मसाधनम् । कुमारसम्भवम् – ०५/३३ पण्डितशेषराजशर्मा रेग्मी, चोखम्बा संस्कृत संस्थान, वाराणसी, २०११ पृ.१४९*

*[३] कारणं त्रिविधम् – समवायि-असमवायि-निमित्तभेदात् । तर्कसंग्रहः – पं. रामचन्द्रझा, पं. राजनारायणशास्त्री, चौखम्बा संस्कृत सीरिज आफिस, वारणसी,२००८ पृ.२८*

*[४] आत्मानं सततं रक्षेत् .. । महाभारतम् – आदिपर्व – १७२/३५*

*[५] त्यागः प्रज्ञापराधानामिन्द्रियोपशमः स्मृतिः। देशकालात्मविज्ञानं सद्वृत्तस्यानुवर्तनम्॥ श्लोक - ३२*
*अथर्वविहिता शान्तिः प्रतिकूलग्रहार्चनम्। भूताद्यस्पर्शनोपायो निर्दिष्टश्च पृथक् पृथक्॥ श्लोक - ३३*
*अष्टाङ्गहृदयम् – सूत्रस्थानम् – रोगानुत्पादनीयाध्यायः – ३२,३३, डॉ.ब्रह्मानन्द त्रिपाठी, चौखम्बा संस्कृत प्रतिष्ठानम्, दिल्ली, २०१९ पृ.६१*

**"ऋतुर्नाम इयर्त्ति गच्छति अशोक-पुष्पविकासान्-साधारणलिङ्गमिति वसन्तादिकालविशेषः"**[६] वा **"द्वौ द्वौ मार्गादिमासौ स्यादृतुः"**[७] एवमत्र आहत्य वर्षे षड्तवः भवन्ति। एतेषु ऋतुषु मनुष्याणां कृते नैकेभ्यः स्वास्थ्यलाभेभ्यः पथ्यापथ्यविधिः प्रदर्शितोऽस्ति। ऋतूनामेतेषां निर्धारणं मासराशिस्वरूपाख्यैः लक्षणैः कृतमाचार्यवाग्भट्टेनेति।[८] तदत्र यथाक्रमं निरूप्यते –

| क्रमः | ऋतुनाम | मासलक्षणम् | राशिलक्षणम् |
|---|---|---|---|
| ०१ | हेमन्तः | मार्गशीर्ष-पौषमासौ | धनु-मकरराशी |
| ०२ | शिशिरः | माघ-फाल्गुनमासौ | कुम्भ-मीनराशी |
| ०३ | वसन्तः | चौत्र-वैशाखमासौ | मेष-वृषभराशी |
| ०४ | ग्रीष्मः | ज्येष्ठ-आषाढमासौ | मिथुन-कर्कराशी |
| ०५ | वर्षा | श्रावण-भाद्रपदमासौ | सिंह-कन्याराशी |
| ०६ | शरद् | आश्विन-कार्तिकमासौ | तुला-वृश्चिकराशी |

**ब्रह्मवैवर्तपुराणानुसारम्-ऋतुचर्याविमर्शः –**

१) **वसन्त-ऋतुचर्या –** वसन्ततौं दक्षिणो वायुः प्रवहति, सूर्यरश्मयः रक्ताः भवन्ति, वृक्षेषु नूतना त्वक्, नूतानानि कुसुमानि, नूतानानि पत्राणि च प्रादुर्भवन्ति, दिशश्च निर्मलाः भवन्ति, पलाशादिभिश्च वनपङ्क्यः सुशोभिताः भवन्ति, कोकिलालिपक्षिणां मनोहरः शब्दश्च दिक्षु व्याप्नोति। कालेऽस्मिन् मनुष्येण पथ्यमिदं सेवनीयम् –

**वसन्ते भ्रमणं वह्निसेवां स्वल्पां करोति यः।**
**बालां च सेवते काले जरा तं नोपगच्छति॥**[९]

भ्रमणन्नाम विहारकर्म। अस्मिन्नृतौ स्वरूपलक्षणत्वात् विहारः सेवनीयो भवति। यत्रोत्तमानि उद्यानानि, शुद्धं वातावरणम्, सूर्यस्य ताम्रकिरणानि च भवेयुः तत्र मनुष्यः अटनं कुर्यात्। वह्निसेवानाम निर्दिष्टायुर्वेदशास्त्रानुगुणं विभिन्नानामौषधीनां धूम्रपानं कार्यम्। परन्तु तच्च धूम्रपानं मात्रायां तथा च स्वल्पमेव ग्राह्यम्। अथ चात्र नवोढायाः पत्न्याः सेवनं कीर्तितम्। तन्नाम स्वप्रियार्पितानां रसानां सेवनमिति।

---

[६] *वाचस्पत्यम् – ऋवर्णे ऋतुशब्दः, श्रीतारानाथ-तर्कवाचस्पति-भट्टाचार्य-सङ्कलितम्-बृहत्-संस्कृताभिधानकोशः ।*

[७] *नामलिङ्गानुशासनम् (अमरकोशः) – ०१/०४/१३, श्रीगुरुप्रसादशास्त्री, श्रीरघुनन्दनप्रसादशास्त्री, चौखम्बा सुरभारती प्रकाशनम्, वाराणसी, २०१२ – पृ - ४६*

[८] *मासाराशिस्वरूपाख्यमृतोयल्लक्षणत्रयम् । श्रीमद्वाग्भटविरचितः – अष्टाङ्गसंग्रहः – सूत्रस्थानम् – ०५/३३, कविराज अत्रिदेव गुप्तः, चौखम्बा कृष्णदास अकादमी, वारणसी, २०१९, पृ. ४४*

[९] *महर्षिवेदव्यासविरचितम् – ब्रह्मवैवर्तपुराणम् – पूर्वभागः - ब्रह्मखण्डः – १६/३७, तारणीश झा, बाबूराम उपाध्यायः, हिन्दी साहित्य सम्मेलन प्रयाग,२००१, पृ. ९५*

अत्र प्रिया पूर्वं स्वास्यसुरभितं पक्वाम्ररसं पीत्वा स्नेहेन प्रियं प्रत्यर्पयति, तेन सह मध्याह्नचर्यां च सेवते। मध्याह्नचर्यानाम वसन्तर्तोः मध्याह्नकालस्य कर्तव्यानि कर्माणीति। यथोक्तं श्रीमद्वाग्भटाचार्येणाष्टाङ्गसंग्रहे –

**अदृष्टनष्टसूर्येषु मणिकुट्टिमकान्तिषु।**
**परपुष्टविघुष्टेषु कामकर्मान्तभूमिषु॥**
**विचित्रपुष्पवृक्षेषु काननेषु सुगन्धिषु।**
**गोष्ठीकथाभिश्चित्राभिर्मध्याह्नं गमयेत्सुखी॥**[१०]

पद्योद्दिष्टानां कर्मणामत्र ब्रह्मवैवर्तपुराणस्य ऋतुचर्यायां **"बालां च सेवते काले"** इति संक्षिप्तं पदं प्रयुज्य समासो विधत्तः।

**२) ग्रीष्म-ऋतुचर्या –**

ग्रीष्मर्तौ अतसीपुष्पवनाग्निवत् भास्करः उष्णं जनयति, दिशो भूमिश्च ज्वलन्ति, दक्षिण-पश्चिमो वायुः सुखप्रदः भवति, उष्णपवनातपसंस्वेदैः मनुष्याः ज्वरादिवत् तपन्ति, उष्णसूर्यकिरणैः नदीनां जलं न्यूनं जायते, पादपाश्च शुष्काः भवन्ति। एतादृशस्य कालस्य कारणं तदस्ति यदस्मिन्नृतौ आदित्यः जगतः तेजः विशेषरूपेण आदत्ते। तस्मात् समयेऽस्मिन् मनुष्यः पथ्यमिदं सेवेत –

**प्रातःशीतोदकस्नायी सेवते चन्दनद्रवम्।**
**नोपयाति जरा तं च निदाघेऽनिलसेवकम्॥**[११]

अत्र महर्षिवेदव्यासेन सामासिकभाषया त्रिविधं पथ्यं प्रदत्तम्। तत्र प्रथमाय पथ्याय पदं प्रयुक्तं **"प्रातःशीतोदकस्नायी"** इति। अस्मिन्नृतौ शीतलस्य जलस्य सेवनं कार्यम्। तच्च जलं नदनदीवापीनां स्यात्। अथ च यत्र यन्त्रेण पततिजलानां धारा भवति तादृशानां धारागृहाणां सेवनं सेवनीयमिति। **"चन्दनद्रवम्"** इति पदेन द्वितीयं पथ्यं कथितम्। अनेन उष्णातपस्य शमनाय देहे चन्दनस्य लेपः लिप्यते अथवा अन्यत्र[१२] चन्दनलेपितायाः प्रियायाः कान्तायाः उपभोगो निगूहितोऽस्ति। तृतीयं च पथ्यम् **"अनिलसेवकम्"** पदेनानेन शब्दितमिति। एनेन पदेन वायोः सेवनं कथ्यते परं तद्वायुः शीतलः स्यात्। अर्थात् यत्र

---

[१०] *श्रीमद्वाग्भटविरचितः – अष्टाङ्गसंग्रहः – सूत्रस्थानम् – ०३/२४,२५ कविराज अत्रिदेव गुप्तः, चौखम्बा कृष्णदास अकादमी, वारणसी, २०१९, पृ. ४५*

[११] *महर्षिवेदव्यासविरचितम् – ब्रह्मवैवर्तपुराणम् – पूर्वभागः - ब्रह्मखण्डः – १६/३८, तारणीश झा, बाबूराम उपाध्यायः, हिन्दी साहित्य सम्मेलन प्रयाग,२००१, पृ. ९५*

[१२] *कान्ताश्चचन्दनरूषिताः । श्रीमद्वाग्भटविरचितः – अष्टाङ्गसंग्रहः – सूत्रस्थानम् – ०४/३६ कविराज अत्रिदेव गुप्तः, चौखम्बा कृष्णदास अकादमी, वारणसी, २०१९, पृ. ४२*

नदनद्यादीनां, हिमानां, काननानां वा तालवृक्षैः निर्मितव्यजनस्य वायुः, स सेव्यः। एवमत्र ग्रीष्मर्तोः पथ्यसेवने **"शीत"** इति यत् पदं प्रयुक्तं तत्पदं सर्वत्र विशेषणत्वं याति। यतो हि पथ्यत्रये शीतलं जलम्, शीतलं चन्दनम्, शीतलो वायुश्च गृहीतः। तेनात्र स्पष्टं यद्ग्रीष्मर्तौ निर्दिष्टशीततत्त्वानां सेवनं श्रेयस्करमिति।

**३) वर्षा-ऋतुचर्या –**

प्रावृषि सारस्वद्वायुः प्रवहति येन सर्वेषां सस्यानामुद्गमः भवति, आकाशः नीलघनैः आच्छादितः भवति, नदनद्यादिषु सर्वत्र वर्षाजलेन तटोल्लङ्घनं दृश्यते, घनाम्बुभिः नद्यः समुद्रवत् दीर्घा, गम्भीरा च भवन्ति, पृथ्वीतलं जलाच्छादनत्वं याति, मेघमयूरदर्दुराणां मधुरं शब्दं दिक्षु व्याप्नोति, विद्युदिन्द्रधनुर्भ्यां दिशः द्योतन्ते, वसुन्धरां परितः हरिततृणानि, शिलीन्ध्रकुसुमानि च शोभन्ते। अस्मिन्ननेहसि व्यासः पथ्यापथ्यमिदं ब्रूते –

**प्रावृष्युष्णोदकस्नायी घनतोयं न सेवते।**
**समये च समाहारी जरा तं नोपगच्छति॥**[13]

पद्यादौ प्रोक्तम् **"उष्णोदकस्नायी"** इति। अर्थात् उष्णोदकस्य सेवनम्, उष्णोदकेन स्नानं वा। अत्र उष्णोदकेन स्नानं तु स्पष्टमेव परं तेन सह उष्णद्रव्यानां पथ्यं प्रदर्शितमस्ति। तद्यथा –

**दिव्यं क्वथितकूपोत्थं चौण्ड्यं सारसमेव च।**
**वृष्टिवाताकुले त्वह्नि भोजनं क्लेदवातजित्॥**
**परिशुष्कं लघु स्निग्धमुष्णाम्ललवणं भजेत्।**
**प्रायोन्नपानं सक्षोद्रं संस्कृतं च घनोदये॥**
**असरीसृपभूबाष्पशीतमारुतशीकरम्।**
**साग्नियानं च भवनं निर्देशमशकोन्दुरम्॥**[14]

अस्यार्थस्तत्र टीकायां स्पष्टोऽस्ति। ततश्च द्वितीयं पथ्यं **"समये च समाहारी"** इत्यनेन पदेन व्याहरति महर्षिव्यासः। अत्र समाहारी नाम मिताहारी इत्यस्ति। कारणं दिष्टेऽस्मिन् जठराग्निः मन्दत्वं याति तस्मात् शास्त्रे प्रोक्तानां द्रव्यानां सेवनं स्वल्पमात्रायामेव भवेदिति तथा चात्र **"घनतोयं न सेवते"** इत्यनेन वर्षा-ऋतोः यज्जलं विद्यते तस्य साक्षात् पानस्य निषेधः कृतः। अस्मिन्नृतौ यस्य कस्यापि सरित्समुद्रादिजलानामुपयोगः क्रियते तर्हि तदुष्णं कृत्वैव सेव्यमिति भावः।

---

*[13] महर्षिवेदव्यासविरचितम् – ब्रह्मवैवर्तपुराणम् – पूर्वभागः - ब्रह्मखण्डः – १६/३९, तारणीश झा, बाबूराम उपाध्यायः, हिन्दी साहित्य सम्मेलन प्रयाग, २००१, पृ.९५*

*[14] श्रीमद्वाग्भटविरचितः – अष्टाङ्गसंग्रहः – सूत्रस्थानम् – ०४/४५,४६,४७ कविराज अत्रिदेव गुप्तः, चौखम्बा कृष्णदास अकादमी, वारणसी, २०१९, पृ.४३*

**४) शरत्-ऋतुचर्या –**

शरदृतौ आकाशः शुक्लाभ्रैः व्याप्नोति, भूमिः पङ्कान्विता भवति, प्रफुल्लितकाश-सप्ताह्व-कुमदशालिभिः पृथ्वी शोभते, मेघपङ्क्तिं विदार्य सूर्यो तिग्मकिरणानि विस्तरति, दिशः पिङ्गलाः, अतिनिर्मलाः क्रोञ्चपक्षिसमन्विताश्च भवन्ति, सरोवरस्य जले पद्मानां समूहे मीनहंसयोः सघटनैः तरङ्गाः समुद्भवन्ति। अस्मिन्नृतौ पथ्यापथ्यमिदं श्रेयसे कल्प्यते –

**शरद्रौद्रं न गृह्णाति भ्रमणं तत्र वर्जयेत्।**
**प्रातःस्नायी च हेमन्ते काले वह्निं च सेवते॥**[१५]

अत्र पथ्यत्वेन **"समाहारी"** इति यत्पदं तत्तु पूर्वं स्पष्टमेव। **अपथ्यं नाम असेवनीयम्-अनाचरणीयमिति**[१६]। अत्रापथ्यत्वेन भ्रमणमिति पदं विद्यते तस्याऽपि वसन्ततौं चर्चा विहिताऽस्ति। परं तत्र भ्रमणं पथ्यायोदीरितः अपथ्याय चात्र संगृह्य विहारकर्मणि वर्ज्यमिति। **"रौद्रम्"** इति पदं यदस्ति तेन धूपसेवनस्य निषेधः कृतः। एवं पद्योक्तपथ्यानि स्पष्टानि भवेयुः परन्तु समाहारी पदेन अस्मिन्नृतौ यानि सेव्यानि द्रव्याणि सन्ति तेषामेव काले मात्रायां च सेवनं करणीयमिति। तानि द्रव्याणि यथा सन्ति –

**शस्तं तिक्तहविःपानं विरेकोऽस्रस्रुतिः सदा।**
**शीतं लघ्वन्नपानं च कषायस्वादुतिक्तकम्॥**
**शालिषष्टिकगोधूमयवमुद्गसितामधु।**
**पटोलामलकं द्राक्षा जाङ्गलं क्षुद्वतां भृशम्॥**[१७]

इत्थमत्र शरदि समासतो विमृष्टं पदत्रयमिति।

**५) हेमन्त-ऋतुचर्या –**

हेमन्ततौं दिशः सूर्यवाय्वोः धूमेन मलिनाः तुषारेण चाक्रान्तमण्डलाः भवन्ति, शैत्यात् उत्तरदिशः वायुः रोमाञ्चं जनयति, अस्मिन् काले प्रियुङ्गु-लोध्र-पुन्नाग-लवल्यादीनां कुसुमानि विकसन्ति, गजाजमहिषवाजिवायससूकराणां मदः वर्धते, नदीभ्यः वाष्पं समुद्भवति तथा च कूपापश्च सोष्माणः भवन्ति। दिष्टेऽस्मिन् पथ्यमिदं सेव्यमित्यादिशद्भगवान् वेदव्यासः –

---

[१५] *महर्षिवेदव्यासविरचितम् – ब्रह्मवैवर्तपुराणम् – पूर्वभागः - ब्रह्मखण्डः – १६/३८, तारणीश झा, बाबूराम उपाध्यायः, हिन्दी साहित्य सम्मेलन प्रयाग, २००१, पृ. ९५*

[१६] *वाचस्पत्यम् – अपथ्यशब्दे, श्रीतारानाथ-तर्कवाचस्पति-भट्टाचार्य-सङ्कलितम्-बृहत्-संस्कृताभिधानकोशः ।*

[१७] *श्रीमद्वाग्भटविरचितः – अष्टाङ्गसंग्रहः – सूत्रस्थानम् – ०४/५४, ५५, कविराज अत्रिदेव गुप्तः, चौखम्बा कृष्णदास अकादमी, वारणसी, २०१९, पृ. ४४*

**प्रातःस्नायी च हेमन्ते काले वह्निं च सेवते।**
**भुङ्क्ते नवान्नमुष्णं च जरा तं नोपगच्छति॥**[१८]

अत्र प्रातः स्नानम्, काले नाम प्राप्ते समये यदा योग्यः कालः भवति तदा यथायुर्वेदोक्तशास्त्रविधिमुपसृत्य वह्निकर्म निगदितं तद्वदत्रापि वह्निं सेवेत। अथ च कालेऽस्मिन् सर्वदा नवान्नमुष्णमेव सेव्यमिति। अत्र **"नवान्नमुष्णमि**ति पदेन अस्मिन् ऋतौ यानि सस्यानि जायन्ते यथा **"माषेक्षुक्षीरादि.."**[१९] तेषां पद्योक्तद्रव्याणां सेवनं निर्दिष्टमस्ति तथा च **"नवान्नमुष्णं च"** इति पदे यदुष्णं चेति पदं स्वीकृत्य उष्णवस्त्रादीनामपि सेवनं प्रकटीतमिति। अत्रापि उष्णेति पदं विशेषणत्वेन स्वीक्रियते चेन्न दोषाय। यतो हि शिशिरहेमन्तर्त्वोः पथ्यापथ्यचर्या समाना एव दृश्यते । यथा हेमन्ते तथैव शिशिरेऽपि पथ्यविधिः। तद्यथा –

**शिशिरेंऽशुकवह्निं च कवोष्णान्नं च सेवते।**
**यः कवोष्णोदकस्नायी जरा तं नोपगच्छति॥**[२०]

इत्यत्रापि कवोष्णेन जलेन स्नानम्, उष्णवस्त्रधारणम्, काले वह्निसेवनमिति सर्वं समानत्वं गच्छति। तस्मादत्र शिशिरहेमन्तविधिः समाना एव सेवनीया। ऋतुचर्येमां महर्षिवेदव्यासः पुराणेऽस्मिन् संक्षेपेण प्रत्यपादि। परमायुर्वेदसंहितासु अस्याः विस्तरेणव्याख्यानं दृश्यत इति।

**ऋतुचर्यया स्वास्थ्यलाभः –**

ब्रह्मवैवर्तपुराणस्य वैद्यकसंहितायां समासेन या ऋतुचर्या निरूपिता तस्याः यदि कश्चित् मनुष्यः सेवनं करोति तर्हि तस्य शरीरोत्पन्नानां रोगाणां नाशः, आगन्तूणां रोगाणां शमनं च जायते। दृष्टेषु ऋतुचर्यापद्येषु ध्रुवपङ्क्तिरूपेण सर्वत्र महर्षिवेदव्यासेन एकमेव पदं प्रयुक्तं यत् **"जरा तं नोपगच्छति"** इति। अर्थात् यः जनः एतामृतुचर्यां यथाशास्त्रं सेवते सः जराग्रस्तो न भवति। यदा वृद्धत्वमाप्यते तदा शरीरे नैकेषां रोगाणामुद्भवः भवति। परं केवलं यदि उक्तायाः ऋतुचर्यायाः जीवने आचरणं क्रियते तर्हि सः मनुष्यः **स्वस्थः**[२१] भवति। ततः क्रमेण संक्षेपेणात्र ऋतूनां फलं प्रस्तौमि – **वसन्ते कफजन्यानां रोगाणां**

---

[१८] *महर्षिवेदव्यासविरचितम् – ब्रह्मवैवर्तपुराणम् – पूर्वभागः - ब्रह्मखण्डः – १६/४०, तारणीश झा, बाबूराम उपाध्यायः, हिन्दी साहित्य सम्मेलन प्रयाग, २००१, पृ. ९५*

[१९] *माषेक्षुक्षीरविकृतिवसातैलनवोदनान् । व्यायामोद्वर्तनाभ्यङ्गस्वेदधूमाञ्जनातपान्॥ श्रीमद्वाग्भटविरचितः – अष्टाङ्गसंग्रहः – सूत्रस्थानम् – ०४/१७ कविराज अत्रिदेव गुप्तः, चौखम्बा कृष्णदास अकादमी, वारणसी, २०१९, पृ. ४१*

[२०] *महर्षिवेदव्यासविरचितम् – ब्रह्मवैवर्तपुराणम् – पूर्वभागः - ब्रह्मखण्डः – १६/४१, तारणीश झा, बाबूराम उपाध्यायः, हिन्दी साहित्य सम्मेलन प्रयाग,२००१, पृ. ९५*

[२१] *समदोषः समाग्निश्च समधातुमलक्रियः । प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते॥ महर्षिसुश्रुतविरचितः सुश्रुतसंहिता – सूत्रस्थानम् – १५/४१, ऋषिराज डॉ. अम्बिकादत्तशास्त्री, चौखम्बा सुरभारती प्रकाशनम्, वाराणसी, २०१५*

**शान्तये वसन्तचर्या, ग्रीष्मे शोष-शैथिल्य-दाहादीनां शमनाय ग्रीष्मचर्या, वर्षाकाले- वायुप्रकोपशान्तये वर्षाचर्या, शरदि पित्तप्रकोपो जायते तच्छान्तये शरच्चर्या, हेमन्ते धातूनां पुष्ट्यै वायोः शान्त्यै च हेमन्तचर्या, शिशिरेऽपि हेमन्तवदेव देहोऽयं दोषैः आक्रान्तो भवति तस्मादत्र हेमन्तविधिरेव गृह्यते।** एवञ्चेयमृतुचर्या स्वास्थ्यलाभाय प्रकल्पिता महर्षिवेदव्यासेनेति भावः। यद्यस्याः विपरीतावस्था सम्भवति चेदन्ये नैके विधयः शास्त्रेषु संशोधितास्सन्तीति।

**॥ सन्दर्भग्रन्थाः ॥**


१. कुमारसम्भवम् – पण्डितशेषराजशर्मा रेग्मी, चोखम्बा संस्कृत संस्थान, वाराणसी, २०११
२. तर्कसंग्रहः – पं. रामचन्द्रझा, पं. राजनारायणशास्त्री, चौखम्बा संस्कृत सीरिज आफिस, वारणसी, २००८
३. महर्षिवेदव्यासविरचितं - महाभारतम् – गीताप्रेसगोरखपुरम्।
४. अष्टाङ्गहृदयम् –डॉ. ब्रह्मानन्द त्रिपाठी, चौखम्बा संस्कृत प्रतिष्ठानम्, दिल्ली, २०१९
५. वाचस्पत्यम् – श्रीतारानाथ-तर्कवाचस्पति-भट्टाचार्य-सङ्कलितम्-बृहत्-संस्कृताभिधानकोशः।
६. नामलिङ्गानुशासनम् (अमरकोशः) – श्रीगुरुप्रसादशास्त्री, श्रीरघुनन्दनप्रसादशास्त्री, चौखम्बा सुरभारती प्रकाशनम्, वाराणसी, २०१२
७. श्रीमद्वाग्भटविरचितः – अष्टाङ्गसंग्रहः, कविराज अत्रिदेव गुप्तः, चौखम्बा कृष्णदास अकादमी, वारणसी, २०१९,
८. महर्षिवेदव्यासविरचितम् – ब्रह्मवैवर्तपुराणम् – पूर्वभागः - ब्रह्मखण्डः तारणीश झा, बाबूराम उपाध्यायः, हिन्दी साहित्य सम्मेलन प्रयाग,२००१
९. महर्षिसुश्रुतविरचितः सुश्रुतसंहिता, ऋषिराज डॉ. अम्बिकादत्तशास्त्री, चौखम्बा सुरभारती प्रकाशनम्, वाराणसी, २०१५


~~~~~~~~~~~
~~~~~~~~~~~

# पाणिनीयसूत्राणां प्रत्याख्यानप्रसङ्गतो भाष्यकर्त्तुरभिप्रायविमर्शः

लोकेशकुमारः[१]

**उपोद्घातः :-**

संस्कृतवाङ्मयमनादिकालतोऽविच्छिन्नं नित्यं नवनवायमानमतिचकास्ति साहित्यजगतां पुरः। देशेभेदे कालभेदे चापि समानमेवेदमभाष्यत पाठकलोकैर्यतः। तदिदमस्य प्राशस्त्यमेतदीयव्याकरणविज्ञानाधीनमेव। व्याकरणं च नानाविधम्, किन्त्वनेकगुणत्वादद्यत्वे पाणिनीयमेव बहुमन्यते सुरभारतीप्रणयिभिर्लोकैः। तत्र महर्षिपाणिनिप्रणीताष्टाध्यायीग्रन्थस्य अत्यन्तगूढार्थतया तदीयं हार्दं प्रकाशयितुं महामुनिना पतञ्जलिना महाभाष्यमभाष्यत। यदि नाम बहुविधवादबलमादधानं पातञ्जलं महाभाष्यं नाभविष्यत्, आचार्यपाणिनेर्मनोगताभिप्रायोऽपि न शब्दशास्त्राध्यायिभिर्यथास्वमवाभोत्स्यत इत्यैकस्वर्यं शब्दविदां सुधियाम्। अत एव वाक्यपदीयटीकाकारः पुण्यराजो भर्तृहर्युक्तस्य[२] महाभाष्यमहिम्नष्टीकाप्रसङ्गे तद्विवृण्वान आह –

**"तच्च भाष्यं न केवलं व्याकरणस्य निबन्धनं यावत्सर्वेषां न्यायबीजानां बोद्धव्यमिति। अत एव सर्वन्यायबीजहेतुत्वादेव महच्छब्देन विशिष्य महाभाष्यमित्युच्यते लोके। महाभाष्यं हि बहुविधविद्यावादबलमार्षं व्यवस्थितम्"**[३] इति

**भाष्यकारस्य प्रत्याख्यानगता व्याख्यानशैली :-**

भाष्यकर्तुर्व्याख्यानपद्धतेरनुपमं वैशिष्ट्यमिदं यथासौ यत्सूत्रं समीक्षणपरतया व्याचक्षाणो भवति, तत्र तत्सूत्रव्याख्यानस्य समस्तपक्षसिद्धौ यथाशक्ति नैजमखिलमपि प्रज्ञानवैभवमाविष्कुरुते। तस्माद्यदासौ पूर्वपक्षमास्थाय तत्पक्षं प्रबलयुक्त्या प्रतिपादयन् समास्ते, तत्राकृतमतिको वा अजागरितप्रज्ञो वा पाठकस्तदुत्तरपक्षमेव मन्वानो जातुचिद् बम्भ्रमीतीव। तत्त्वतस्तु तत्रैव भाष्यकारः तस्योपस्थापितपूर्वपक्षस्य सिद्धान्तपक्षपरतया उत्तरपक्षं ततोऽपि प्रबलतरयुक्त्या सर्वथा तद्विपरीतमेव विवृण्वानो दृश्यते।

---

*[१] शोधच्छात्रः, व्याकरणविभागः, श्रीसोमनाथसंस्कृतविश्वविद्यालयः, वेरावलम्, गुजरात, chaturlokesh@gmail.com, +91-9265423970*

*[२] वाक्यपदीयम्, २.४८२-४८३*

*[३] तत्रैव, पुण्यराजस्य प्रकाशटीका*

भाष्यकारस्यायमेव शैलीविशेषो यत्रासौ यथा सम्पश्यति, तत्र तथैव प्रकृतविषयस्य समाहितिमातिष्ठते। **''पक्षान्तरैरपि परिहारा भवन्तीति''**[४] नयेन लक्ष्यलक्षणसमीक्षणपरो मण्डनीयतत्त्वस्यापि खण्डनीयतां न सर्वथा जहात्यसौ। परस्तात्तं तदुपस्थापितसिद्धान्तं कश्चन ऊरीकरोतु न वेति विचारं मुहूर्तमपि नातनोति मानसे भाष्यकारः। अत एव प्रदीपकारः कैयट **उपसर्गादसमासेऽपि णोपदेशस्य**[५] इति सूत्रस्थं भाष्यसन्दर्भं टीकमानस्तत्राचष्टे :-

**''ननु सुबामन्त्रिते इत्यत्रोक्तम् अविशेषेणैतद्भवति पूर्वपदमुत्तरपदमिति, तेन चर्मनमन्त्रित्यत्र णत्वं न भविष्यतीति। उच्यते स्वरग्रहणप्रत्याख्यानं तदुक्तम्, न त्वेष पक्षः स्थितः''**[६] इति

इतरेणापि भाष्यसन्दर्भेण सुतरामिदं शक्यमभ्युपपत्तुं पाठकैर्यथा **''ऋऌक्''** इति प्रत्याहारसूत्रव्याख्यानप्रसङ्गे ऋकारोपदेशं व्याचक्षाणो भाष्यकारः **''चतुष्टयी शब्दानां प्रवृत्तिः''**[७] इति व्युदीर्य यदृच्छाशब्दसत्तामुररीकुर्वाणोऽपि ऌकारस्य प्रत्याख्यानवेलायां **''त्रयी च शब्दानां प्रवृत्तिः, न सन्ति यदृच्छाशब्दाः''**[८] इति पक्षं पुरस्कृत्य यदृच्छाशब्दसत्तामेव उन्मूलयति।

दशायामस्यां भाष्यकारस्य नैजं सिद्धान्तगतं दुर्ग्राहमेव समास्ते बहुधा सुधियामपि। यथा ह्यत्र उक्तसिद्धान्तद्वयमुररीकृत्यापि परस्परविरोधित्वात्तदुभयं स निरस्ती चकार। भाष्यकारस्य विचित्रेयं शैली समस्तेऽपि भाष्यसन्दर्भे बहुश आलक्षयितुं शक्यास्माभिः।

तथैव क्वचन स्थलेषु भाष्यकर्तुः प्रत्याख्यानशैली इतरेतरतामाश्रित्यापि प्रवर्तमाना दृश्यते, यथासौ पूर्वसूत्रमाश्रित्य इतरत्सूत्रम्, इतरच्चाश्रित्य पूर्वसूत्रं प्रत्याचष्टे। तस्मादेव भाष्यस्य टीकाकृतो भाष्यकारस्य प्रत्याख्यानविषयमिमं बहुधा तत्प्रौढिवादम् एकदेशियुक्तिप्रयुक्तं चैव मन्वाना दृश्यन्ते। तथा हि उद्योतकारो नागेशो व्याजहार –

**''भगवतो भाष्यकारस्येति एकदेशिन इति शेषः। अनेन क्वचित 'इमेऽपि' क्वचित 'तर्हि' क्वचित 'यद्यपि' इत्यादिभाष्यग्रन्थः एकदेशिनः उक्तिप्रत्युक्तिपरतया प्रौढिवाद एवेति ध्वनितम्''**[९] इति

इतरत्रापि नागेशो यथा –

**''वस्तुतस्त्वत्रत्यमिदं भाष्यम् एकदेश्युक्तिः''**[१०] इति

---

[४] *पातञ्जलमहाभाष्यम्, प्रत्याहाराह्निकम्, ऋऌक्*

[५] *पाणिनीयाष्टाध्यायी, ८.४.१४*

[६] *तत्रैव कैयटप्रोक्तो महाभाष्यप्रदीपः*

[७] *पातञ्जलमहाभाष्यम्, प्रत्याहाराह्निकम्, ऋऌक्*

[८] *तत्रैव*

[९] *महाभाष्यप्रदीपोद्योतः,सू. ३.१.३२*

[१०] *महाभाष्यप्रदीपोद्योतः, सू. १.१.६*

**भाष्यकर्तुः प्रत्याख्यानसन्दर्भस्य अभिप्रायविशेषः :-**

अथ भाष्यकारस्य परस्परविरोधान्वितं प्रत्याख्यानविषयमीदृशं तदभिप्रायपरा वयं कथमभ्युपपद्यामहे इति जिज्ञासायामिदमुच्यते - **शिष्यबुद्धिव्युत्पादनाय** इति। यथामी पाणिनीयाः पाठकाः साधकबाधकतया वा आलोचनप्रत्यालोचनतया वा सूत्रस्य समस्तमपि तत्त्वगतं समीक्षाधिया विजिज्ञासनपरा भवन्त्विति। यतो बहूनि पाणिनीयसूत्राणि आपाततो भाष्यकारः प्रत्याख्यायापि तत्तत्सूत्रगरिमाणमङ्गीकुर्वाणो ह्यसौ **"आरभ्यमाणेऽप्येतस्मिन् योगे"**[११] इत्यादि भूयः प्रब्रवीति। **स्थानिवदादेशोऽनल्विधौ**[१२], **असिद्धवदत्राभात्**[१३] इत्यादीनि सूत्राणि भाष्यप्रसङ्गेऽस्मिन् विशेषतो विलोकनीयानि। इममेवाभिप्रायं जातुचिद्भाष्यकारो **"न हि दोषाः सन्तीति परिभाषा न कर्तव्या लक्षणं वा न प्रणेयम्। न हि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते। न च मृगाः सन्तीति यवा नोप्यन्ते। दोषाः खल्वपि साकल्येन परिगणिताः प्रयोजनानामुदाहरणमात्रम्। दोषाणां लक्षणं नास्ति प्रतिविधेयं च दोषेषु"**[१४] इत्येवमादि प्रब्रुवाणः पाणिनीयसूत्राणां प्रत्याख्यानप्रसङ्गे प्रतिध्वनयितुमीहते। अनेन च भाष्यकृद्वचनेन सूत्राणां प्रत्याख्याने च खण्डने चार्थदृशा भेदविशेषोऽपि कश्चन शक्य आस्थातुम्। तस्मात् तत्तत्पाणिनीयसूत्राणां भाष्यकृत्कृतप्रत्याख्यानसन्दर्भे खण्डनं वा अनारम्भं वास्माभिर्न मननीयम्। इतरथा भाष्यकारस्य प्रत्याख्यानसन्दर्भो यदि शिष्यबुद्धिव्युत्पादनहेतुरसौ नालक्षयिष्यत, चेद्भगवन्तं पाणिनिं तच्छास्त्रं चास्थाय भाष्यकृदुक्तं वचनमिदं वैयर्थ्यमागम्य कथङ्कारं सुसमगंस्यतः-

**"प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयति स्म। तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुम्, किं पुनरियता सूत्रेण"**[१५] इति

एकतो भाष्यकारः पाणिनीयशास्त्रस्य वर्णमात्रमपि नानर्थकं मनुते, अपरतश्चासौ तत्सूत्राणि वा सूत्रगतपदानि वा प्रत्याचक्षाणोऽपि दृश्यते। नूनमिह परस्परविरोधिनि तद्वचसि कञ्चन विशेषमादधानेन भाष्यकारस्याभिप्रायेण गभीरेण भाव्यमेव। अधुनातनैः प्रायेण वैयाकरणैर्भाष्यकारेण प्रत्याख्यातानि पाणिनीयसूत्राणि वा तद्गतपदानि वा निष्प्रयोजकानि मन्यन्ते। यद्येवम्, चेदुक्तानुक्तदुरुक्तचिन्ताविषयत्वात् नहीदं भाष्यं भवेल् लक्षणान्तरत्वात्।[१६] अथ तत्त्वं यदि विचिन्त्येत, चेद्भाष्यकारेण प्रत्याख्यातसूत्राणां दुरुक्तकल्पना वा निरर्थकत्वकल्पना वा न भाष्यकारेण समं न्याय्यमातनुते, न च सूत्रकारेण समम्। यदि

---

*[११] पातञ्जलमहाभाष्यम्, सू. १.१.५६*

*[१२] पाणिनीयाष्टाध्यायी, १.१.५६*

*[१३] तत्रैव, ६.४.२२*

*[१४] पातञ्जलमहाभाष्यम्, सू. १.१.३९*

*[१५] तत्रैव, सू. १.१.१*

*[१६] सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः। स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः॥*

---

नाम भाष्यकार: पाणिनीयशास्त्रस्य भूयांसमंशं दुरुक्तं वा निरर्थकं वा गणयेत, चेत्सूत्रकारं तच्छास्त्रं चोद्दिश्य उपरिष्टाद् भाष्यकृदुक्तं परस्परविरोधित्वात् प्रमत्तवाक्यमेव मननीयं भवेत्, चारणानां सदृशमलीकानुशंसनं वा। अपरत इदमप्यत्र विचिन्त्यमेव यथा कुतो ह्यशेषशेमुषीसम्पन्नो महाभाष्यकार ईदृशस्य बहुलदोषस्य शास्त्रस्य व्याख्यारम्भं व्यधास्यत? यद्वा दोषाणामेव सद्बाहुल्यात् कुतो नु परवर्तिभिर्वैयाकरणै: पाणिनीयं शास्त्रमङ्ग्यकरिष्यत प्रमाणभूतं वामंस्यत?

तत्त्वतस्तु न भाष्यकार: प्रत्युक्तपाणिनीयसूत्राणि दुरुक्तानि वा निरर्थकानि वा मनुते, न चापाणिनीयत्वं शास्त्रस्य पुष्णाति। स यत्रापि पाणिनीयं कात्यायनीयं च शास्त्रं प्रत्युक्तिविषयं कुरुते, तत्र सर्वत्र प्रकारान्तरेण तत्तत्कार्यस्य सिद्धिं प्रयोजयतीति मन्तव्यम्। प्रकारान्तरेण कार्यसिद्धिसम्भावनं शास्त्रस्य महत उत्कर्षस्य प्रयोजकं कल्पते भाविनश्च शास्त्रप्रवक्तारो लाभभाजो भवन्ति। यथा हि चान्द्रे व्याकरणे सुलभमेतत्।

तस्माद्भाष्यकारस्यैव वचस्स्वेषु सङ्गतिमानेतुं स स प्रत्याख्यानविषय: तत्तत्सूत्रस्य पक्षान्तरो वा प्रकारान्तरो वा भावयितव्योऽस्माभि:, न तु तत्सूत्रप्रतिवाद इति मनुते महाभाष्याभिप्रायभर्ता महामहोपाध्यायो वैयाकरणपुङ्गव: पण्डितयुधिष्ठिरमीमांसक:।[१७]

भूतार्थतस्तु आचार्येण पाणिनिना निजपाठकानां सौहृदमासाद्य स्वीयशास्त्रस्य स्पष्टप्रतिपत्तिगतसूत्रविन्यास एव सर्वत्र महत्त्वयाञ्चक्रे। यथाह स्वयमेव भाष्यकार: पस्पशाप्रसङ्गे **"आचार्य: सुहृद् भूत्वा शास्त्रमिदमन्वाचष्टे"** इति। तस्मादेव हेतो: सूत्रेषु बहुषु प्राप्तसंहिताभावमनासाद्यैव विप्रतिपत्तिहेतूभूतानि तत्तत्सूत्राणि तथैव उपन्यस्तानि तेन। तथैव चाचार्य: प्रकरणविशेषे कस्मिंश्चिन् मूलभूतं लक्षणं प्रणीय तत्सम्बद्धान्येव इतराण्यपि लक्षणानि प्रपञ्चयति। तद्यथा **"विशेषणं विशेष्येण बहुलम्"** इति लक्षणमुपदिश्य **पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च** इत्यादीनि मूललक्षणेनापि सिद्धिं गतानां तत्तल्लक्ष्याणां सिद्ध्यर्थं तानि तानि लक्षणानि परस्तात्पुन: प्रपञ्चयत्येव।

अत एवेदं भाष्यकार आह –

**"एते खल्वपि विधय: सुपरिगृहीता भवन्ति, येषु लक्षणं प्रपञ्च एव। केवलं लक्षणं केवलं प्रपञ्चो वा न तथाकारकं भवति"**[१८] इति

स्पष्टप्रतिपत्तिहेतुभूतम् इममेव आचार्यस्य पाणिनेरभिप्रायमास्थाय भाष्यकार: प्राह कदाचिदिदम् –

**"अन्वाख्यानमेव तर्हीदं मन्दबुद्धे:"**[१९] इति

---

[१७] *युधिष्ठिरमीमांसककृता पातञ्जलमहाभाष्यस्य हिन्दीटीका, सू. १.१.१*

[१८] *पातञ्जलमहाभाष्यम्, सू. २.१.५८*

[१९] *तत्रैव, सू. १.२.३२*

तस्मादिदमुक्तं भाष्यकृत्प्रत्याख्यानवचनप्रसङ्गे तत्र तत्र सूत्रे नूनवमवधेयं पाठकैः। इतरथा तत्तत्सूत्रस्य अनारम्भपक्षे भाष्यकारप्रोक्तमिदं वचो वृथा स्यात् - **''न चेदानीमाचार्याः सूत्राणि कृत्वा निवर्तयन्ति''**[२०] इति।

यद्यपि समस्तमिदमास्थाय तत्परकं व्युदीर्य चापि भाष्यकारस्तत्तत्सूत्राणि प्रत्याचष्ट एवेति विस्मयावहमेव सदिदं भाष्यकर्तुरभिप्रायविशेषं तत्र जनयति। तथा हि **'ध्रुवमपायेऽपादानम्'** इत्यत्र सूत्रे भाष्यप्रसङ्गमधीयाना विजानीयुरेवैतत्। एतच्च वाक्यपदीयकारो यथास्वमेवाह :-

**निर्धारणे विभक्ते यो भीत्रादीनां च विधिः। उपात्तापेक्षितापायः सोऽबुधप्रतिपत्तये॥**[२१] इति

अथात्र प्रदीपकारस्य वचोऽप्यवधेयम् –

**''अबुधबोधनार्थं तु किञ्चिद्वचनेन प्रतिपाद्यते। न्यायव्युत्पादनार्थं चाचार्यः किञ्चित्प्रत्याचष्टे। न ह्यत्रैकः पन्थाः समाश्रीयते।''**[२२] इति

इयमीदृशी वैचित्र्यमादधाना भाष्यशैली भाष्यकर्तुर्नैकान्तिकतया शक्यास्थातुमिति भावः।

**केषाञ्चित्प्रत्याख्यातसूत्राणां समीक्षा :-**

इदमिदानीमुपरिष्टादुक्तं समस्तमास्थाय उदाहरणत्वेन **'न धातुलोप आर्धधातुके'**[२३], **'दीधीवेवीटाम्'**[२४], **'नाज्झलौ'**[२५] इति यथासामान्यं प्रत्याख्यातसूत्रत्रयमाश्रित्य यथाविषयं समीक्षणपरतया किञ्चिदुच्यते :-

यथा हि भाष्यकारो **'न धातुलोप आर्धधातुके'** इति सूत्रस्य भाष्यमातन्वानः -

**''अनारम्भो वा पुनरस्य योगस्य न्याय्यः। कथं बेभेदिता, मरीमृजकम्, कुषुभिता, समिधिता इति, अत्राप्यकारलोपे कृते तस्य स्थानिवद्भावाद् गुणवृद्धी न भविष्यतः''** इत्येवं प्रोच्य लक्ष्यसिद्ध्यर्थं स्थानिवद्भावप्रकारमेवास्थाय प्रकृतसूत्रस्य अनारम्भमाविष्कुरुते। तत्रैव महाभाष्यस्य टीकाकर्तुः सिद्धान्तरत्नप्रकाशकारस्य शिवरामेन्द्रसरस्वतीमहाभागस्य यथास्वं समीक्षा नूनं परिशीलनीया। यथा ह्यसौ प्राह :-

**''अत्रेदमवधेयम् – लोलुवः पोपुवः इत्यादीनि प्रकृतसूत्रोदाहरणानि यानि वृत्तिकारैर्निदर्शितानि, तानि सूत्रं विनापि साधयितुं शक्यन्ते इत्येतावन्मात्राभिप्रायेण अनारम्भो वा इत्यादिभाष्यं प्रवृत्तम्, न तु सर्वथा सूत्रं मास्त्विति।**

---

*[२०] तत्रैव, पस्पशाह्निकम्*

*[२१] वाक्यपदीयम्, ३.७.१४७*

*[२२] महाभाष्यप्रदीपः, ७.१.९५*

*[२३] पाणिनीयाष्टाध्यायी, १.१.४*

*[२४] तत्रैव, १.१.६*

*[२५] तत्रैव, १.१.१०*

**न च सर्वत्र संज्ञापूर्वको विधिरनित्य इति गुणादिपरिहार: सिद्ध्यतीति वाच्यम्। अगतिकगतिभूतां तां परिभाषामाश्रित्य सूत्रप्रत्याख्याने 'पृषोदरादीनि यथोपदिष्टम्' इत्येतावतैव सर्वेष्टसिद्धौ समस्तशास्त्रस्य प्रत्याख्येयकर्तव्ये भाष्यकृता व्याकरणान्तरमेव कर्तुं युक्तम्, न तु पाणिनीयप्रतिष्ठापनम्। यत्र तु साक्षाद् भगवता 'इष्टमेवैतत् संगृहीतम्' इत्याद्युक्त्या सूत्रं वा तदैकदेशो वा दूरीक्रियते, तत्र यथोत्तरमुनीनां प्रामाण्यम् इति भाष्यकारोक्तमेवाङ्गीकर्तव्यम, न तु सूत्रकृतं वा वार्तिककृतं वा इति सर्वमनवद्यम्। तस्मात्स्थितमिदं सूत्रं न धातुलोप आर्धधातुके इति।"**[२६]

इतरथा अत्रैव सूत्रे 'निकुचित:' इति प्रयोगं सन्निपातलक्षणप्रसङ्गमास्थाय साधयन् **'कृन्मेजन्त:'**[२७] इति सूत्रे भूय: प्रसङ्गप्राप्तस्य 'निकुचित:' इति प्रयोगस्य साधने प्रकृतां परिभाषां खण्डयन् **'न धातुलोप आर्धधातुके'** इति सूत्रस्य प्रतिष्ठापनं कथं प्रकुर्वीत भाष्यकार:? तथा हि तत्र भाष्यकृद्वच: –

"**अस्त्वत्राकित्त्वम्, न धातुलोप आर्धधातुके इति प्रतिषेधो भविष्यति।**"[२८] इति

अथ **'दीधीऽवेवीटाम्'** इत्यत्र सूत्रे प्रत्याख्यानदृशा तादृशांस्तर्कानुपस्थापयन् प्राह भाष्यकारो यथा – **"अयं योग: शक्योऽकर्तुम्"**[२९] इति

इहापि सिद्धान्तरत्नप्रकाशकारो भाष्यकाराभिप्रायविशेषं सुतरां व्यञ्जयन् प्रकृतस्य पाणिनीयसूत्रस्यैव प्रतिष्ठामातिष्ठमानो यथायथमाह :-

**"वस्तुतस्तु एतादृशक्लिष्टकल्पनापेक्षया सूत्रस्थापनमेव वरम्, अन्यथा समस्तं शास्त्रमाकुलं स्यादित्यन्यदेतत्।"**[३०] इति

अथ च **'नाज्झलौ'** इति सूत्रस्य प्रयोजनमन्यथा साधयन् **'सिद्धमनच्त्वात्'**[३१] इति व्युदीर्य प्रकृतसूत्रमपि प्रत्याचक्षाण इव दृश्यते भाष्यकार:। तत्र त्विदमेव विचिन्तनीयं यथा ऊष्मवर्णानाम् ईषद्विवृतत्वमिति प्रयत्नानन्तरप्रतिष्ठापनेन **'नाज्झलौ'** इति सूत्रस्य निष्प्रयोजनता लक्षिता, तथा येषां मतेन ऊष्मणां विवृतत्वमिष्यते, तत्र अज्झलो: सावर्ण्यप्रतिषेधार्थं **'नाज्झलौ'** इति सूत्रं सप्रयोजनतामप्यावहतीत्यवधेयम्। आचार्येण पाणिनिना तावदिममेव पक्षमास्थाय **'नाज्झलौ'** इति सावर्ण्यप्रतिषेधसूत्रं प्रणिन्ये इति शक्यमास्थातुम् इति पण्डितयुधिष्ठिरमीमांसक:।

एतदतिरिच्य इतरत्रापि प्रत्याख्यानप्रसङ्गोपात्तभाष्यविवरणेषु सदृश्येव विचारसरणी समासादनीया। अत: -

---

*[२६] महाभाष्यस्य सिद्धान्तरत्नप्रकाशटीका, सू. १.१.४*

*[२७] पाणिनीयाष्टाध्यायी, १.१.३९*

*[२८] तत्रैव, पातञ्जलमहाभाष्यम्*

*[२९] पातञ्जलमहाभाष्यम्, सू. १.१.६*

*[३०] तत्रैव, सिद्धान्तरत्नप्रकाशटीका*

*[३१] पातञ्जलमहाभाष्यम्, सू. १.१.१०*

**सूत्रेष्वेवं हि तत्सर्वं यद्वृतौ यच्च वार्तिके। सूत्रं योनिरिहार्थानां सर्वं सूत्रे प्रतिष्ठितम्॥**[३२]

इति तन्त्रवार्त्तिककारस्योक्तिमास्थाय स्वीयसामर्थ्ययोगात्[३३] पाणिनीयशास्त्रे क्वचिदपि किञ्चिदपि निरर्थकम् अभावयतो भाष्यकारस्य समस्तेऽपि सूत्रप्रत्याख्यानसन्दर्भे तस्यैव वच:प्रामाण्यमुपन्यस्य विषयोऽयमुपसंह्रियते :–

**"सिद्ध्यत्येवम्, अपाणिनीयं तु भवति। तस्माद् यथान्यासमेवास्तु"**[३४] इति।

सोऽयमेवोपस्थापितपक्षो भाष्यकारान्तर्गर्भितभावविशेषेण उपोद्बलित: समाश्रयितव्य: पाणिनीयैरित्यलम्।

**सन्दर्भग्रन्थसूची :-**

१. भाष्यप्रदीपोद्योतसमुल्लसितं पातञ्जलमहाभाष्यम्, सम्पा. श्रीभार्गवशास्त्रीजोशी, चौखम्बासंस्कृतप्रतिष्ठानम्, दिल्ली, १९८७
२. महाभाष्यम्, हिन्दीव्याख्यासहितम्, व्याख्याकार: पण्डितयुधिष्ठिरमीमांसक:, रामलालकपूरट्रस्ट, बहालगढम्, वि.सं. २०४९
३. पाणिनीय: अष्टाध्यायीसूत्रपाठ:, सम्पा. ब्रह्मदत्तजिज्ञासु:, रामलालकपूरट्रस्ट, बहालगढम्, वि.सं. २०५८
४. वाक्यपदीयम्, सम्पा. पण्डितश्रीरघुनाथशर्मा, सम्पूर्णानन्दसंस्कृतविश्वविद्यालय:, वाराणसी, १९९१
५. संस्कृतव्याकरणशास्त्र का इतिहास, पण्डितयुधिष्ठिरमीमांसक:, रामलालकपूरट्रस्ट, बहालगढम्, वि.सं. २०४१

~~~~~~~~~~~

[३२] *तन्त्रवार्तिकम्, २.३.११*

[३३] *पातञ्जलमहाभाष्यम्, सू. ६.१.७७*

[३४] *पातञ्जलमहाभाष्यम्, सू. १.१.१*
~~~~~~~~~~~

वर्षम्-०४ अङ्कः-०४ शोधज्योतिः
जनवरी-दिसम्बर, २०२२ ISSN-2350-0700

# उणादिसूत्राणां विमर्शः – उणादिसूत्रप्रयोगदीपिकासन्दर्भे

कारिया राजेशकुमार वासुदेव[१]

❖ **प्रास्तावना विषयप्रवेशश्च -**

प्राणिमात्रस्य सर्वविधकल्याणाय प्रवृत्तानां वेदादीनां यथार्थप्रबोधाय प्रणीताः सहायकभूताः ग्रन्थाः वेदाङ्गत्वेन प्रसिद्धाः। तानि चेमानि वेदाङ्गानि षड्विख्याकानि विद्यन्ते। व्याकरणमहाभाष्यस्य पस्पशाह्निके आचार्यप्रवरः पतञ्जलिमुनिः प्राह–

**“ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च। प्रधानञ्च षड्वङ्गेषु व्याकरणम्। प्रधाने च कृतो यत्नः बलवान् भवतीति”** ॥[२]

इतोऽपि **मुखं व्याकरणं स्मृतम्**[३] इत्यादीनि आर्षवचांसि वेदार्थावबोधे व्याकरणमाहात्म्यं स्मारयन्त्येव सततम्। सर्गारम्भादेव महती उपकारिणी वर्तते आर्षव्याकरणपरम्परा। तत्राऽपि पाणिनीयव्याकरणपरम्परा तु सर्वाः अपि प्राच्यपरम्पराः अर्वाङ्गरम्पराः च अतिशेतेतरां नितरां सुतराम्।

अस्याः पाणिनीयव्याकरणपरम्परायाः आधारभूताः सन्ति महर्षिपाणिनिप्रणीताः पञ्च उपदेशाः। ते च इमे सन्ति – 1.) अष्टाध्यायी, 2.) धातुपाठः, 3.) उणादिसूत्राणि, 4.) लिङ्गानुशासनम्, 5.) गणपाठश्चेति। पञ्च अपि इमे उपदेशाः परस्परमङ्गीभूताः वेदार्थावबोधनाय महदुपकारकाः सन्ति। समेषामप्येतेषां माहात्म्यं सार्वकालिकं सार्वदेशिकं च वर्तते।

अत्र अष्टाध्यायीधातुपाठाभ्यां तु वयं चिरपरिचिताः स्मः एव। उणादिसूत्रविषयेऽपि यद्यपि यथाकालं लेखनादिकं वृत्तिप्रणयनादिकं कार्यं कृतमेव अस्ति नैकैः विपश्चिद्भिः, पुनरपि अष्टाध्यायीवत्प्राचुर्येण, परमेतस्य चर्चाः न श्रूयन्ते। अपि च यदि श्रूयन्ते पठ्यन्ते चेदपि अपेक्षया स्वल्पतयैव। पाणिनीयाष्टकमाश्रित्य स्वीयम् अष्टाध्यायीभाष्यानन्तरं स्वामिदयानन्दसरस्वती “उणादिकोषः” इति नाम्ना पाणिनीयान्युणादिसूत्राणि व्याख्याय वैदिकशब्दावबोधायापि तेषामनन्यं महत्त्वमपरिहार्यता चास्तीति प्रत्यपादयत्। पाणिनीयव्याकरणपरम्परायां महत्स्थानं भजतेऽसौ उणादिकोषः। तच्च माहात्म्यं भगवता पाणिनिना “उणादयो बहुलम्”[४] इत्यादिभिः आर्षवचनैः प्रतिपादितं सदपि साम्प्रतिकैः अध्येतृभिः

---

*[१] शोधच्छात्रः – गुजरात युनिवर्सिटी, अहमदाबाद, ईमेईल - rajskt247@gmail.com, दुरभाषः - 7448001213, 7728079738, पत्रसङ्केतः – पतञ्जली आरोग्यकेन्द्र, वाडी रोड, डीसा, बनासकाठा, गुजरात, 385535*

*[२] पस्पशा. पात. महाभाष्यम्।।*

*[३] पाणिनीय शिक्षा*

*[४] पा. अष्टा. 3/4/1।।*

उपेक्षितप्रायं दृश्यते इति अनुभूय एव महर्षिणा दयानन्देन संस्कृतभाषयैतस्य व्याख्या विहिता। सा च निश्चप्रचम् उपकारिणी सिध्यत्येव। पुनरपि साम्प्रतिककालानुरूपं छात्राणामत्र अभिवृद्धिप्रकल्पनायै प्रवृत्तिनिष्पादनाय च पाणिनीयानि उणादिसूत्राणि आश्रित्य विद्वद्वरेण्यैः **पण्डितप्रवरैः आचार्यैः सत्यानन्दवेदवागीशवर्यैः उणादिसूत्रप्रयोगदीपिकावृत्तिः** प्रवर्तिता।

अतः शोधपत्रेऽस्मिन्विद्वद्वरेण्यैः पण्डितप्रवरैः आचार्यसत्यानन्दवेदवागीशवर्यैः प्रवर्तितायाः उणादिसूत्रप्रयोगदीपिकावृत्तेः आधारेण वेदार्थावबोधने उणादिसूत्राणां भूमिकां सोद्धरणं सोदाहरणं च प्रतिपादयामि।

### ❖ उणादिकोषस्य परिचयः

उण् आदिर्येषां त इमे **उणादयः (प्रत्ययाः)**। अत्र एतेषु सूत्रेषु इदं प्रथमं सूत्रमस्ति **'कृवापाजिमिस्वदिसाध्यशूभ्य उण्'**[५] **इति**। अत्र कृ-वा-पा...इत्यादिभ्यः धातुभ्यः **'उण्' प्रत्ययः परश्च**[६] विधीयते। इतोऽग्रे पञ्चसु पादेषु सूत्रेषु इतोऽपि अन्ये प्रत्ययाः विविधधातुभ्यः विधीयन्ते। सर्वेष्वप्येतेषु प्रत्ययेषु आद्यः प्रत्ययः वर्तते **'उण्'**। अतः इमे सर्वेऽपि प्रत्ययाः उणादयः प्रत्ययाः इत्यभिधीयन्ते। एतेषां विषये अष्टाध्याय्यां महर्षिः पाणिनिमुनिः प्राह **'उणादयो बहुलम्'**[७] इति। इमे च प्रत्ययाः धातोः बाहुलकाद्भवन्ति इति।

उणादिप्रत्ययविधायकानि च सर्वाणीमानि सूत्राणि उणादिसूत्राणि इत्यभिधीयन्ते आचार्यैः। महर्षिपाणिनि-प्रोक्तानि उणादिसूत्राणि पञ्चसु पादेषु विभक्तानि सन्ति। **दशपाद्युणादिवृत्तिः इति नाम्ना उणादिसूत्राणां दशपादी-वृत्तिः अपि समुपलभ्यते इति**[८]। परमेतासु वृत्तिषु पञ्चपादीवृत्तिः एव अधिकप्रामाण्यत्वेन अङ्गीक्रीयते। अतः पञ्चपादीम् उणादिवृत्तिमाश्रित्य तत्र-तत्र प्रदत्तानामुदाहरणानां वैदिकादीन् प्रयोगान् प्रबोधयितुम् आचार्यप्रवरैः सत्यानन्दवेदवागीशवर्यैः रचितोऽयं **ग्रन्थः "उणादिसूत्रप्रयोगदीपिका" नाम वृत्तिग्रन्थः**।

### ❖ उणादिसूत्रप्रयोगदीपिकायाः प्रयोजनम्

'सत्सु नैकेषु वृत्तिग्रन्थेषु पुनरपि उणादिसूत्रप्रयोगदीपिका-नामवृत्तिग्रन्थस्य किम्प्रयोजनम्? का वा वृत्तिग्रन्थस्याऽस्य विशेषता? इति प्रश्नः अयं स्वाभाविकः। तर्हि निस्सन्देहं वयं वक्तुं पारयामः यत्-

---

५ *उणादिसूत्राणि 1/1।।*

६ *अष्टा. 3/1/2*

७ *अष्टाध्यायी – 3.3.1*

८ *सं.व्याकरणशास्त्र का इतिहासः – पं. युधिष्ठिरमीमांसकजीकृतः (भाग – 2)।*

**"अनन्तपारं किल शब्दशास्त्रम्"..** इति बिन्दुमाश्रित्य अस्मत्पूर्वजैः तत्तत्काले यथापरिस्थिति यथावश्यकं शास्त्रव्याख्यानं विहितं प्रस्तुतं वा। यथा आदौ भगवता पाणिनिना सूत्रात्मिका अष्टाध्यायी प्रणीता। ततः गच्छता कालेन भगवता कात्यायनेन वार्त्तिकाख्यावृत्तिः निरमायि। अतीते हि कालखण्डे समयोचितव्याख्यानरूपेण भगवता पतञ्जलिना अष्टाध्यायी-वार्त्तिकयोः समाहारयुतं व्याकरणमहाभाष्यं व्यरचि। एतदेव परस्परं पूरकत्वात् **'त्रिमुनिव्याकरणम्'** इत्यभिधया विश्वविश्रुतं व्यजायत।

यद्यपि तदा इयं व्याकरणपरम्परा शास्त्रपरम्परा च प्राचुर्येण व्यवहारपथि आसीत् इति कृत्वा सूत्रस्थोदाहरणानां प्रयोगप्रदर्शनस्य लेखनस्य वा आवश्यकता नैव अनुभूता स्याद् आचार्यैः इति अङ्गीकुर्मः वयम्। परं व्याकरणाध्ययनस्य प्रयोजनं तु वेदार्थस्यावबोधः इत्येव तथ्यम्। तथ्यमिदं त्रिमुनिना अपि अङ्गीकृतम्। तेभ्यः प्राच्यैः आचार्यैः अपि इदमेव प्रतिपादितम्। अर्वाचीनानां वैयाकरणानामपि नाऽत्र विमतिः।

महाभाष्योत्तरकालं वयं यदि पश्यामः चेत् काशिकावृत्तिः वैयाकरणसिद्धान्तकौमुदी इत्यपि महती व्याकरणपरम्परा वर्तते। तदुत्तरम् आर्षपरम्परायां पण्डितप्रवरैः ब्रह्मदत्तजिज्ञासुवर्यैः विरचिता प्रथमावृत्तिः अपि व्याकरणस्य आधुनिकछात्रेभ्यः महदुपकरोति। पाणिनीयाष्टकक्रममाश्रित्यैव सरलसूत्रव्याख्यानं पदसिद्धि-प्रक्रियासहितं विहितं वर्त्तते। एतदतिरिच्यापि सुमहतीयं व्याकरणशास्त्रस्य अध्ययनाध्यापनपरम्परा वर्तते। अस्यां समस्तायामपि व्याकरणपरम्परायां सूत्राणाम् अध्ययनकाले उदाहरणपाठनस्य अपि परम्परा वर्तते एव। अपि च महाभाष्य-काशिकाभ्यामारभ्य उदाहरणप्रदानस्येयं परम्परा अनुवर्तमाना विद्यते। अत्र परम्परायां निस्सन्देहं बहुत्र वेदादिभ्यः उदाहरणानि दीयन्ते एवेति नात्र विप्रतिपत्तिः। एवं सत्यपि बहुषु सूत्रेषु महाभाष्यादिष्वपि पदमात्ररूपेण उदाहरणानि प्रदत्तानि सन्ति।

किन्तु एतादृशानां पदानां प्रयोगः वेदादिशास्त्रेषु कुत्र वर्त्तते इति बोधः सर्वेषां छात्राणां न जायते। केचन अतिपरिश्रमशीलाः छात्राः निस्सन्देहं स्वप्रयत्नेन तादृशान् प्रयोगान् अन्वेष्टुं परिश्राम्यन्ति। परं सर्वेभ्यः छात्रेभ्यः एतत्कर्म अतीव कष्टसाध्यत्वान्न सुलभं न वा सम्भवम् इति भाति। एवं सति सुमहान् अध्येतृगणः केवलं सूत्रेषु प्रदत्तानि उदाहरणानि एव अधीत्य व्याकरणाध्ययनस्य औपचारिकतां निर्वहन् दृश्यते। एतेन च **"रक्षार्थं वेदानामध्येयं व्याकरणम्[१]"** अपि च **"वेदार्थावबोधाय व्याकरणम्"** इति प्रयोजनं न सिध्यति।

### ❖ उणादिसूत्रप्रयोगदीपिकायाः वैशिष्ट्यम् आचार्याणां ग्रन्थकरणे प्रयत्नश्च

तथ्यमिदं मनसि निधाय व्याकरणशास्त्रस्य जिज्ञासूनाम् उपकृतये वेदादिभ्यः उदाहरणानि देयानीति सङ्कल्प्य तत्तत्सूत्रस्थोदाहराणानां प्रयोगस्थलानि वेदेषु अन्वेष्टुमारभन्त स्वनामधन्याः आचार्याः पं. सत्यानन्दवेदवागीशवर्याः। येषामुदाहरणानां प्रयोगाः वेदेषु नोपलभ्यन्त, तान् क्रमशः ब्राह्मणग्रन्थेषु

---

१ *महाभाष्यम् – पस्पशाह्निकम्।*

आरण्यकेषु उपनिषत्सु रामायण-महाभारतादिषु आर्षग्रन्थेषु ततः अन्येषु ग्रन्थेषु च गवेषितुं प्रायतन्तः। ध्येयमेकमेव मनसि यद् उदाहरणानां शास्त्रीय-प्रयोग-प्रदर्शन-पुरस्सरं व्याकरणावबोधः सुगमः स्यादिति।

महता यत्नेन शास्त्राणां परिशीलनानन्तरमपि बहूनामुदाहरणानां प्रयोगाः समुपलब्धे/ समुपलभ्यमाने वैदिकवाङ्मयेनैवोपालभ्यन्त। एतादृशानामुदाहरणानामर्थोचितान् काव्यमयान् पद्यात्मक-प्रयोगान् स्वप्रतिभाबलेन विनिर्माय प्रादर्शयन् आचार्यप्रवराः। अपि च एते प्रयोगाः न केवलं व्याकरणाध्ययनस्य औपचारिकताभूताः स्वविद्वत्ताप्रतिपादकाः वा प्रयोगाः, अपि तु तत्तदुदाहरणमाध्यमेन आयुर्वेदस्य बोधकाः, क्वचिद् वास्तु-ज्योतिष्-धनुर्वेदादिशास्त्रोक्तविद्यानां बोधकाः, कुत्रचित् इतिहास-भूगोलादीनां बोधयितारः, केचन प्रयोगाः पुनः सामाजिक-व्यवहारस्य नीतेश्च प्रबोधकाः सन्ति। तथैव बहुषु प्रयोगेषु आचार्याणां विनययुक्तस्य बहुश्रुतत्वपूर्णस्य वैदुष्यस्याऽपि बोधो जायते, क्वचिदाचार्याः काव्यात्मकचमत्कृतेः प्रयोग-पुरस्सरं छात्राणां कृते नूतनां दिशां प्रादर्शयन्।

इत्थं पाणिनीयसूत्राणामुदाहरणानां प्रयोगानां पीठिकाभूता एषा सार्थकमेव नाम विद्यते **"उणादिसूत्रप्रयोगप्रदीपिका"** इति। सम्प्रति अहमत्र एतस्याः वृत्तेः मौलिकीं विशेषतां प्रस्तोतुकामः एकस्य उणादिसूत्रस्य समीक्षां प्रस्तौमि–

**<u>मूलम् उणादिसूत्रम्</u> – भृमृशीङ्-तृचरित्सरितनिधनिमिमस्जिभ्य उः ॥ उ. 1/7 ॥**[१०] इति।

यथा मया एतस्मिन् शोधपत्रे इतः पूर्वम् एव प्रत्यपादि यत् उणादिसूत्राणि अष्टाध्यायीस्थस्य "उणादयो बहुलम्"[११] इति सूत्रस्य परिशिष्टभूतानि एव सन्ति इति। अतः सामान्यतया उणादिसूत्राणामध्येता इतः प्राक् अष्टाध्याय्याः भाष्यं पदच्छेद-विभक्ति-अनुवृत्ति-समास-सूत्रार्थ-उदाहरण-सिद्धयः इति प्रक्रियापुरस्सरं निश्चप्रचमधीतवान् स्यादेव। एतन्मनसि निधायैव सरलत्वात् सुगमत्वाच्च उणादिसूत्रवृत्तिकाराः **<u>महर्षिदयानन्दस्वामिनः एतेषां सूत्राणाम् अर्थं नैव निरदिशन्</u>**। ते साक्षात् उदाहरणानि एव अलिखन्।[१२]

स्वामिदयानन्दस्य वृत्तेः सम्पादनम् आचार्याः युधिष्ठिरमीमांसकवर्याः कृतवन्तः। संस्कृतव्याकरणशास्त्रका इतिहास इति भागत्रयात्मकस्य गवेषणात्मकग्रन्थस्य लेखनं तत्र कृतम्। अत्र उणादिसूत्राणां वृत्त्यादिविषये महता विस्तरेण प्रतिपादितम्। अपि च स्वयमपि उणादिसूत्राणां गवेषणापूर्वकं सम्पादनं विहितम्।[१३] अत्र भवन्तः स्वामिदयानन्दवृत्तिमेव विविधपाठान्तरैः समीक्ष्य समपादयन्। अपि च

---

[१०] *उणादिसूत्राणि अ. 1 / पा. 7।।*

[११] *पा. अष्टा. 3/3/1।।*

[१२] *उणादिकोषः (वेदाङ्गप्रकाशः तत्रत्यः त्रयोदशो भागः– प्रकाशकः - वै. यन्त्रालयः अजयमेरुः)।*

[१३] *द्र. पं. युधिष्ठिरमीमांसकवर्यैः सम्पादितः उणादिकोषः (उणा. 1/7)।*

उपलब्धान् पाठान्तरान् पादटिप्पणीरूपेण अधः प्रदत्तवन्तः। सम्पादनकार्यत्वात्ते स्वपक्षतः तत्र सूत्रस्य अर्थं नैवालिखन्।

स्वामिदयानन्दस्य उत्तरवर्त्तिषु वृत्तिकारेषु आचार्याः सत्यव्रतशास्त्रिवर्याः अपि उणादिसूत्राणां वृत्तिमलिखन्। ते सूत्रस्यास्य संस्कृत-हिन्दीभाषयोः अर्थमित्थं लिखितवन्तः -

**अर्थः (संस्कृते) :-** उप्रत्ययाधिकारो मृगय्वादयश्चेति पर्यन्तम्। डुभृञ् धारणपोषणयोः, मृङ् प्राणत्यागे, शीङ् स्वप्ने, तॄ प्लवनसंतरणयोः, चर गतिभक्षणयोः, त्सर छद्मगतौ, तनु विस्तारे, धन धान्ये, डुमिञ् प्रक्षेपणे, टुमस्जो शुद्धौ इत्येतेभ्यो धातुभ्य उः प्रत्ययो भवति।

आचार्यसत्यव्रतशास्त्रिवर्याः सूत्रस्यास्य हिन्दीभाषायां सङ्क्षेपेणैव साङ्केतिकमर्थं दत्तवन्तः -

**अर्थः (हिन्दी) :-** डुभृञ् धारणपोषणयोः आदि धातुओं से 'उ' प्रत्यय होता है। इति॥

**डॉ. सोमलेखा[१४]- प.ईश्वरचन्द्रः च (व्याख्याकारौ)**

अत उत्तरं वयमर्थदृष्ट्या परिशीलयामः संस्कृत-हिन्दीभाषोपेतां पीयूषाख्यां वृत्तिमेकाम्, तस्याः वृत्तेः कर्त्रीम् ईश्वरचन्द्रशर्म्मसुतां डॉ.सोमलेखानाम्नीं च। इयं वृत्तिकारा छात्राणामवबोधसौकर्याय अर्थलेखनात् प्राक् पदच्छेदविभक्तिनिर्देशमपि अकरोत्। सा च अर्थप्रस्तुतिः प्रस्तूयतेऽत्र मया–

**पदच्छेद-विभक्तिनिर्देशः -** भृमृतॄशीचरित्सरितनिधनिमिमस्जिभ्यः (5.3), उः (1.1)

**<u>संस्कृतार्थः</u>–** भृ-मृ-शी-तॄ-चर्-त्सर्-तन्-धन्-मि-मस्ज् इत्यतेभ्यो धातुभ्य 'उ' प्रत्ययो भवति॥

**<u>व्याख्या (हिन्दी)</u> –** भृ के द्वारा डुभृञ्धारणपोषणयोः व भृञ् भरणे का ग्रहण होता है। मृ के द्वारा मृङ्काशी के द्वारा शीङ्का, तॄ के द्वारा तॄ प्लवनसन्तरणयोः का तथा नि[१५] {=मि} के द्वारा डुमिञ् प्रक्षेपणे का ग्रहण होता है। अर्थ- मृ, शी, तॄ, चर्, त्सर्, तन्, धन्, मि और मस्ज् – इन धातुओं से परे 'उ' प्रत्यय होता है।

अत्र वृत्तौ संस्कृतार्थः संक्षेपेण परं हिन्दीव्याख्या विस्तरेण विहिता इति भेदः एतस्याः वृत्त्याः।

सम्प्रति उणादिसूत्रवृत्तिकारैः आचार्यसत्यानन्दवेदवागीशवर्यैः प्रदर्शितम् अर्थं प्रस्तौमि।

**<u>आचार्यसत्यानन्दवेदवागीशवर्याः -</u>**

---

[१४] *हरियाणाप्रदेशस्य भिवानिस्थे राजकीय-सनातकोत्तर-महाविद्यालये उपप्राचार्याणां संस्कृतविभागाध्यक्षाणाम् ईश्वरचन्द्रशर्म्मणाम् आत्मजा इयं डॉ.सोमलेखाख्या। (सन्दर्भः – पीयूषाख्या उणादिवृत्तिः – पृ. 479) व्रजजीवन प्राच्यभारती प्रकाशनमाला – 133. (प्रका. चौखम्बा सं. प्रतिष्ठानम् – दिल्ली)।*

[१५] *टङ्कणस्खलनात् अत्र मि स्थाने नि इत्यपपाठमुद्रणम् इति भावयामि अहम्। संस्कृतार्थे अपि च अत्रपि व्याख्यायाम् अग्रे अपि मि इत्येव पाठः।*

'डुभृञ् धारणपोषणयोः, मृङ् प्राणत्यागे, शीङ् स्वप्ने, तॄ प्लवनसन्तरणयोः, चरँ गतिभक्षणयोः, त्सरँ छद्मगतौ, तनुँ विस्तारे, धनँ धान्ये, डुमिञ् प्रक्षेपणे, टुमस्जोँ शुद्धौ', इति धातुभ्य उः प्रत्ययो भवति।

एवमिह शब्दभेदे प्रस्तुतिभेदे वा सत्यपि अर्थविषये प्रायः सर्वेषामाचार्याणाम् ऐक्यं साम्यं च दृश्यते इति नाऽत्र सन्देहः। इतोऽग्रे सूत्रेणानेन उः प्रत्यये विहिते सति जायमानानि उदाहरणानि सर्वैरपि आचार्यैः प्रदत्तानि सन्ति। अतः अत्रापि सर्वेषां साम्यमेव बलीयः, नात्र कश्चन विशेषः। पुनरपि एकस्वरेण तानि उदाहरणानि अत्र प्रस्तौमि–

**सूत्रस्य उदाहरणानि-**

भृ-भरुः। मृ-मरुः। शी-शयुः। तॄ-तरुः। चर्-चरुः। त्सर्-त्सरुः। तन्-तनुः। धन्-धनुः। मि-मयुः। मस्ज्-मद्गुः॥ इति॥[१६]

इतोऽग्रे दयानन्दस्वामिनः निर्वचनरूपां स्वामिदयानन्दवृत्तिं प्रस्तुतवन्तः। धात्वर्थसमन्विता निर्वचनरूपा वृत्तिरियं शब्दार्थनिश्चये अवबोधने च सौकर्यं जनयति। महर्षिदयानन्दसरस्वतिस्वामिना प्रदर्शितानि इमानि उदाहरणानि इमानि निर्वचनानि च सर्वेऽपि वृत्तिकाराः एकतन्त्रेण अङ्गीकुर्वन्ति प्रदर्शयन्ति च। सति साम्यत्वे प्रस्तुतिभेदः न विशेषाय। परम् उणादिसूत्रवृत्तेः वैशिष्ट्यप्रबोधनाय शोधपत्रेऽस्मिन् अहमेतस्यास्य सूत्रस्य आद्यमुदाहरणं भरुः इति शब्दं स्वीकृत्य एकैकशः सर्वेषां वृत्तिं प्रस्तौमि। तेन विशेषः स्पष्टतया अवगन्तुं पार्येत सर्वैरपि अस्माभिः। तर्हि **भरु-शब्दम्** आश्रित्य सर्वासामपि वृत्तीनां समीक्षां कुर्मः।

**स्वामिदयानन्दवृतिः –** स्वामिदयानन्दवृत्तौ भरुशब्दं दयानन्दस्वामिनः इत्थं वर्णयन्ति -

"भरति बिभर्ति वेति **भरुः** स्वामी।" इति।

**आचार्यसत्यव्रतशास्त्रिवृत्तिः –** आचार्यसत्यव्रतशास्त्रिवर्याः स्वीयवृत्तौ स्वामिदयानन्दवृत्ति-मनुसरन्तः भरुशब्दमित्थं व्याचक्षते -

**"भरुः** = स्वामी **विष्णुनाम, सुवर्णम् उदधिः**[१७] (इति इमे अर्थाः दयानन्दवृत्तिम् अनुसरन्तः अपि तत्र शब्दशः अनिर्दिष्टत्वाद् अत्र विशेषेण प्रदर्शिताः इति विशेषः)।"

**डॉ.सोमलेखाकृता पीयूषवृत्तिः –** पीयूषवृत्तौ डॉ.सोमलेखावर्या सूत्रस्यैतस्य व्याख्याप्रसङ्गे दयानन्दवृत्तिं प्रदर्श्य उदाहरणानां सिद्धिप्रक्रियामपि प्रदर्शितवती। अत्र प्रक्रियायां शब्दानां हिन्दीभाषया अर्थानपि कोष्ठके निर्दिष्टवतीति अयमपि एतस्याः वृत्तेः अन्याभ्यः वृत्तिभ्यः विशेषः। तद्यथा अवलोकयामः साक्षात् -

---

[१६] *उणादिकोषः – 1/7।। (स्वा. दया. सर. वृत्तिः)। (अपरासु तिसृषु वृत्तिषु अपि अत्र साम्यम् अस्ति।)*

[१७] *उणादिकोषः 1/7, (आ. सत्यव्रतशास्त्रिवर्याणाम् उणादिकोषः वृत्तिः।)*

<u>उदा०[१८] –</u>

**"भरुः** <u>(= स्वामी, विष्णु, सुवर्ण, सागर )</u> – भरति बिभर्ति। भू+उ - 'आर्धधातुकं शेष:' (पा०3.4.114) से 'उ' की आर्धधातुक सञ्ज्ञा 'सार्वधातुकार्धधातुकयोः' (पा०7.3.84) से गुण आदेश 'उरण्रपरः' से रपरत्व। भर्+उ+सु॥" इति

सम्प्रति अस्माकं प्रतिपाद्यविषयत्वेन आचार्यसत्यानन्दवेदवागीशवर्यकृताम् उणादिसूत्र-प्रयोगदीपिकावृत्तिमाश्रित्य भरुशब्दस्य व्याख्याम् उदाहरणानां प्रयोगदीपिकां च प्रस्तौमि-

**<u>आचार्यसत्यानन्दवेदवागीशकृता उणादिसूत्रप्रयोगदीपिकावृत्तिः</u> –**

"यो बिभर्ति पोषयति स भरुः = स्वामी वा।"

इह आचार्याः सत्यानन्दवेदवागीशवर्याः स्वामिदयानन्दवन्निर्वचनं तु दत्तवन्तः एव। अत्र ते भरति बिभर्ति इति स्थाने बिभर्ति पोषयति इति लिखितवन्तः। स च न बहुः विशेषः, परं शाब्दिकभेदस्तु अस्त्येव। इतोऽग्रे वेदवागीशाचार्याः भरु-शब्दस्याऽस्य वाक्ये प्रयोगं प्रदर्शयितुं शास्त्रीयं प्रयोगमप्राप्य स्वयमेव एकपङ्क्त्यात्मकं पद्यमेकं रचयित्वा प्रस्तुतवन्तः। तच्च -

**<u>उणादिसूत्र-प्रयोगदीपिका</u>** – "**भरु**र्भृत्यान् दिशत्येवं कुरुध्वं कर्मचेतसा" इति।

तात्पर्यमिदं यत् भरुः इत्युक्ते स्वामी भृत्यान् (सेवकान्) निर्दिशति यद् यूयं चेतसा (मनसा/मनोयोगेन) कर्म (स्वीयकार्याणि) कुरुध्वम् (कुरुत) इति। इत्थं सूत्रेण ज्ञातस्य शब्दस्य वाङ्मये वाक्ये वा प्रयोगं विलोक्य वैयाकरणः विद्यार्थी वेत्ता वा विशेषसौकर्येण वृत्तिमिमाम् आत्मसात्करोति। प्रयोगे समर्थश्च भवति। उदाहरणस्वरूपं प्रयोगमेकं विलोक्य उदाहरणस्य सार्थकताम् अनुभवति प्रयोक्तुं प्रवर्त्तते च। अग्रेऽपि यथाकालं शास्त्रेषु एतादृशान् प्रयोगानवलोक्य अर्थबोधायापि समर्थो भवति।

अत्र दयानन्दस्वामिनः सूत्रस्यास्य उदाहरणभूतानां भरुशब्दाद् अन्येषामपि शब्दानां वृत्तिमित्थं प्रस्तुतवन्तः। तामहमत्र प्रस्तौमि -

**स्वामिदयानन्दवृत्तिः -**

म्रियन्ते भूतान्यस्मिन्निति **मरुः** निर्जलो देशो वा। शेतेऽसौ **शयुः** शयनशीलः (अजगरो वा)। यस्तरति येन वास**तरुः** वृक्षो वा। चरति चर्यतेऽग्निना भक्ष्यत इति **चरुः** यज्ञपाको वा। त्सरति कुटिलं गच्छतीति **त्सरुः** खड्गमुष्टिर्वा। तन्यन्ते कर्माण्यनेनेति **तनुः** शरीरं स्वल्पं वा। धन्यते धनं प्राप्यतेऽनेनेति **धनुः**

---

[१८] *पीयूष-आख्या उणादिसूत्रवृत्तिः (डॉ. सोमलेखा)।*

शास्त्रं शस्त्रं वा। मिनोति सुशब्दं प्रक्षिपतीति **मयुः** वानरो वा। मज्जति शुद्धो भवतीति **मद्गुः** जलप्लवी पक्षी वा। न्यङ्क्वादित्वात् (द्र-७/३/५३) कुत्वम्, (झलां जश् झशि (अ०८/४/५२) इति सकारस्य दकारः) ॥[१९]

**<u>बाहुलकात् -</u>**गण्डति (यः) स **गण्डुः** वदनैकदेशः, उपधानम् 'तकिया' इति प्रसिद्धं तैलं वा ॥[२०]

आचार्याः सत्यव्रतशास्त्रिवर्याः एतस्य सूत्रस्य भरुशब्दाद् अन्यानि उदाहरणानि अर्थसहितं प्रदर्शितवन्तः इति तेषां वृत्तौ विशेषः। तं च विशेषम् अत्र प्रस्तौमि।

<u>उदाहरणम्:-</u>

**मरुः** = निर्जल-प्रदेशो वा (अजगरसर्पः महमात्रं)। **शयुः** = शयनशीलः, अजगरः सर्पः महानागः। **तरुः** = वृक्षः। **चरुः** = यज्ञपाकः ओदनः। **त्सरुः** = खड्गमुष्टिः, सर्पणकीटः। **तनुः** = शरीरमल्पं वा, कृशः। **मृदुः** = सुकुमारः प्रकृतिः त्वग्। **धनुः** = शास्त्रं शस्त्रं कार्मुकं, धनुःसज्जितम्। **मयुः** = वानरः, किन्नरः, स्वर्गीयः,। संगीतज्ञः मृगः। **मद्गुः** = जलप्लवी पक्षी जलकाकः सर्पविशेषः[२१] ॥

**समालोचनम् –** वस्तुतः अधिकांशतया इमे अर्थाः दयानन्दस्वामिभिः स्वीयनिर्वचनवृत्तौ प्रदर्शिताः अपि, पुनरपि केचन अर्थाः अत्र ततोऽपि अतिरिच्य प्रदर्शिताः आचार्यैः इति पृथक्तया अहम् अत्र उद्धृतवान्। अलम् अतिविस्तरेण अत्र। अत्र सर्वेऽपि वृत्तिकाराः न केवलम् ऐकस्वरेण समहताः अपि तु स्ववृत्तिषु इमां वृत्तिं सादरम् अनुसरन्ति अपि। अपि च स्वयम् इयं वृत्तिः अपि आर्षपरम्परया लौकिक-वैदिकेति उभयविधकोषम् अनुसरति। अत्र विशेषः वदामि चेत् पण्डितप्रवराः युधिष्ठिरमीमांसकवर्याः **चरुः** इति शब्दे एकां पादटिप्पणीं लिखितवन्तः– “निघण्टौ 1/10 मेघनामसु पठ्यते। एवम् ऋग्भाष्ये (1/7/6) दयानन्दोऽप्याह”[२२]। इति अत्र मीमांसकवर्याणां वृत्तौ विशेषः, अन्यत्तु तुल्यमेव।

**डॉ.सोमलेखावृत्तौ विशेषः –**

डॉ.सोमलेखावर्या एतस्य सूत्रस्य भरुशब्दाद् अन्यानि उदाहरणानि अपि इत्थं प्रदर्शितवती-

<u>उदा०[२३] –</u>

**(2) मरुः** <u>(निर्जल देश )</u> — म्रियन्तेऽस्मिन् प्राणिनः मृ+उ - पूर्ववत्।

**(3) शयुः** <u>(शयनशील, अजगर )</u> – शेतेऽसौ शेतेऽत्यर्थः। शी+उ। सार्वधातुकार्धधातुकयोः शे+उ - एचोऽयवायावः, सु ॥

**(4) तरुः** <u>(वृक्ष)</u> – यस्तरति येन वा तरन्ति यं पुष्पफलार्थिनः। तॄ+उ आर्धधातुक-लक्षणगुणः तर्+उ+सु ॥

---

*१९ उणादिकोषः (1/7)*

*२० उणादिकोषः (1/7)*

*२१ उणादिकोषः (1/7) (आचार्यसत्यव्रतशास्त्रिवर्याणां वृत्तिः)*

*२२ उणादिकोषः 1/7 (सं. युधि. मी.) प्रका. – रामलाल कपूर ट्रस्ट, रेवली, सोनीपत हरियाणा (तृ. सं. - वि.सं. 2057, ई.सन् 2000)।*

*२३ पीयूष-आख्या उणादिसूत्रवृत्तिः (डॉ. सोमलेखा)।*

(5) **चरुः** (यज्ञपाक, हवि) – चरति चर्यतेऽग्निना भक्ष्यते। चरन्ति देवपितृभूतानि यस्मात्।

(6) **त्सरुः** (तलवार की मूंठ, सर्पणकीट) - त्सरति कुटिलं गच्छति सर्+उ+सु।

(7) **तनुः** (कृश, शरीर, कोमल, त्वचा) – तन्यन्ते कर्माण्यनेन। तन्+उ+सु॥

(8) **धनुः** (धनुष) – धन्यते धनं प्राप्यतेऽनेन सः धनुःशास्त्रमिति उज्ज्वलवृत्ती धन्+उ+सु।

(9) **मयुः**(= बन्दर, मृग, किन्नर )– मिनोति सुशब्दं प्रक्षिपति मि+उ - गुण, अयादेश, सु। मि+उ - इस दशा में 'मीनाति मीनोति दीङां ल्यपि च' (पा०6.1.51) से आत्व प्राप्त था बाहुलकात् आत्व न हुआ॥

(10) **मद्गुः** (जल पर तैरने वाला पक्षी) – मज्जत्यम्भसि मज्जति शुद्धो भवति मस्ज्+उ - न्यङ्क्वादि गण में पाठ होने से 'न्यङ्क्वादीनां च' (पा०7.3.53) से कुत्व हुआ। मस्ग्+उ 'झलां जश् झशि से सकार के स्थान पर जश् आदेश प्राप्त 'स्थानेऽन्तरतमः' से दकार। मद्ग्+उ+सु।

**विशेष**-बाहुलकात् गण्ड धातु से 'उ' प्रत्यय प्राप्त होता है यथा-

(11) **गण्डुः**(= मुख का एक भाग, तकिया) – गण्डति यः सः गडि "इदितो नुम् धातोः' से नुम् आगम गन्+ड् - अनुबन्धलोप, 'मिदचोऽन्त्यात् परः से अन्त्य अच्से परे नुम्। 'नश्चापदान्तस्य झलि' (पा०8.3.24 ) से नकार के स्थान पर अनुस्वार। 'अनुस्वारस्य ययि परसवर्णः' से अनुस्वार के स्थान पर परसवर्ण गण्ड्+उ+सु॥

इत्थम् इयं पीयूषाख्यावृत्तिः संस्कृतेन सह आर्यभाषया (हिन्दीभाषया) समन्विता अस्ति इति सौकर्यम् अत्र विशेषः।

म्रियन्ते बहवो जलाभावाद्यत्र स **मरुः** निर्जलो देशः सिकताप्रधानः। वासीमरुप्रदेशस्य स्वस्थस्तिष्ठति प्रायशः। सामान्यतया मरुः शब्दः जनाभावं बोधयति परमत्र विदुषां महद्वैदुष्यं दृश्यते जलाभावात् इति शब्दप्रयोगात्। सत्यानन्दशास्त्रिणः अत्र मरुः इति शब्दस्य प्रयोगः आङ्ग्लभाषायाः Desert इत्यस्य कृते कुर्वन्ति। तथा च अग्रे -

यः शेते स **शयुः** = शयनशीलो[१]ऽजगरो[२] वा -'

**युवं हकृशं युवमश्विनाशयुं[१]। युवं विधन्तं विधवामुरुष्यथः' [अश्विनौ] ॥ऋ. १०.४०.८॥**

अत्र ऋग्वेदस्य मन्त्रं प्रदर्श्य शास्त्रिणः शयुशब्दस्य अर्थं शयनशीलार्थे अश्विनीकुमारयोः मन्त्रं प्रदर्श्य अस्मान् अर्थवैशिष्ट्यं बोधयन्ति। तथा च **शयुः[२] शयान एवापि गिरतिश्वापदान् लघून्।** इति निजनिर्मितपद्येन अजगरार्थं शयुशब्देन प्रबोधयति।

अजगरः इत्यर्थः अत्र सूत्रवृत्तौ स्वामिदयानन्दसरस्वतिवर्यैः निदर्शितः। किन्तु शास्त्रेषु तस्य वैदिकः प्रयोगः न उपलब्धः। एतादृश्यां स्थितौ छात्रवत्सलः आचार्यः पं.सत्यानन्दवेदवागीशवर्यः स्वयमेव अजगरार्थे शयु-शब्दस्य प्रयोगात्मकम् एकं पद्यं विरचय्य व्याकरणाध्ययनस्य प्रायोगिकतायै अध्येतॄन् प्रैरयत्। प्रयोगान्ते एव व्याकरणाध्ययनस्य सार्थकत्वम् इति सङ्केतः विद्यते अत्र आचार्याणाम्।

**तरन्ति प्राणिनो यस्योपयोगेन स्वजीवनपारं यान्ति स तरुः वृक्षो वा - 'संजर्भुराणस्तरुभिः सुतेगृभंवयाकिनंचित्तगर्भासुसुस्वरुः। (ऋ. ५.४४.५) तरोराद्युदात्तत्वमत्र छान्दसम्।**

(पाणिनीय-परम्परया व्याकरणशास्त्रस्य अध्ययनेन स्वरशास्त्रस्य अपि सुगमतया बोधः भवति। इत्यपि सङ्केतः वर्त्तते आचार्यस्य वचनेषु अपि च यत्र-तत्र सर्वत्र पदे पदे समुपलभ्यते। इयम् अपि एतस्याः वृत्तेः महती विशेषता वर्त्तते छात्रहितैषिणी।

**चर्यतेऽग्निना भक्ष्यतेऽसौ चरुः यज्ञपाको वा -'अग्नेचरुर्यज्ञियस्त्वाध्यरुक्षत्' (अ. ११.१.१६)**

अत्र चरुशब्दस्य छान्दसप्रयोगः शास्त्रिणः अस्मान् बोधयन्ति, यज्ञार्थं प्रेरयन्ति च।

**त्सर्यते कुटिलाकारो वक्राकारो निर्मीयते यः स त्सरुः = खड्गमुष्टिर्वा 'मामां पद्येनरपसाविदत्त्सरुः' (ऋ. ७.५०.१) त्सरोराद्युदात्तत्वमत्र छान्दसम्।**

अत्र युद्धार्थमत्यन्तोपयोगिनः खड्गनिर्माणविषये यत्त्सरुः निर्मीयते, खड्गमुष्टिः(grip) निर्मीयते तस्य निरूपणं ग्रन्थकारेण क्रियते।

**धृतत्सरुर्भीमसेनोऽरिं जुहुवेरणाजिरे तन्यन्ते विस्तीर्यन्ते कर्माण्यनेनेति तनुः=शरीरम् - 'यद्वोतोकेषु तनुषु प्रजासु यद्वोष्वोषधीष्वप्सु'। [भेषजम्] काठ. सं. ३५.१२**

अमरसिंहप्रणीत-अमरकोषप्रतिपादितशरीरवाचकानां गात्रं वपुः संहननं शरीरं वर्ष्मविग्रहः॥ २.६.६७०॥[२४] एतेषां शब्दानां पर्यायभूतः तनुः शब्दः अत्र ग्रन्थकारेण प्रतिपादितः।

**धन्यते धनं प्राप्यतेऽनेनेति धनुः कार्मुकं वा -**
**'द्राधनुं बृहतीमप्स्वन्तः पवित्रवन्ताचरतः पुनन्ता'। (ऋ. १०.२७.१७)**

धनसम्पत्तिवाचकोऽपि धनुः तथा च कार्मुकं (bow) इत्यनयोः शब्दयोः कृते धनुः शब्दः पर्यायेण युज्यत इति ग्रन्थकार एव अस्मान् बोधयति।

**मिनोति विचित्रशब्दं प्रक्षिपतीति मयुः वानरः पशुविशेषो वा -'मयुं पशुं मेधमग्ने जुषस्व' (य. १३.४७)**
मयुशब्दाद् वानरपक्षिणोः बोधः ज्ञेयः इति ग्रन्थकारः प्रबोधयन्ति।

---

[२४] *अमरकोषः*

**मज्जति शुद्धो भवति स मद्गुः = जलप्लवी पक्षी वा। टुमस्जोँ + उ → मस्ज् + उ 'झलां जश् झशि' (अष्टा. ८.४.५२) इति सस्य दत्वे मद्ज् + उ, न्यङ्क्वादीनां च' (अष्टा. ७.३.५३) इति जस्य कुत्वे मद्गुः - 'मित्राय मद्गून्' [आलभते] य. २४.२२**

तथैव मज्जनार्थकः मद्गुशब्दः ग्रन्थकारः ज्ञापयति।

**बाहुलकात् - गण्डुः। गण्डतीव वदनैकदेश इव वाभातीति गण्डुः = उपधानं (तकिया) वा– शिरोऽधोगण्डुमास्थाप्य सुखं शेते गदाधरः॥** तथा च उपाधानाय गण्डुशब्दं प्रयोक्तुं शक्यते इति ग्रन्थकारः अस्मान् बोधयति।

## संशोधनस्य लाभाः उपसंहारश्च

- शोधपत्रेणानेन व्याकरणाध्ययनस्य सार्थकत्वं वेदानामध्ययनेनैव सफलं भवतीति बोधो भवति।
- एतस्य शोधपत्रस्य माध्यमेन व्याकरणशास्त्रस्य अध्येता सूत्रार्थान् उदाहरणानि च यदा पठति तदैव तस्य प्रयोगज्ञानविषये अपि जागरुकः समर्थः प्रवृत्तश्च भवति।
- यदि कुत्रचित् शास्त्रीयः प्रयोगः नोपलभ्यते चेत्तत्कालमेव स्वयमपि प्रयोगवाक्यनिर्माणे प्रवर्त्तते।
- शोधपत्रेणानेन लाभोऽयं भविता यत् आचार्यस्य वचनेषु बहुत्र स्वरशास्त्रस्य प्रयोगः सङ्केतश्च वर्त्तते। तेन पाणिनीयपरम्परया व्याकरणशास्त्रस्याऽध्ययनेन स्वरशास्त्रस्याऽपि सुगमतया बोधः भवति।
- आचार्येण बहुत्र शास्त्रीयोदाहरणाभावे स्वरचितं पद्यात्मकम् उदाहरणं प्रयुक्तम्। एतेन अध्येता काव्यरचनेऽपि प्रवृत्तः भवितुमर्हति।
- काव्यमाध्यमेनोदाहरणप्रस्तुतिकाले आयुर्वेद-धनुर्वेद-नीतिविषयक-क्रीडादिविषयकानि बहुविधानि तथ्यानि ज्ञानञ्च आचार्यैः अनायासमेव प्रस्तुतम्। शोधपत्रेणानेन तस्मिन् विषये छात्रप्रवृत्तिः सम्भाव्यते।
- उणादिसूत्राणामध्ययनपरम्परायाम् अभिनवप्रयोगस्य अवसराः वर्धिष्यन्ते इति तथ्यम्।

## ॥ सन्दर्भग्रन्थाः ॥

१. अमरकोषः - shorturl.at/csM06
२. उणादिकोषः – आर्यकुमार टीका, आचार्य प्रणवानन्द विश्वनीड न्यास, गुरुकुल पौंधा, देहरादूनम् – 2012
३. उणादिकोषः (सं. युधि. मी.) प्रका. रामलाल कपूर ट्रस्ट, रेवली, सोनीपत हरियाणा (तृ. सं. - वि.सं. 2057, ई.सन् 2000)।

---

४. उणादिकोषः – रामलाल कपुर ट्रस्ट, रेवली, सोनपत, हरियाणा – 2010
५. उणादिकोषः (वेदाङ्गप्रकाशः तत्रत्यः त्रयोदशो भागः– प्रकाशकः - वै. यन्त्रालयः अजयमेरुः)।
६. द्र. पं. युधिष्ठिरमीमांसकवर्यैः सम्पादितः उणादिकोषः (उणा. 1/7)।
७. पाणिनीयशब्दानुशासने उणादिसूत्रप्रयोगदीपिका - पुष्करक्षेत्र जोधपुर- राजस्थानम् **- 2062**
८. पीयूष-आख्या उणादिसूत्रवृत्तिः (डॉ. सोमलेखा)।
९. सं.व्याकरणशास्त्र का इतिहासः – पं. युधिष्ठिरमीमांसकजीकृतः (भाग – 2)।
१०. हरियाणाप्रदेशस्य भिवानिस्थे राजकीय-सनातकोत्तर-महाविद्यालये उपप्राचार्याणां संस्कृतविभागाध्यक्षाणाम् ईश्वरचन्द्रशर्म्मणाम् आत्मजा इयं डॉ.सोमलेखाख्या। (सन्दर्भः–पीयूषाख्या उणादिवृत्तिः–पृ. 479) व्रजजीवनप्राच्यभारतीप्रकाशनमाला– 133. (प्रका. चौखम्बासं. प्रतिष्ठानम्–दिल्ली)।

~~~~~~~~~~~
~~~~~~~~~~~